सुखमयीं कामपि दशां प्राप [ म ]। निर्गत्य च विमोचिताशेषबन्धनः सदृशमाधिपत्यस्य भूतेरुदारतायाः प्रमोदस्य च निजस्य विस्मापितजगत्त्रयं मासमात्रमनुदिवसमुत्सवमकारयत् [ य ]॥

अतिक्रान्ते च षष्ठीजागरे समागते च दशमेऽह्नि कारयित्वा सर्वनगरदेवतायतनेषु पूजाम्, मानयित्वा मित्रज्ञातिवर्गम्, अभ्यर्च्य गुरुजनम्, दत्त्वा समारोपिताभरणाः सवत्साः सहस्रशो गाः सुवर्णं च प्रचुरमारम्भनिःस्पृहेभ्यो विप्रेभ्यः स्वप्ने शतमन्युवाहनो वारणपतिर्दृष्ट इति संप्रधार्य तस्यैव स्वप्नस्य सदृशमात्मीयनाम्न्येकदेशेन समुदायवाच्येन चार्थेन समर्थितानुहारं हरिवाहन इति शिशोर्नाम चक्रे [ र ]॥

क्रमेण च प्रसवदिवसादारभ्य तत्कालोपजातप्रसवाभिरभिनवयौवनोपचितपरिमण्डलस्तनीभिरव्यङ्गनीरोगाङ्गयष्टिभिरिष्टवियोगादिभिर्दुःखैरनुपतप्ताभिराप्ततया निपुणमवधृताभिर्धात्रीभिरनवरतमुपचर्यमाणस्य शुक्लपक्षचन्द्रमस इव प्रतिदिवसोपचीयमानदेहावयवकान्तेरखिलवेदोक्तविधिविदा मेधसेवापरेण स्वयं पुरोधसा

---

आनन्दजनिताश्रुकणा यस्य, तादृशः सन्, अप्रतिपादनीयाम् अवर्णनीयाम्, कामपि किंचिन्नाम्, सुखमयीम् आनन्दमयीम्, दशाम् अवस्थाम्, प्राप अनुबभूव [ म ]।

च पुनः, निर्गत्य प्रसूतिगृहान्निष्क्रम्य, विमोचिताशेषबन्धनः विमोचितानि—कारागाराध्यक्षद्वारा विश्लेषितानि, अशेषाणि—सर्वाणि, बन्धनानि—तस्कराणां निगडनियन्त्रणानि येन तादृशः सन्, निजस्य स्वस्य, आधिपत्यस्य प्रभुत्वस्य स्वामित्वस्य, भूतेः ऐश्वर्यस्य, उदारतायाः दानशीलतायाः, प्रमोदस्य सुतलाभोद्भवजन्यानन्दस्य च, सदृशम् अनुरूपम्, पुनः विस्मापितजगत्त्रयं विस्मापितम्—आश्चर्यमापादितम्, जगत्त्रयं—लोकत्रयं येन तादृशम्, मासमात्रं मासप्रमितम्, मासव्यापकमित्यर्थः, उत्सवं सुतजन्मोत्सवम्, अनुदिवसं प्रतिदिनम्, अकारयत् कारितवान् [ य ]। च पुनः, षष्ठीजागरे षष्ठ्या—देव्याः पूजनार्थं षष्ठ्यां रात्रौ, जागरे—जागरणे अतिक्रान्ते व्यतीते, निष्पन्ने सतीति यावत्, दशमे अहनि दिने, समागते समुपस्थिते च सति, सर्वनगरदेवतायतनेषु सर्वाणि—समस्तानि, यानि नगरस्य देवताऽऽयतनानि—देवमन्दिराणि, तेषु, पूजां देवताऽऽराधनं कारयित्वा, पुनः मित्रज्ञातिवर्गं मित्राणां—सुहृदाम्, ज्ञातीनां—बन्धूनां च, वर्गं—समूहम्, मानयित्वा सत्कृत्य, पुनः गुरुजनं "धर्मज्ञो धर्मकर्ता च सदा धर्मपरायणः। सत्त्वेभ्यो धर्मशास्त्रार्थदेशको गुरुरुच्यते ॥" इत्येवं परिभाषितं मुनिजनम्, अभ्यर्च्य पूजयित्वा, पुनः आरम्भनिःस्पृहेभ्यः लौकिकव्यापारविरतेभ्यः, विप्रेभ्यः ब्राह्मणेभ्यः, समारोपिताभरणाः समारोपितानि—समर्पितानि, आभरणानि—अलङ्करणानि याभ्यस्तादृशीः, सवत्साः वत्ससहिताः, सहस्रशः सहस्रसंख्यकाः, गाः धेनूः, प्रचुरं बहु, सुवर्णं च दत्त्वा, स्वप्ने स्वप्नावस्थायाम्, शतमन्युवाहनः इन्द्रवाहनभूतः, वारणपतिः गजाधिराजः, ऐरावत इत्यर्थः, दृष्टः अवलोकित इति संप्रधार्य शुभफलेन निर्णीय, तस्यैव स्वप्नस्य स्वप्नदृष्टवस्तुनाम्नः, सदृशम्, आत्मनाम्नः मेघवाहनेतिस्वनाम्नः, एकदेशेन वाहनेत्येकदेशावच्छेदेन, सदृशम् पुनः समुदायवाच्येन हरिवाहनेतिसमुदायशब्दाभिधेयेन, अर्थेन हरेरिन्द्रस्य वाहन इत्याकारकेण, समर्थितानुहारं समर्थितः—इन्द्रवाचकहरिशब्दपर्यायविधया मेघवाहनशब्दस्योपस्थित्या तद्वाहनत्वेनोपपादितः, अनुहारः—पितुःसादृश्यं यत्र तादृशम्, आत्मवाहनभावस्य किंचिन्नादृश्यनिबन्धनत्वेन हरिपदोपस्थितमेघवाहनवाहनत्वेन मेघवाहनसादृश्यस्य सुतराम् उपपत्तेरिति भावः। हरिवाहन इति शिशोः बालकस्य, नाम, चक्रे कृतवान्, अत्र सर्वत्र वाक्ये राजेति शेषो बोध्यः [र]। क्रमेण क्रमशः, अन्तःपुरे राजभवने, तस्य शिशोर्हरिवाहनस्य, पञ्च वर्षाणि, अतिचक्रमुः व्यतीतानि। कीदृशस्य ? प्रसवदिवसात् गर्भमोचनदिनात्, आरभ्य प्रभृति, धात्रीभिः उपमातृभिः, अनवरतं निरन्तरम्, उपचर्यमाणस्य निषेव्यमाणस्य। कीदृशीभिः ? तत्कालोपजातप्रसवाभिः सद्यःसूताभिः; पुनः अभिनवयौवनोपचितपरिमण्डलस्तनीभिः अभिनवयौवनेन—नूतनतारुण्यावस्थया, उपचितौ—प्रवृद्धौ, परिमण्डलौ—वर्तुलौ, स्तनौ यासां तादृशीभिः; पुनः अव्यङ्गनीरोगाङ्गयष्टिभिः अव्यङ्गा अविकलाङ्गा, नीरोगा—रोगरहिता च, अङ्गयष्टिः—शरीररूपा यष्टिर्यासां तादृशीभिः; पुनः इष्टवियोगादिभिः अनवरतहारिभिः, दुःखैः, अनुपतप्ताभिः अनभिभूताभिः; पुनः आप्ततया विश्वासपात्रतया, निपुणं दक्षं यथा स्यात् तथा, अवधृताभिः निधारिताभिः। पुनः कीदृशस्य ? शुक्लपक्षचन्द्रमस इव शुक्लपक्षचन्द्रस्य, प्रतिदिवसोपचीयमानदेहावयवकान्तेः प्रतिदिवस-प्रत्यहम्, उपचीयमाना—

निर्वर्तितान्नप्राशनादिसकलसंस्कारस्य समाहृतसमग्रमङ्गलोपकरणाभिरन्तःपुरवृद्धाभिस्त्रिसंध्यामारभ्यमाणावतारणकक्रियस्य सर्वायुर्वेदपारगैर्भिषग्भिर्मन्त्रसिद्धिलब्धप्रसिद्धिभिश्च महानरेन्द्रैरतन्द्रितैर्मुहुर्मुहुः प्रतिजागर्यमाणस्य प्रकटितसंभ्रमाभिरन्तःपुरिकाभिराहूयाहूय गाढमाश्लिष्यमाणस्य स्थानस्थानारोपितमहाप्रभावानेकमणिभिः प्रधानभूषणैः प्रसाधितललितसर्वाङ्गस्य धृतायुधान्तर्वंशिकव्रातसततानुगम्यमानमार्गस्य स्वभावरम्येषु मणिकुट्टिमेषु क्रीडाशैलकटकेषु नन्दनवनप्रासादकेषु कृत्रिमापगापुलिनेषु च कपोलदोलायमानकमनीयकाकपक्षैः क्षितिपालदारकैः सह क्रीडासुखमनेकप्रकारमनुभवतो निरङ्कुशप्रचारस्य पञ्च वर्षाणि तस्यान्तःपुरेऽतिचक्रमुः [ल] ॥

अवतीर्णे च षष्ठे किञ्चिदुपजातदेहसौष्ठवस्य व्यक्तवर्णवचनप्रवृत्तेर्विनयारोपणाय राजा राजकुलाभ्यन्तर एव कारितानवद्यविद्यागृहः सम्यगासेवितगुरुकुलानामवगताखिलशास्त्रमर्मनिर्मलोक्तियुक्तीनामुत्तमान्वयलब्ध-

---

वर्धमाना, अवयवकान्तिः—अङ्गशोभा यस्य तादृशस्य । पुनः अखिलवेदोक्तविधिविदा वैदिकाशेषविधानाभिज्ञेन अपरेण द्वितीयेन, वेधसा ब्रह्मणेवेत्युत्प्रेक्षा, पुरोधसा पुरोहितेन, स्वयम् आत्मना, निर्वर्तितान्नप्राशनादिसंस्कारस्य निर्वर्तिताः—निष्पादिताः, अन्नप्राशनाद्याः संस्कारा यस्य तादृशस्य । पुनः समाहृतसकलमङ्गलोपकरणाभिः समाहृतानि—संगृहीतानि सकलानि सर्वाणि, मङ्गलोपकरणानि—मङ्गलसाधनवस्तूनि याभिस्तादृशीभिः अन्तःपुरवृद्धाभिः अन्तःपुरस्थवृद्धस्त्रीभिः, त्रिसन्ध्यं प्रातर्मध्याह्नसायंरूपासु तिसृषु सन्ध्यासु आरभ्यमाणावतारणक्रियस्य आरभ्यमाणा—अनुष्ठीयमाना अवतारणकक्रिया—लवणाद्यवतारणरूपमाङ्गलिकक्रियाविशेषो यस्य तादृशस्य पुनः सर्वायुर्वेदपारगैः सर्वं—समग्रं, य आयुर्वेदः वेदोपाङ्गभूतं चिकित्साशास्त्रम्, तत्पारगैः—तदन्तगैः, मन्त्रसिद्धिलब्धप्रसिद्धिभिश्च मन्त्रसिद्ध्या लब्धा प्राप्ता, प्रसिद्धिः—लोके ख्यातिर्यैस्तादृशैश्च, अतन्द्रितैः अनलसैः, महानरेन्द्रैः महाभिषग्वादिभिः, विशिष्टनृपैश्च, मुहुर्मुहुः पुनः पुनः, प्रतिजागर्यमाणस्य प्रतिक्रियमाणस्य । पुनः प्रकटितसंभ्रमाभिः प्रकटितः—प्रदर्शितः, सम्भ्रमः वात्सल्यातिशयजन्यमौत्सुक्यं याभिस्तादृशीभिः अन्तःपुरिकाभिः अन्तःपुरस्त्रीभिः आहूयाहूय पुनः पुनराहूय, गाढम् अत्यन्तम्, आश्लिष्यमाणस्य आलिङ्ग्यमानस्य, पुनः स्थानस्थानारोपितमहाप्रभानेकमणिभिः स्थाने स्थाने—तत्तदङ्गे आरोपिताः निवेशिताः, महाप्रभाः—उत्कृष्टप्रभाशालिनः, अनेके मणयो येषु तादृशैः, प्रधानभूषणैः उत्तमालङ्करणैः, प्रसाधितललितसर्वाङ्गस्य प्रसाधितानि—अलङ्कृतानि ललितानि—मनोहरणानि सर्वाणि समस्तानि अङ्गानि—हस्तपादादीनि यस्य तादृशस्य । पुनः धृतयुधान्तर्वंशिकव्रातसततानुगम्यमानमार्गस्य धृताः—तद्रक्षार्थं गृहीताः, आयुधाः—बाणा यैस्तादृशा ये अन्तर्वंशिकाः अन्तःपुररक्षकाः कुब्जवामनादयः, तेषां व्रातेन—समूहेन, सततं सर्वदा, अनुगम्यमानः—अनुस्रियमाणः, मार्गो यस्य तादृशस्य । पुनः स्वभावरम्येषु स्वभावतो मनोहरेषु, मणिकुट्टिमेषु मणिबद्धभूमिषु, क्रीडाशैलकटकेषु क्रीडार्थं ये शैलाः—पर्वताः, तत्कटकेषु तन्नितम्बपार्श्वे, नन्दनवनप्रासादकेषु नन्दनवनं नाम—मेरुपर्वतोपरितनमिन्द्रवनम्, तत्सदृशं यद् वनम्, तत्रत्याः प्रासादाः—राजगृहा एव प्रासादकास्तेषु, यद्वा नन्दयति—आनन्दयतीति नन्दनं यद् वनं तत्रत्यप्रासादेषु प्रसादकेष्विति पाठान्तरे तु नन्दनवनवत्प्रसादजनकाः ये क्रीडाशैलकटकास्तेष्विति विशेषणविधया व्याख्येयम् । च पुनः कृत्रिमापगापुलिनेषु कृत्रिमा—क्रियया निर्वृत्ता, क्रीडार्थमुत्खाता इत्यर्थः, या आपगा—नदी, तत्पुलिनेषु तदीयसैकतप्रदेशेषु कपोलदोलायमानकमनीयकाकपक्षैः कपोलेषु—गण्डस्थलेषु, दोलायमानाः—इतस्ततश्चलन्तः कमनीया मनोहराः, काकपक्षाः—मस्तकाभयपार्श्वलम्बमानाः 'बालानां तु शिखा प्रोक्ता काकपक्षः' इत्युक्तबालकेशपाशा येषां तादृशैः क्षितिपालदारकैः राजशिशुभिः सह अनेकप्रकारं बहुविधम्, क्रीडासुखं क्रीडाजन्यमानन्दम्, अनुभवतः अनुभवगोचरीकुर्वाणस्य । पुनः निरङ्कुशप्रचारस्य निर्बाधगमनस्य, स्वेच्छाचारिण इत्यर्थः [ल] । च पुनः, षष्ठे षष्ठवर्षे अवतीर्णे प्रारब्धे सति, किञ्चिदुपजातदेहसौष्ठवस्य किञ्चिदुपजातम्—ईषदुत्पन्नम्, देहसौष्ठवं—शरीरसौन्दर्यं यस्य तादृशस्य, पुनः व्यक्तवर्णवचनप्रवृत्तेः व्यक्तानां—स्फुटानाम्, वर्णानाम्, वचने प्रतिपादने, प्रवृत्तिर्यस्य तादृशस्य तस्य बालकस्य, विनयारोपणाय विनयशिक्षणाय, राजा मेघवाहनः, राजकुलाभ्यन्तर एव राजधानीमध्य एव, कारितानवद्यविद्यागृहः कारितं—निर्मापितम्, अनवद्यं—मनोहरम्, विद्यागृहं—विद्याध्ययनगृहं येन तादृशः सन्, अहरहः प्रतिदिनम्, विद्यागुरूणां विद्याध्यापकानाम्, समदं सदयम्, अकरोत् कृतवान् । कीदृशानाम् ? सम्य-

जन्मनामसन्मार्गगतिनिसर्गविद्विषां विद्यागुरूणामहरहः संग्रहमकरोत् [ व ]। उपनिन्ये च तेभ्यः शोभने दिनमुहूर्ते निर्वर्तितसमस्तेतिकर्तव्यः स्नातमनुपहतसूक्ष्मक्षौमकल्पितोत्तरासंगमनुलिप्ताङ्गमामोदिना मलयजरसेन प्रत्युरसमामुक्तमुक्ताकलापमुपरचितरोचनातिलकरुचिरललाटमुत्तमाङ्गघटितमालतीमुकुलगण्डमालमवदातवेषतया सविशेषदर्शितादरमभ्युत्थितायाः पुनः सरस्वत्याः सितांशुधवलया शरीरच्छाययेव च्छुरितमात्मजमवनिपतिः [ श ]। पूजाविशेषवर्धितप्रीतयश्च ते लिपिविशेषदर्शनपुरःसरमशेषाण्यपि व्याकरणादीनि शास्त्राणि तस्मै क्रमेणोपादिक्षन् [ प ] ॥

कुमारोऽपि सतताभियुक्ततया गुरूणां नियन्त्रणपरतया पितुरविद्यमानतया दुर्विनीतसंनिधेः स्वाधीनतया सर्वागमोपनिबन्धानां कुशाग्रीयतया च निजबुद्धेरल्पेनैव कालेन तेषामभ्यन्तरोऽभवत् [ स ]। अमुक्ताभियोगश्च दशभिरब्दैश्चतुर्दशापि विद्यास्थानानि सह सर्वाभिरुपविद्याभिर्विदाञ्चकार। कलाशास्त्रं च निरवशेषं

---

**गासेवितगुरुकुलानां** सम्यक्-पूर्णशिक्षापर्यन्तम्, आसेवितं-श्रद्धया सेवितम्, गुरुकुलं यैस्तादृशानाम्; पुनः **अवगताखिलशास्त्रमर्मनिर्मलोक्तियुक्तीनाम्** अवगताः-ज्ञाताः, अखिलशास्त्रमर्मणां-समस्तशास्त्रतात्पर्याणाम्, या निर्मलोक्तय.-निर्दुष्टनिर्वचनानि, तद्युक्तय -तदुपपत्तयो यैस्तादृशानाम्; पुनः **उत्तमाम्नायलब्धजन्मनाम्** उत्तमाम्नाये-सत्कुले, लब्धं जन्म यैस्तादृशानाम्; पुनः **असन्मार्गगतिनिसर्गविद्विषाम्** असन्मार्गे-दुष्पथे, या गतिः-गमनम्, तद्विद्विषां-तद्वैरिणाम् [ व ]। च पुनः, **निर्वर्तितसमस्तेतिकर्तव्यः** निर्वर्तिता-सम्पादिता, समस्ता इतिकर्तव्यता-उपनयनाङ्गक्रियाकलापो येन तादृशः, **अवनिपतिः** राजा, **शोभने** ज्योतिषशास्त्रोक्तशुभलक्षणान्विते **दिनमुहूर्ते** दिने मुहूर्ते च **आत्मजं** पुत्रम्, **तेभ्यः** विद्यागुरुभ्यः, **उपनिन्ये** विधिना समर्पयामास, गुरुकुले वासयामास, कीदृशम्? **स्नातं** कृतस्नानम्; पुनः **अनुपहतसूक्ष्मक्षौमकल्पितोत्तरासङ्गम्** अनुपहतेन-विशुद्धेन, सूक्ष्मेण-सूक्ष्मतन्तुमयेन, क्षौमेण-कौशेयवस्त्रेण, कल्पितः-रचितः, उत्तरासङ्गः-उत्तरीयाच्छादनं येन तादृशम्; पुनः **आमोदिना** सुगन्धाढ्येन, **मलयजरसेन** चन्दनपङ्केन, **अनुलिप्ताङ्गम्** अनुलिप्तशरीरम्; पुनः **प्रत्युरसं** वक्षःस्थले, **आमुक्तमुक्ताकलापम्** आमुक्तः-धृतः, मुक्ताकलापः-मुक्ताहारो येन तादृशम्; पुनः **उपरचितरोचनातिलकरुचिरललाटम्** उपरचितेन-विन्यस्तेन, रोचनातिलकेन,-गोरोचनामयतिलकेन, रुचिरः-मनोहरः, ललाटः-भालस्थलं यस्य तादृशम्; पुनः **उत्तमाङ्गघटितमालतीमुकुलगण्डमालम्** उत्तमाङ्गे मस्तके, घटिता-स्थिता, मालत्याः-तदाख्यलतायाः, यानि मुकुलानि-किञ्चिद्विकसितकलिकाः, तन्मयी गण्डमाला-गण्डस्थललम्बिनी माला यस्य तादृशम्; पुनः **अवदातवेषतया** शुभ्रवेषेण, **सविशेषदर्शितादरं** सविशेषं-सातिशयं यथा स्यात् तथा, दर्शितः-अभिव्यक्त, आदरः-सम्मानो यस्य तादृशम्; अत एव पुरः अग्रे, **अभ्युत्थितायाः** कृताभ्युत्थानायाः, **सरस्वत्याः** विद्याधिष्ठातृदेव्याः, **सितांशुधवलया** चन्द्रवच्छुभ्रया, **शरीरच्छायया** शरीरकान्त्या **छुरितमिव** व्याप्तमिवेत्युत्प्रेक्षा [ श ]। **पूजाविशेषवर्धितप्रीतयः** पूजाविशेषेण-सम्मानातिशयेन, वर्धिता-प्रचुरिता, प्रीतिः-प्रसादो येषां तादृशाः, ते विद्यागुरवः, **लिपिविशेषदर्शनपुरस्सरं** लिपिविशेषाणां-लेख्याक्षररूपाणां ब्राह्म्यादीनामष्टादशभेदानाम् दर्शनपूर्वकं-परिचयपूर्वकम्, **अशेषाण्यपि** सर्वाण्यपि, **व्याकरणादीनि** शब्दशास्त्रप्रभृतीनि शास्त्राणि, **क्रमेण** यथाक्रमम्, **तस्मै** राजपुत्राय, **उपादिक्षन्** उपदिष्टवन्तः [ प ]। **कुमारोऽपि** राजपुत्रोऽपि, **गुरूणां** विद्यागुरूणाम्, **सततं** सर्वदा, **अभियुक्ततया** शिक्षणपरतया, तथा **पितुः** मेघवाहनस्य, **नियन्त्रणपरतया** निग्रहपरतया, तथा **दुर्विनीतसन्निधेः** दुर्जनसम्पर्कस्य, **अविद्यमानतया** असत्त्वेन, तथा **सर्वागमोपनिबन्धानां** सर्वेषां शास्त्रीयग्रन्थानाम्, **स्वाधीनतया** स्वायत्ततया, तथा **निजबुद्धेः** स्वबुद्धेः, **कुशाग्रीयतया** कुशाग्रवदतिसूक्ष्मतया, **अल्पेनैव** कियतैव, **कालेन**, **तेषां** विद्यागुरूणाम्, **अभ्यन्तरः** अन्तर्गतः, तदन्तरङ्गताद्दृशगुणयुक्त इत्यर्थः, **अभवत्** बभूव [ स ]। च पुनः, **अमुक्ताभियोगः** अत्यक्ताभ्यासः, **दशभिः**, **अब्दैः** वर्षैः, **चतुर्दशापि** "षडङ्गवेदाश्चत्वारो मीमांसाऽऽन्वीक्षिकी तथा। धर्मशास्त्रं पुराणं च विद्या एताश्चतुर्दश॥" इत्यादिना चतुर्दशत्वेन सेप्रख्यातानि, **विद्यास्थानानि**, **सर्वाभिः** सकलाभिः, **उपविद्याभिः** काव्यनाटकादिभिः सह, **विदाञ्चकार** अधिजगे। च पुनः, **निरवशेषं** समग्रम्, **कलाशास्त्रम्**, विवेद

विवेद, विशेषतश्चित्रकर्मणि वीणावाद्ये च प्रवीणतां प्राप [ ह ]। भुजबलं चास्य विस्मापितसुरासुरं केसरिकिशोरस्येव सहजं शारीरमभवत्, आरब्धकार्यस्य त्रिभुवनेऽप्यशक्यमविजेयमसाध्यं च किमपि न प्रायेणाभूत् [ क्ष ]। एवं च परिणताशेषशास्त्रमासादितसकलास्त्रविद्यापारमुपलब्धसर्वबुधजनसाधुवादमारूढनवतारुण्यलक्ष्मीलब्धपरिपूर्णसर्वावयवशोभमनुमोदितविद्यागुरुजनेन हरिवाहनमतिक्रान्ते षोडशे वर्षे हर्षनिर्भरो राजा विसर्जितैराकारणाय सादरमुदाराकारवेषैः प्रधानपुरुषैरनुगम्यमानमतिभूयसा विभवेन स्वभवनमानिनाय [ ज्ञ ]॥

निवर्तिताखिलगृहप्रवेशमङ्गलश्चास्य नगरबाह्यायामलघुवप्रालङ्कृतप्राकारलङ्घिताभ्रमदभ्रतोरणस्तम्भमुभयतो निखातशातकुम्भपूर्णकुम्भोद्भासितद्वारदेशमनेकगजतुरङ्गशालाभिरामं कुमारभवनमकारयत् [ अ ]। कर्तुकामश्च यौवराज्याभिषेकं तस्य साहाय्यकार्थमाज्ञाभरसहं प्रज्ञया पराक्रमेणाकारेण विनयेन वचनविन्यासेनोद्यमेना-

---

विदितवान् । च पुनः, विशेषतः विशेषेण, चित्रकर्मणि चित्रणकलायाम्, च पुनः, वीणावाद्ये वीणारूपवाद्यवादनकलायाम्, प्रवीणतां कुशलताम्, प्राप प्राप्तवान् [ह]। च पुनः, अस्य राजपुत्रस्य, भुजबलं बाहुबलम्, विस्मापितसुरासुरं विस्मापिताः-विस्मयमापादिताः, सुराः-देवाः, असुराः-राक्षसाश्च येन तादृशम्, अभवत्, किमिव ? केसरिकिशोरस्य सिंहशिशोः सहजं स्वाभाविकम्, शारीरं शरीरसम्बन्धि, बलमिव । आरब्धकार्यस्य प्रारब्धव्यापारस्य तस्य कुमारस्य, त्रिभुवनेऽपि लोकत्रयेऽपि, किमपि अशक्यं कर्तुमसाध्यम्, अविजेयं विजेतुमशक्यम्, असाध्यं साधयितुमशक्यं च, प्रायेण बाहुल्येन, न, अभूत् आसीत् [ क्ष ]। एवम् अनेन प्रकारेण षोडशे वर्षे अतिक्रान्ते व्यतीते सति, हर्षनिर्भरः आनन्दपूर्णः, राजा मेघवाहनः, अतिभूयसा अत्यधिकेन, विभवेन वित्तवाच्योरभवेन, हरिवाहनं तन्नामकं स्वकुमारम्, स्वभवनं स्वगृहम्, आनिनाय आनीतवान् । कीदृशम् ? परिणताशेषशास्त्रं परिणतानि-परिपक्वानि, दृढमभ्यस्तीकृतानीति यावत्, अशेषाणि-समस्तानि, शास्त्राणि-ग्रन्था यस्य तादृशम्; पुनः आसादितसकलास्त्रविद्यापारम् आसादित-प्राप्तः, सकलायाः-समग्रायाः, अस्त्रविद्यायाः-बाणविद्यायाः, पारः-अन्तो येन तादृशम्; पुनः उपलब्धसर्वबुधजनसाधुवादम् उपलब्धः-प्राप्तः, सर्वेषां बुधजनानां-विद्वज्जनानाम्, साधुवादः-'अयं कुमारः साधुः, विद्यावतामुत्तमः' इत्याकारकः प्रशंसावादो येन तादृशम्; पुनः आरूढनवतारुण्यलक्ष्मीलब्धपरिपूर्णसर्वावयवशोभम् आरूढया-आपन्नया, नवतारुण्यलक्ष्म्या-नवयौवनसम्पदा, लब्धा-प्राप्ता, सर्वेषामवयवानाम्-अङ्गानाम्, शोभा-सौन्दर्यं येन तादृशम्; पुनः विद्यागुरुजनेन, अनुमोदितं गृहं गन्तुमनुमतम्; पुनः आकारणाय तस्याह्वानाय, सादरम् आदरपूर्वकम्, विसर्जितैः प्रेषितैः, उदाराकारवेषैः समृद्धाकारवेषशालिभिः, प्रधानपुरुषैः मन्त्रिजनैः, अनुगम्यमानम् अनुस्रियमाणम् [ ज्ञ ]।

अस्य हरिवाहनस्य, निवर्तिताखिलगृहप्रवेशमङ्गलः निवर्तितं-सम्पादितम्, अखिलं-समग्रम्, गृहप्रवेशाय-कुमारस्य गृहद्वाःप्रवेशगमनाय, मङ्गलं-माङ्गलिकमनुष्ठानं येन तादृशः, राजेति शेषः, नगरबाह्यायां नगराद्बहिर्भूतायां भूमौ, कुमारभवनं कुमारप्रासादम्, अकारयत् निर्मापयत् । कीदृशम् ? अलघुवप्रालङ्कृतप्राकारलङ्घिताभ्रमदभ्रतोरणस्तम्भम् अलघुना-महता, वप्रालङ्कृतेन-परिखोद्धृतमृत्तिकास्तूपभूषितेन, प्राकारेण, लङ्घितानि-अध कृतानि, आभ्रमन्ति-समन्तादितस्ततश्चलन्ति, अभ्राणि-मेघा एव तोरणस्तम्भाः-द्वारस्तम्भा यस्य तादृशम्; मेघादप्युन्नतमित्यर्थः; यद्वा अलघुवप्रालङ्कृतेन प्राकारेण लङ्घितानि अभ्राणि मेघा येन तादृशम्, पुनः अदभ्रतोरणस्तम्भम्-अनल्पद्वारस्तम्भम्; पुनः उभयतः, पार्श्वद्वये, निखातशातकुम्भपूर्णकुम्भोद्भासितद्वारदेशं निखाताः-निखननेन निवेशिताः, ये शातकुम्भस्य-सुवर्णस्य पूर्णकुम्भाः-पूर्णकलशाः, तैरुद्भासितः-उद्दीपितः द्वारदेशो यस्य तादृशम्; पुनः अनेकगजतुरङ्गशालाभिरामम् अनेकेषां-बहूनाम्, गजानां-हस्तिनाम्, तुरङ्गानाम्-अश्वानां च, शालाभिः-गृहैः, अभिरामं-मनोहरम् [ अ ]। च पुनः, तस्य कुमारस्य, यौवराज्याभिषेकं युवराजत्वाभिषेकविधिम्, कर्तुकामः चिकीर्षुः, साहाय्यकार्थं तत्साहाय्यार्थम्, आदरप्रेषितैः आदरेण प्रस्थापितैः, प्रणिधिपुरुषैः अनुचरजनैः, उर्वीपतिकुमारं कमपि राजकुमारम्, अनिशं सततम्, अन्विवेष अन्विष्यति स्म । कीदृशम् ? आज्ञाभरसहम् तदाज्ञापालनभारक्षमम्, प्रज्ञया विवेकेन, पराक्रमेण सामर्थ्येन, आकारेण आकृत्या, विनयेन प्रभुभक्तिमत्तया, वचनविन्यासेन वाक्यरचनाचातुर्येण, उद्यमेन उद्योगेन,

परैश्च त्यागशौर्यगाम्भीर्यादिभिः प्रभुगुणैर्धृतानुकारमुर्वीपतिकुमारमादरप्रेषितैः प्रणिधिपुरुषैरनिशमुर्व्यामन्विषेष [ आ ] ॥

एकदा च तं प्रातरेवास्थानमण्डपोपविष्टमध्यासितविकटहेमविष्टरमुत्खातखड्गैः कृतनिरन्तरावस्थितिभिरूर्ध्वस्थितैराबद्धपङ्क्तिभिः शरीररक्षाधिकारनियुक्तैर्वीरपुरुषैरुभयतः परिक्षिप्तमतिनिकटनिरन्तरासीननिभृतवल्लभराजलोकमभ्यर्णवर्तिनीभिरनवरतचामरोत्क्षेपचलितकलाचिकाकाञ्चनवलयाभिर्वारविलासिनीभिरुपवीज्यमानवपुषमुषःकालसेवागतेन सहप्रविष्टकतिपयप्रणयिराजसूनुना प्रणम्य सविनयमवनीतलोपविष्टेन पितृचरणविन्यस्तनिश्चलदृष्टिना हरिवाहनेनोपास्यमानमागृहीतचित्रकनकवेत्रलता प्रतीहारी प्रविश्य क्षितितलन्यस्तजानुहस्तयुगला सविनयं व्यजिज्ञपत् — 'देव ! संप्रत्येव दक्षिणापथादागतो दक्षिणदण्डाधिपतेर्वज्रायुधस्य प्रसादभूमिर्विजयवेगनामा प्रधानपुरुषः सकलपुरुषार्थसिद्धिसंपादकं देवस्य पादपद्मयुगलं द्रष्टुमुत्कण्ठितो द्वारि तिष्ठतीत्याकर्ण्य देवः प्रमाणम्' [ इ ]। अवनिपालस्तु संस्मृत्य वचनेन तस्याः पूर्ववृत्तमङ्गुलीयकप्रेषणवृत्तान्तमधि-

---

**अपरैः** अन्यैश्च **त्यागशौर्यगाम्भीर्यादिभिः** औदार्यशौर्यगाम्भीर्यप्रमुखैः, **प्रभुगुणैः** राजगुणैः, **धृतानुकारं** गृहीततत्सादृश्यम् [ आ ]।

**एकदा** एकस्मिन् समये, तं राजानम्, **प्रातरेव** प्रातःकाल एव, प्रतिहारी, **प्रविश्य** सभामण्डपान्तः प्रवेशं कृत्वा, **सविनय** विनयपूर्वकम्, **व्यजिज्ञपत्** विज्ञापितवती; कीदृशी ? **आगृहीतचित्रकनकवेत्रलता** आगृहीता, चित्रा-विलक्षणा, कनकस्य-सुवर्णस्य, वेत्रलता-वेत्रयष्टिर्यया तादृशी; पुनः **क्षितितलन्यस्तजानुहस्तयुगला** क्षितितले-भूतले, न्यस्तं निहितम्, जानुयुगलम्-ऊरुजङ्घामध्ययुगलम् हस्तयुगलं च यया तादृशी, कीदृशं तम् ? **आस्थानमण्डपोपविष्टं** सभामण्डपोपविष्टम्; पुनः **अध्यासितविकटहेमविष्टरम्** अध्यासितः-अधिष्ठितः, विकटः-प्रकटः, हेमविष्टरः-सुवर्णमयमासनं येन तादृशम्; पुनः **वीरपुरुषैः** सुभटजनैः, **उभयतः** पार्श्वद्वये, **उपक्षिप्तं** व्याप्तम्। कीदृशैः ? **उत्खातखड्गैः** उद्यतखड्गैः; पुनः **कृतनिरन्तरावस्थितिभिः** अनवरतमवस्थितैः; पुनः **ऊर्ध्वस्थितैः** उत्थितैः; पुनः **आबद्धपङ्क्तिभिः** पङ्क्तिबद्धैः; पुनः **शरीररक्षाधिकारनियुक्तैः** तदीयशरीररक्षणरूपकार्यनियुक्तैः। पुनः **अतिनिकटनिरन्तरासीननिभृतवल्लभराजलोकम्**, अतिनिकटे-अतिसमीपे, निरन्तरम्-अविरतम्, आसीनाः-उपविशन्तः, निभृताः-निश्चलाः, वल्लभराजलोकाः-प्रियनृपजना यस्य तादृशम्; पुनः **वारविलासिनीभिः** वाराङ्गनाभिः, **उपवीज्यमानवपुषम्** उपवीज्यमानं व्यजनचालनैः सेव्यमानम्, वपुः-शरीरं यस्य तादृशम्। कीदृशीभिः ? **अभ्यर्णवर्तिनीभिः** समीपवर्तिनीभिः; पुनः **अनवरतचामरोत्क्षेपचलितकलाचिकाकाञ्चनवलयाभिः** अनवरतं निरन्तरम्, चामरोत्क्षेपेण चामरस्य चमरजातीयमृगविशेषपुच्छरचितव्यजनस्य, उत्क्षेपेण-उद्वेलनेन, चलिताः-दोलिताः, कलाचिकाकाञ्चनवलयाः-कलाचिकायाः-प्रकोष्ठे, स्थिताः सुवर्णमया वलया यासां तादृशीभिः। पुनः कीदृशम् ? **उषःकालसेवागतेन** प्रातःकाले सेवार्थमुपस्थितेन, **कतिपयप्रणयिभिः** कतिपयस्नेहिभिः सह, प्रविष्टस्य सभामण्डपे प्रवेशं कृत्वा, प्रणम्य स्वपितरं राजानमभिवन्द्य, **सविनयं** विनयपूर्वकम्, **अवनीतलोपविष्टेन** पृथ्वीतलोपविष्टेन, पुनः **पितृचरणविन्यस्तनिश्चलदृष्टिना** पितुः-मेघवाहनस्य, चरणयोः, विन्यस्ते-निहिते, निश्चले, दृष्टी नेत्रे येन तादृशेन, **राजसूनुना** राजपुत्रेण, हरिवाहनेन, **उपास्यमानं** सेव्यमानम्। किं व्यजिज्ञपदित्याह — **देव** ! राजन् ! **सम्प्रत्येव** इदानीमेव, **दक्षिणापथात्** दक्षिणदेशात्, **आगतः**, **दक्षिणदण्डाधिपतेः** दक्षिणदेशाधिपतेः, **वज्रायुधस्य** तन्नाम्नः सेनापतेः, **प्रसादभूमिः** प्रेमास्पदम्, **विजयवेगनामा** तत्संज्ञकः, **प्रधानपुरुषः**, **सकलपुरुषार्थसिद्धिसम्पादकं** सकलानाम्-समस्तानाम्, पुरुषार्थानाम्-धर्मार्थकाममोक्षाणाम्, सिद्धेः-निष्पत्तेः, सम्पादकम्-जनकम्, **देवस्य** भवतः, **पादपद्मयुगलं** चरणपद्मद्वयम्, **द्रष्टुम्** अवलोकितुम्, **उत्कण्ठितः** उत्कण्ठावान्, **द्वारि** द्वारदेशे, **तिष्ठति** वर्तते, **इत्याकर्ण्य** इति श्रुत्वा, **देवः** भवान्, **प्रमाणं** स्वकर्तव्ये स्वयम्प्रमाणभूतः [ इ ]।

**अवनिपालस्तु** मेघवाहननृपस्तु **तस्याः** द्वारपालिकायाः, **वचनेन** वाक्येन, **पूर्ववृत्तं** पूर्वनिष्पन्नम्, **अङ्गुलीयकप्रेषणवृत्तान्तम्** अङ्गुलीयकप्रेषणसमाचारम्, **संस्मृत्य** सम्यक् स्मृत्वा, **अधिगतप्रीतिः** प्राप्तप्रमोदः, प्रवेशय तस

गतप्रीतिः 'प्रवेशय' इति तां सादरमवदत् [ ई ]। अथ पार्थिववचनानन्तरमेव सा 'यदाज्ञापयति देवः' इत्युक्त्वा सत्वरमास्थानमण्डपान्निर्जगाम [ उ ]। क्षणमात्रनिर्गतायां च तस्यां द्वारदेशप्रहितलोचनो महीपतिः प्रविशन्तमीषत्क्षामवपुषमुपरचितराजदर्शनोचितवेषमचिरस्नातमपि मार्गवातातपप्लुष्टगात्रत्वक्तया मलिनमिवोपलक्ष्यमाणमतिचिरदर्शनादपरिचितमिव परकीयमिवान्यथाभूतमिव राजकुलमाकलयन्तमवनिपालदर्शनोत्सुकतया च संभाषणगोचरागतानिष्टानपि सकृद्दृष्टानिव राजपुंगवानल्पविस्तरमालपन्तमुत्तरीयपटगोपायितोपायनेन पश्चाद्व्रजता पुरुषेणानुगम्यमानं विजयवेगमपश्यत् [ ऊ ] ॥

दृष्ट्वा च कृतस्मितो दूरादेव संभ्रमवता संभाषणेनैनमनुजग्राह । सरभसोपसृतं च तं कृतप्रणाममासक्तकुट्टिमरजोधूसरललाटजानुकरपुटमुपविष्टमन्तिकोपनीते सविनयमासने प्रीतिप्रसन्नतारकेण चक्षुषा क्षणमात्रमवलोक्य जगाद—'विजयवेग! कुशलमखिलवीरचक्रप्रकाण्डस्य महादण्डाधिपतेः पृथिव्यामप्रतिहतायुधस्य सराजलोकस्य वज्रायुधस्य' [ ऋ ]। स च किञ्चिदुज्झितासनो विनयविरचिताञ्जलिः प्रणम्याब्रवीत्—

---

प्रवेशं कारय, इति, **तां** द्वारपालिकाम्, **सादरम्** आदरपूर्वकम्, **अवादीत्** उक्तवान् [ ई ]। **अथ** अनन्तरम्, **पार्थिववचनानन्तरमेव** पार्थिवस्य-राज्ञः, वचनानन्तरमेव-प्रवेशानुमतिप्रतिपादनानन्तरमेव, **सा** द्वारपालिका, **देवः** भवान्, **यत्**, **आज्ञापयति** आदिशति तत् करोमीति शेषः, इति **उक्त्वा** कथयित्वा, **सत्वरं** शीघ्रम्, **आस्थानमण्डपात्** सभामण्डपात्, **निर्जगाम** निर्गता [ उ ]। **तस्यां** द्वारपालिकायाम्, **क्षणमात्रनिर्गतायां** क्षणमात्रनिष्क्रान्तायां सत्याम्, **द्वारदेशप्रहितलोचनः** द्वारदेशप्रेरितदृष्टिः, **महीपतिः** मेघवाहनः, **विजयवेगं** तन्नामानं प्रधानपुरुषम्, **अपश्यत्** दृष्टवान्। कीदृशम्? **प्रविशन्तम्** अन्तःप्रवेशमाचरन्तम्, **ईषत्क्षामवपुषं** किञ्चित्कृशकलेवरम्; पुनः **उपरचितराजदर्शनोचितवेषम्** उपरचितः-विरचितः, राजदर्शनोचितः-राजदर्शनयोग्यो वेषो येन तादृशम्; पुनः **अचिरस्नातमपि** सद्यःस्नातमपि, **मार्गवातातपप्लुष्टगात्रत्वक्तया** मार्गस्य यो वातः-पवनः, आतपः-सूर्यकिरणश्च, ताभ्यां प्लुष्टा-दग्धा, सन्तप्तेति यावत्, गात्रत्वक्-शरीरत्वक् यस्य तद्भावस्तत्ता तया, **मलिनमिव** **उपलक्ष्यमाणं** प्रतीयमानम्; पुनः **अतिचिरदर्शनात्** अतिदीर्घकालोत्तरमवलोकनात्, **अपरिचितमिव** अज्ञातपरिचयमिव, **परकीयमिव** अन्यदीयमिव, **अन्यथाभूतमिव** प्रकारान्तरप्राप्तमिव, **राजकुलम्**, **आकलयन्तम्** अवगच्छन्तम्; पुनः **अवनिपालदर्शनोत्सुकतया** अवनिपालस्य-राज्ञः, यद्दर्शनं तत्रोत्सुकत्वेन हेतुना, **संभाषणगोचरागतान्** प्रतिभाषणरूपेणागतान्, **इष्टान्** प्रियान्, अपि, असकृद्दृष्टानपीति यावत्, **सकृद्दृष्टानिव** एकवारमेवावलोकितानिव, **राजपुंगवान्** नृपश्रेष्ठान्, **अल्पविस्तरम्** अनतिविस्तरम्, परिमितमिति यावत्, **आलपन्तम्** आभाषमाणम्; पुनः **उत्तरीयपटगोपायितोपायनेन** उत्तरीयपटेन-उत्तरीयवस्त्रेण, गोपायितम्-आच्छादितम्, उपायनं-प्राभृतं येन तादृशेन, पश्चाद् व्रजता पुरुषेण, **अनुगम्यमानम्** अनुस्रियमाणम् [ ऊ ]।

**दृष्ट्वा च** तमवलोक्य च **कृतस्मितः** कृतमन्दहासः **दूरादेव** दूरत एव, **संभ्रमवता** प्रीतिप्रयुक्तत्वराशालिना, **संभाषणेन** आलापेन, **एनं** विजयवेगम्, **अनुजग्राह** अनुगृहीतवान्, स राजेति शेषः । **सरभसोपसृतं** सवेगमन्तिकमागतम्, **तं** विजयवेगम्, **प्रीतिप्रसन्नतारकेण** प्रीत्या-प्रेम्णा, प्रसन्ना-विकसिता, तारका-कनीनिका यस्य तादृशेन, **चक्षुषा** नेत्रेण, **क्षणमात्रं** किञ्चित्कालम्, **अवलोक्य**, **जगाद** उक्तवान् । कीदृशं तम्? **कृतप्रणामं** कृताभिवादनम्; पुनः **आसक्तकुट्टिमरजोधूसरललाटजानुकरपुटम्** आसक्तेन संलग्नेन कुट्टिमरजसा मणिबद्धभूमिधूलिकया, धूसराः-ईषत्पाण्डुवर्णाः, ललाटं भालस्थलम्, जानू-ऊरुजङ्घामध्यभागौ, करपुटः-हस्तपुटश्च यस्य तादृशम्; पुनः **अन्तिकोपनीते** समीपमानीते, **आसने**, **सविनयं** विनयपूर्वकम्, **उपविष्टं** कृतोपवेशनम्। किं जगादेत्याह—**विजयवेग! अखिलवीरचक्रप्रकाण्डस्य** समस्तवीरमण्डलप्रशस्तस्य, पुनः **महादण्डाधिपतेः** महासैन्यसेनाधिनायकस्य, पुनः **पृथिव्यां** जगति, **अप्रतिहतायुधस्य** अकुण्ठितबाणस्य, **सराजलोकस्य** राजजनसहितस्य, वज्रायुधस्य, **कुशलं** भद्रम्, अस्ति किम्? इति शेषः [ ऋ ]। **च** पुनः, **स** विजयवेगः, **किञ्चिदुज्झितासनः** किञ्चित्त्यक्तासनः सन्, **विनयरचिताञ्जलिः** विनय-

'अद्य कुशलम्, यस्मिन्नितरजन इव विसर्जिताहंकारग्रन्थिरियं स्वयमादिशति सकलत्रिभुवनाभिनन्दितप्रभावो देवः, त्वदनुभावप्रसाधिताखिलदुर्वृत्तरिपुराजन्यकेन सैन्याधिपतिना विज्ञापितोऽस्मद्वचनेन पञ्चाङ्गचुम्बितमणिकुट्टिमः प्रणामः, ससंभ्रममवनताश्चार्चयन्ति देवस्य चरणनखचिन्तामणिपरंपरां पुरःप्रकीर्णचूडामणिकिरणचक्रवालबालपल्लवैर्मूर्धभिर्मूर्धाभिषिक्तपार्थिवकुलोद्भवा भवदत्त-भीमभानुवेगप्रभृतयः सपरिजना राजानः' [ ऋ ] । इत्युदीर्य भूयोऽप्यभाषत— 'देव ! बालारुणाभिधानं दिव्यमङ्गुलीयकरत्नं पुरा यत् प्रेषितं देवेन दण्डाधिपस्य तद्धृतं तेन कालमेतावन्तमात्मसंनिधावधुना च करदीकृतसकलदाक्षिणात्यक्षोणिपतिना तेन मत्पार्श्वे प्रहितमिह, मयाप्यद्य निरवद्यमणिभिर्भूषणगणैः समेतमखिलरत्नकोशाध्यक्षस्य महोदधेः ससाक्षिकं समर्पितमित्यवधारयतु दिव्यदृष्ट्या देवः' इति वदन्तं च तमुपजातकौतुको नृपः सस्मितमवादीत्— 'विजयवेग ! कश्चित् कृतस्तेन कश्चिदुपकारः संगरेषु सेनापतेस्त्वदीयस्य' [ लृ ] । स जगाद—

---

सम्पुटितकरः, प्रणम्य प्रणामं कृत्वा, अब्रवीत् । किमित्याह—अद्य अस्मिन् दिने, कुशलम्, अस्तीति शेषः । यस्मिन् दिने, इतरजन इव सामान्यजन इव, विसर्जिताहङ्कारग्रन्थिः विमोचितमहत्त्वाभिमानरूपग्रन्थिः, सकलत्रिभुवनाभिनन्दितप्रभावः समग्रलोकत्रयप्रशंसितप्रभावः, देवः भवान्, स्वयम् आत्मनैव, आदिशति उक्तप्रकारेणाज्ञापयति । त्वदनुभावप्रसाधिताखिलदुर्वृत्तरिपुराजन्यकेन त्वदनुभावेन-त्वत्प्रभावेण, प्रसाधितानि-वशमानीतानि, अखिलानि-सर्वाणि, दुर्वृत्तानि-उद्धतानि, रिपुराजन्यकानि-शत्रुभूतक्षत्रियसमूहा येन तादृशेन, सैन्याधिपतिना सेनानायकेन, वज्रायुधेनेति यावत्, पञ्चाङ्गचुम्बितमणिकुट्टिमः पञ्चाङ्गेन-हस्तद्वय जानुद्वयमस्तकात्मकेन, चुम्बितः-स्पृष्टः,-मणिकुट्टिमः-मणिखचितभूमिर्यस्मिंस्तादृशः, प्रणामः नमस्कारः, अस्मद्वचनेन मद्वाक्येन, विज्ञापितः निवेदितः । मूर्धाभिषिक्तपार्थिवकुलोद्भवाः प्रशस्तक्षत्रियवंशोत्पन्नाः, भवदत्त भीम-भानुवेगप्रभृतयः तदादयः, सपरिजनाः सपरिवाराः, राजानः, ससम्भ्रमं सवेगम्, अवनताः विनीताः सन्तः, देवस्य भवतः, चरणनखचिन्तामणिपरम्परां चरणसम्बन्धिनखरूपचिन्तामणिगणम्, अर्चन्ति आराधयन्ति । कैः ? पुरःप्रकीर्णचूडामणिकिरणचक्रवालबालपल्लवैः पुरः—अग्रे, प्रकीर्णाः-प्रक्षिप्ताः, चूडामणीनां-मुकुटानाम्, यत् किरणचक्रवालं-किरणमण्डलम्, तद्रूपा बालपल्लवाः-नवपल्लवा येषां तादृशैः, मूर्धभिः मस्तकैः [ ऋ ] ।

इति इत्थम्, उदीर्य उक्त्वा, भूयोऽपि पुनरपि, अभाषत उक्तवान्, विजयवेग इति शेषः । किमित्याह—देव ! राजन् !, देवेन श्रीमता भवतेति यावत्, यत्, बालारुणाभिधानं बालारुणनामकम्, दिव्यं सुन्दरम्, अङ्गुलीयकरत्नम् अङ्गुलिभूषणभूतरत्नम्, पुरा पूर्वम्, दण्डाधिपस्य चतुरङ्गसेनानायकस्य, वज्रायुधस्येत्यर्थः, प्रेषितम् उपहृतम्, तत् तेन दण्डाधिपेन, एतावन्तं कालम्, एतावत्कालमभिव्याप्य, आत्मसंनिधौ स्वपार्श्वे, धृतं स्थापितम् । च पुनः, करदीकृतसकलदाक्षिणात्यक्षोणिपतिना करं ददतीति करदाः, तादृशीकृता अधिकृता इति यावत्, दाक्षिणात्याः-दक्षिणजनपदसम्बन्धिनः, क्षोणिपतयः-नृपतयो येन तादृशेन, तेन वज्रायुधेन, अधुना इदानीम्, मत्पार्श्वे मद्द्वारा, इह अत्र, भवत्पार्श्वे इति यावत्, प्रहितं प्रेषितम् । मयापि अद्य अस्मिन् दिने, निरवद्यमणिभिः प्रशस्तमणिमयैः, भूषणगणैः अन्यालङ्करणगणैः, समेतं सहितम्, अखिलरत्नकोशाध्यक्षस्य समस्तरत्नकोशाधिपतेः, महोदधेः तन्नामकव्यक्तेः, ससाक्षिकं-साक्षिवरणपूर्वकम्, समर्पितं दत्तम्, इति एतद्वृत्तम्, दिव्यदृष्ट्या तद्द्वारा, देवः भवान्, अवधारयतु निश्चिनोतु, इति इत्थम्, वदन्तं कथयन्तम्, तं विजयवेगम्, नृपः मेघवाहनः, उपजातकौतुकः उत्पन्नजिज्ञासौत्सुक्यः सन्, सस्मितं-समन्दहासम्, अवादीत् अब्रवीत् । किमित्याह—विजयवेग ! तेन दिव्याङ्गुलीयकेन, संगरेषु युद्धेषु, त्वदीयस्य त्वत्सम्बन्धिनः, सेनापतेः, कश्चित् कोऽपि, उपकारः साहाय्यम्, कृतः, कच्चित् किमु ? [ लृ ] स विजयवेगः

'देव ! स कृतो यं न कश्चिदन्यः करोति, आकर्णयतु देवः, इतः समनन्तरातीतवर्षे निवृत्तास्वविरलजलासारवर्षासु वर्षासु प्रवृत्ते संवर्तितसिन्धुपूरपयसि परिणमत्कलमकपिलायमानकैदारिके बद्धस्तम्बतृणसंबाधग्रामसीम्नि जनितविजिगीषुपार्थिवजनोत्साहे शरत्समये सेनापतिरर्थशास्त्रपरामर्शपूतमतिभिरमात्यैः सह कृतकार्यवस्तुनिर्णयः प्रशस्तेऽहनि समस्तबलपरिवृतश्चरणतलमृदितभुजबलावलिप्तारिभूपालशिरःशेखरं कुसुमशेखरनामानमवनिपालमुन्मूलयितुकामः कुण्डिनपुरात् काञ्चिमण्डलाभिमुखमचलत् [ ल्ह ] । क्रमेण चाबद्धदृढकक्षाभिराटोपकम्पमानविततकेतुवनराजिभिरभ्यर्थनापदेशस्तम्भितोदयमगस्त्यमुनिमभियोद्धुमुच्चलिताभिर्विन्ध्यशिखरावलीभिरिव करिघटाभिरन्धकारितैराज्ञाकृष्टानां दुष्टसामन्तानामनीकैरापूर्यमाणकटकविनिवेशः

---

टिप्पनकम्—वर्षं-वृष्टिः । कैदारिकं-केदारसमूहः [ ल्ह ] । कक्षा-करिमध्यबन्धा, कक्षः-सतृणप्रदेशः । अपदेशः-व्याजम् । अतियोक्तुं-[ अभियातुं- ] गृहीतुम् [ प ] ।

---

**जगाद** उवाच । **देव !** राजन् !, **स** तादृशः, उपकार इति शेषः, **कृतः** विहितः, **यं** यादृशमुपकारम्, **कश्चित्** कोऽपि, **अन्यः** तद्व्यतिरिक्तः, **न करोति**, **देवः** भवान्, **आकर्णयतु** शृणोतु । **इतः** वर्तमानवर्षात्, **समनन्तरातीतवर्षे** अव्यवहितभूतपूर्ववर्षे, परुदित्यर्थः । **अविरलजलासारवर्षासु** अविरलम्-अविच्छिन्नम्, जलस्य आसारवर्षं-धारासम्पाति वर्षणं यासु तादृशीषु, **वर्षासु** वर्षर्तौ, **निवृत्तासु** व्यतीतासु, पुनः **शरत्समये** शरदृतौ, **प्रवृत्ते** प्रारब्धे सति, कीदृशे तस्मिन् ? **संवर्तितसिन्धुपूरपयसि** संवर्तितं-सवोचितम्, सिन्धुपूरस्य-नदीप्रवाहसम्बन्धि, पयो-जलं येन तादृशे; पुनः **परिणमत्कलमकपिलायमानकैदारिके** परिणमद्भिः-परिपाकावस्थामापाद्यमानैः, कलमैः-धान्यविशेषैः, कपिलायमानं-पिङ्गलायमानम्, कैदारिकं-केदारसमूहो यस्मिंस्तादृशे; पुनः **बद्धस्तम्बतृणसंबाधग्रामसीम्नि** बद्धः-उद्गृहीतः, स्तम्बः-काण्डो यैस्तादृशैः, तृणैः, सबाधाः-सकीर्णाः, ग्रामसीमानो यस्मिंस्तादृशे; पुनः **जनितविजिगीषुपार्थिवजनोत्साहे** जनितः-उद्भावितः, विजिगीषूणां-विजयेच्छूनाम्, पार्थिवजनानां-नृपजनानाम्, उत्साहो येन तादृशे । **सेनापतिः** वज्रायुधः, **अर्थशास्त्रपरामर्शपूतमतिभिः** अर्थशास्त्रस्य-अर्थनीतिशास्त्रस्य, परामर्शेन-परिशीलनेन, पूता-परिमार्जिता, मतिः-बुद्धिर्येषां तादृशैः, **अमात्यैः** सचिवैः, **सह**, **कृतकार्यवस्तुनिर्णयः** कृतः, कार्यवस्तूनां-कर्तव्यवस्तूनाम्, निर्णयः-निश्चयो येन तादृशः सन्, **प्रशस्ते** शुभे, **अहनि** दिवसे, **समस्तबलपरिवृतः** समग्रसैन्यपरिवेष्टितः सन्, **चरणतलमृदितभुजबलावलिप्तारिभूपालशिरःशेखरं** चरणतलेन-पादाधस्तलेन, मृदिता-मर्दिता, भुजबलावलिप्तानां-बाहुबलगर्वितानाम्, अरिभूपालानां-शत्रुभूतानां राज्ञाम्, शिरःशेखराः-शिरोमुकुटा येन तादृशम्, **कुसुमशेखरनामानं** तत्संज्ञकम्, **अवनिपालं** राजानम्, **उन्मूलयितुकामः** उच्छेत्तुमिच्छुः, **कुण्डिनपुरात्** कुण्डिनपुराख्यनगरात्, **काञ्चिमण्डलाभिमुखं** काञ्चिदेशाभिमुखम्, **अचलत्** अगच्छत् । [ ल्ह ] । **च** पुनः, **क्रमेण** क्रमशः, **विन्ध्यशिखरावलीभिरिव** विन्ध्यगिरिशिखरपङ्क्तिभिरिव, **आबद्धदृढकक्षाभिः** आ-समन्तात्, बद्धाः, दृढाः-प्रबलाः, कक्षा-बन्धनरज्जवो याभिस्तादृशीभिः, पक्षे आबद्धाः-सन्निवेशिताः, स्थिता इत्यर्थः, दृढाः-सान्द्राः, कक्षाः-लताः शुष्कतृणपुञ्जाः शुष्कवनानि वा यासु तादृशीभिः, पुनः **आटोपकम्पमानविततकेतुवनराजिभिः** आटोपेन अतिशयेन, कम्पमानाः-व्याधूयमानाः, वितताः-विस्तृताः, केतवः-पताका एव, वनराजिः-वनपङ्क्तिः, पक्षे विततकेतुः-विस्तृतद्युतिर्वनराजिर्यासु तादृशीभिः, पुनः **अभ्यर्थनापदेशस्तम्भितोदयम्** अभ्यर्थनापदेशेन-प्रार्थनाव्याजेन, स्तम्भितः-निरुद्धः, उदयः-वृद्धिर्येन तादृशम्, अगस्त्यमुनिम्, **अभियोद्धुम्** अभि-सर्वतोभावेन, योद्धुम्, **अभियोक्तुमिति** पाठे अभियातुमित्यर्थः, **उच्चलिताभिः** उत्थिताभिः, **करिघटाभिः** हस्तियूथैः; **अन्धकारितैः** कृतान्धकारैः, आज्ञया-नियोगेन, आकृष्टानाम्-आहूतानाम्, **दुष्टसामन्तानाम्** दुष्टविषयान्तरवर्तिनृपतीनाम्, **अनीकैः** सैन्यैः, **आपूर्यमाणकटकनिवेशः** आपूर्यमाणः-व्याप्यमानः, कटकनिवेशः-सैन्यावासो येन तादृशः, काञ्चिदेशम्, **अविशत्** प्रविष्टवान् । सुरगिरिस्पर्धयोन्नमन्तं विन्ध्यगिरिमवलोक्य तेनादित्यगतिप्रतिरोधेन जगतामन्धकारमयत्वभयेन तत्पार्श्वं गत्वा यावदहं न प्रत्यागच्छामि तावत् त्वया न वर्धनीयमिति वरमभ्यर्थ्य गतो, ए

काञ्चिदेशमविशत् [ ए ]। कुसुमशेखरोऽपि किञ्चित् सदर्पतया तमुपसर्पितुमनीहमानो हीनबलतया च योधयितुमपारयन् कालातिवाहनमत्र प्राप्तकालमिति चेतसा निश्चित्य संवर्गितसमग्रोपकरणकलापः शास्त्रमार्गानुसारेण दुर्गसंस्कारमनवरतमन्वतिष्ठत् । अन्वहं च दह्यमानासन्नग्रामकक्षामुपहतबहिर्जलाशयामन्तःप्रवेशितप्रभूतधान्यामुपसंगृहीतप्रचुरयवसेन्धनामुद्धृतजीर्णवापीकूपपङ्कां निष्कासितनिःशेषासारलोकां विषमितप्राकारमूलसमभूतलामवतारमार्गदुर्गमीकृतखातवलयां निवारिताविज्ञातजननिर्गमप्रवेशामप्रमत्ताप्तपुरुषगुल्मकप्रतिपन्नसकलप्रतोलिरक्षां पाणिक्षेपणीयपाषाणकूटस्थपुटितप्राकारासन्नस्थलामनियतावस्थानसप्तिसैन्यसततशून्यपर्यन्तां प्राकारशिखरोत्सङ्गसूत्रितविचित्रयन्त्रनिचयां काञ्चिनगरीमकरोत् । अपरित्यक्तसमराभिलाषश्च साहायकधिया सविधवर्तिनामवनिपालानामनुसंधानाय प्रधानदूतानहरहः प्राहिणोत् [ ऐ ]।

पृतनाधिपोऽपि प्रकृत्यमर्षणः प्रणिधिपुरुषेभ्य उपलभ्य तस्य तथाविधं समारम्भमधिकोपजातसंरम्भः

---

प्रत्यागत इति तत्प्रतारणाशङ्कितो विन्ध्यगिरिस्तेन योद्धुं जगामेत्युत्प्रेक्षा [ ए ]। **कुसुमशेखरोऽपि** तन्नामा नृपतिरपि, किञ्चित् **सदर्पतया** सगर्वतया, तं सेनापतिम्, **उपसर्पितुं** शरणमागन्तुम्, **अनीहमानः** अकामयमानः, च पुनः, **हीनबलतया** दुर्बलसैन्यतया, **योधयितुं** युद्धं प्रवर्तयितुम्, **अपारयन्** अशक्नुवन्, **अत्र** अस्मिन् युद्धकार्ये, **कालातिवाहनं** कालातिक्रमणम्, **प्राप्तकालं** प्राप्तावसरम्, उचितमित्यर्थः, इति **निश्चित्य** निश्चयं कृत्वा, **संवर्गितसमग्रोपकरणकलापः** संवर्गितः–संगृहीतः, समग्राणां–समस्तानाम्, उपकरणानां–दुर्गसंस्कारसाधनानाम्, कलापः–समूहो येन तादृशः सन्, **शास्त्रमार्गानुसारेण** शिल्पशास्त्रोक्तरीत्या, अनवरतं–निरन्तरम्, **दुर्गसंस्कारं** तदाक्रमणवारणाय प्राकारपरिखादिपरिमार्जनम्, **अन्वतिष्ठत्** अकरोत्। च पुनः, काञ्चिनगरीम्, **अकरोत्** कृतवान्, कीदृशीम्? **अन्वहं** प्रतिदिनम्, **दह्यमानासन्नग्रामकक्षां** दह्यमानाः–भस्मीक्रियमाणाः, आसन्नाः–समीपवर्तिनो ग्रामाः, कक्षाः–शुष्कवनानि च आसन्नग्रामसम्बन्धिनः कक्षा वा यस्यास्तादृशीम्; पुनः **उपहतबहिर्जलाशयाम्** उपहताः–विनाशिताः, बहिर्जलाशयाः–बहिर्गतास्तडागादयो यस्यास्तादृशीम्; पुनः **अन्तःप्रवेशितप्रभूतधान्याम्** अन्तः–मध्ये, प्रवेशितानि–निवेशितानि, प्रभूतानि–बहूनि, धान्यानि–गोधूमादीनि यस्यास्तादृशीम्; पुनः **उपसंगृहीतप्रचुरयवसेन्धनाम्** उपसंगृहीतानि–एकत्रीकृतानि, प्रचुराणि बहूनि, यवसानि–तृणानि, इन्धनानि–काष्ठानि च यस्या तादृशीम्; पुनः **उद्धृतजीर्णवापीकूपपङ्काम्** उद्धृतः–उद्धृतः, जीर्णानां वापीकूपानां पङ्को यस्या तादृशीम्; पुनः **निष्कासितनिःशेषासारलोकां** निष्कासिताः–बहिष्कृताः, निःशेषाः–समस्ताः, असाराः–बलरहिता लोका यस्यास्तादृशीम्, पुनः **विषमितप्राकारमूलसमभूतलां** विषमितम्–उन्नमितानमितम्, प्राकारमूलभूतं समभूतलं–समस्थलं यस्या तादृशीम्; पुनः **अवतारमार्गदुर्गमीकृतखातवलयां**–अवतारमार्गे–राजधानीप्रवेशमार्गे, दुर्गमीकृत–दुर्गमतापादितम्, खातवलय–परिखामण्डलं यस्या तादृशीम्; पुनः **निवारिताविज्ञातजनप्रवेशनिर्गमा**–निवारितौ–निरुद्धौ, अविज्ञातजनानाम्–अपरिमितजनानाम्, प्रवेश-निर्गमौ गमनागमने यस्यां तादृशीम्; पुनः **अप्रमत्ताप्तपुरुषगुल्मकप्रतिपन्नसकलप्रतोलिरक्षाम्** अप्रमत्तानाम्–अवहितानाम्, आप्तपुरुषाणां–विश्वस्तजनानाम्, गुल्मकेन–चतुरङ्गसैन्येन, प्रतिपन्ना–कर्तव्यत्वेनाङ्गीकृता, सकलानां–समस्तानाम्, प्रतोलीनां–रथ्यानाम्, रक्षा यस्यां तादृशीम्, पुनः **पाणिक्षेपणीयपाषाणकूटस्थपुटितप्राकारासन्नस्थलां** पाणिक्षेपणीयानां–हस्तक्षेपणीयानाम्, पाषाणानां–प्रस्तराणाम्, कूटेन–समूहेन, स्थपुटितं–विषमोन्नामतम्, प्राकारासन्नस्थलं–प्राकारसमीपस्थलं यस्या तादृशीम्; पुनः **अनियतावस्थानसप्तिसैन्यसततशून्यपर्यन्ताम्** अनियतावस्थानैः–अनिश्चितास्थितिकैः, सप्तिसैन्यैः–अश्वारूढसैनिकैः, सततम्, अशून्यः–व्याप्तः, पर्यन्तः–प्रान्तभूर्यस्या तादृशीम्; पुनः **प्राकारशिखरोत्सङ्गसूत्रितविचित्रयन्त्रनिचयां** प्राकारशिखराणां–प्राकारोपरिभागानाम्, उत्सङ्गे–मध्ये, सूत्रितः–सन्निवेशितः, विचित्रयन्त्राणां–विलक्षणयन्त्राणाम्, निचयः–समूहो यस्यां तादृशीम्। च पुनः, **अपरित्यक्तसमराभिलाषः** अपरित्यक्तयुद्धाभिलाषः सन्, **साहायकधिया** साहाय्यदृष्ट्या, **सविधवर्तिनां** समीपवर्तिनाम्, **अवनिपालानां** राज्ञाम्, **अनुसन्धानाय** अन्वेषणाय, **प्रधानदूतान्** मुख्यदूतान्, **अहरहः** प्रतिदिनम्, **प्राहिणोत्** प्रेषितवान् [ ऐ ]। **प्रकृत्यमर्षणः** प्रकृत्या–स्वभावेन, अमर्षणः–असहिष्णुः क्रुद्ध इति

सरभसप्रधाविताभिरनीकिनीभिरागत्य विहितोपरोधः पर्यन्तेषु काञ्च्याः स्कन्धावारममुञ्चत् । कृतासारसंरोधश्च प्रावृषेण्यजलधरव्यूह इव पौरलोकानां महन्तमातङ्कमकरोत् । सामन्ताश्च सज्जीकृतसमदसामजघटा विघटनाय दुर्गस्य तेन कृतविसर्गाः क्रमेण निर्जग्मुः [ ओ ] । आविष्कृताटोपदुष्प्रसहैश्च तैः सह प्राकारशिखरवर्तिनः कुसुमशेखरराजलोकस्यान्योऽन्यकृतनिर्भर्त्सनानि समत्सरसुभटसिंहनादबधिरीकृताभ्यर्णवासिजनकर्णरन्ध्राणि नीरन्ध्रपाषाणक्षेपक्षणमात्रस्थलीकृताम्बरतलानि निर्दयप्रहततूर्यरवपर्यासितकातरकरशस्त्राणि यन्त्रविक्षिप्ताग्नितप्ततैलच्छटाविघटमानविकटपदातिगुम्फानि बद्धस्फरतिरोहितपुरुषखन्यमानप्राकारमूलबन्धानि क्रोधदष्टौष्ठषण्ढश्रूयमाणदुर्गस्थवैरिनिष्ठुराक्रोशानि शिरःस्थितस्फरकफारकप्रार्थ्यमानप्राकारखण्डीप्रवेशानि तृणपूल-

---

टिप्पनकम्—कृतासारसंरोधश्च आसारः-वेगवद्वृष्टिर्मित्रबलं च [ ओ ] । बद्धस्फुरः-चर्मकटी [ औ ] ।

---

यावत्, पृतनाधिपोऽपि सेनापतिरपि, तस्य कुसुमशेखरस्य, तथाविधं तादृशम्, समारम्भं उद्यमम्, प्रणिधिपुरुषेभ्यः चरजनेभ्यः, उपलभ्य विदित्वा, अधिकोपजातसंरम्भः अधिकम्-अत्यन्तम्, उपजातः-उत्पन्नः, संरम्भः-उत्साहजनितवेगो यस्य तादृशः सन्, सरभसप्रधाविताभिः सवेगं धाविताभिः, अनीकिनीभिः सेनाभिः, आगत्य, विहितोपरोधः विहितः-कृतः, उपरोधः-राजधान्या अवरोधो येन तादृशः, काञ्च्याः काञ्चिनगर्याः, पर्यन्तेषु प्रान्तभूमिषु, स्कन्धावारं सैन्यावासम्, अमुञ्चत् अस्थापयत् । च पुनः, प्रावृषेण्यजलधरव्यूह इव प्रावृषेण्यानां-वर्षाकालिकानाम्, जलधराणां-मेघानाम्, व्यूहः-समूह इव, कृतासारसंरोधः कृत आसारस्य-धारासम्पातस्य, पक्षे मित्रसैन्यस्य, संरोधः-अवरोधो येन तादृशः सन्, पौरलोकानां-पुरवासिजनानाम्, महान्तं प्रचुरम्, आतङ्कं त्रासम्, अकरोत् । च पुनः, दुर्गस्य प्राकारस्य, विघटनाय भञ्जनाय, तेन सेनापतिना, कृतविसर्गाः कृतो विसर्गो-विसर्जनं त्याग इति यावत्, येषां तादृशाः, पुनः सज्जीकृतसमदसामजघटाः सज्जीकृता-सन्नाहिता, समदानां-मत्तानाम्, सामजानां-गजानाम्, घटा-समूहो यैस्तादृशाः; सामन्ताः स्वविषयान्तर्वर्तिनो नृपाः, क्रमेण पर्यायेण, निर्जग्मुः निर्गताः, [ ओ ] । च पुनः, आविष्कृताटोपदुष्प्रसहैः आविष्कृतेन-प्रकटितेन, आटोपेन-आडम्बरेण, दुष्प्रसहैः-दुर्धर्षैः, तैः सामन्तैः सह, प्राकारशिखरवर्तिनः प्राकारोपरिवर्तिनः, कुसुमशेखरराजलोकस्य कुसुमशेखरराजजनस्य, प्रतिदिनं दिने दिने, आयोधनानि संग्रामाः, अभवन् बभूवुः । कीदृशानि ? अन्योऽन्यकृतनिर्भर्त्सनानि अन्योऽन्यं-परस्परम्, कृतं निर्भर्त्सनं-प्रहारो येषु तादृशानि; पुनः समत्सरसुभटसिंहनादबधिरीकृताभ्यर्णवासिजनकर्णरन्ध्राणि—समत्सराणां-स्पर्धावताम्, सुभटानां-सुयोधानाम्, सिंहनादेन-सिंहस्येव गर्जनेन, बधिरीकृतानि-बधिरत्वमापादितानि, पूरितानीति यावत्, अभ्यर्णवासिनां-निकटवासिनाम्, जनानां-लोकानाम्, कर्णरन्ध्राणि-कर्णविवराणि येषु तादृशानि; पुनः नीरन्ध्रपाषाणक्षेपक्षणमात्रस्थलीकृताम्बरतलानि नीरन्ध्रपाषाणक्षेपेण अनवरतप्रस्तरप्रक्षेपेण, क्षणमात्रं क्षणमात्रेण वा, स्थलीकृतं-स्थलत्वमापादितम्, अम्बरतलम्-आकाशतलं येषु तादृशानि; पुनः निर्दयप्रहततूर्यरवपर्यासितकातरकरशस्त्राणि निर्दयं-दयारहितम्, तीव्रमित्यर्थः, यथा स्यात् तथा, प्रहतानां-ताडितानाम्, तूर्याणां-वाद्यविशेषाणाम्, रवेण ध्वनिना, पर्यासितानि-करात् प्रच्यावितानि, कातराणां-भीरूणाम्, करशस्त्राणि-हस्तस्थितशस्त्राणि येषु तादृशानि; पुनः यन्त्रविक्षिप्ताग्नितप्ततैलच्छटाविघटमानविकटपदातिगुम्फानि यन्त्रेण विक्षिप्ताः-विकीर्णा या अग्नितप्तस्य तैलस्य छटाः-धारास्ताभिः, विघटमानः-विश्लिष्यमाणः, विकटानां-प्रबलानाम्, पदातीनां-पदगामिनां सैनिकानाम्, गुम्फः-समूहो येषु तादृशानि; पुनः बद्धस्फरतिरोहितपुरुषखन्यमानप्राकारमूलबन्धानि बद्धाः-शिरसि निहिताः, स्फराः-शिरोरक्षकफलका यैस्तादृशैः, तिरोहितैः-प्रच्छन्नैः, पुरुषैः-लोकैः, खन्यमानः-उद्भिद्यमानः, प्राकारस्य मूलबन्धो येषु तादृशानि; पुनः क्रोधदष्टौष्ठषण्ढश्रूयमाणदुर्गस्थवैरिनिष्ठुराक्रोशानि क्रोधेन दष्टौ-कृतदशनौ, ओष्ठौ येषां तादृशैः, षण्ढैः-हस्तजनैः, श्रूयमाणः, दुर्गस्थानां-प्राकारोपरिस्थानाम्, वैरिणाम्, निष्ठुरः-कठोरः, आक्रोशः-स्पर्धाव्यञ्जकः शब्दो येषु तादृशानि; पुनः शिरःस्थितस्फरकफारकप्रार्थ्यमानप्राकारखण्डीप्रवेशानि शिरसिस्थिताः स्फरकाः-शिरोरक्षकफलका

कोल्कानलप्रदीप्तकरिशारिनिःसरद्विहस्तहस्त्यारोहाणि वेगलग्नाश्रितप्तनाराचविलीयमाननृपतिकाञ्चनमुकुटानि कुठारताडितप्रतोलीकपाटनिःस्वनानुसारनिपतत्प्रबलपाषाणवर्षाणि कृतकलकलग्रामीणावलोक्यमानप्रहारविकलविद्रवद्द्विपघटानि भयानकानि च कुतूहलकराणि च क्रोधजनकानि च हासावहानि च विनोदभूतानि च निर्वेददायीनि च प्रतिदिनमायोधनान्यभवन् [ औ ] ॥

एवं च काञ्चीग्रहणरक्षणविधावधिरूढगाढाभिनिवेशयोरभिनवोढदम्पतिकरपल्लवयोरिव तयोः कियानप्यतिपपात कालः । एकदा तु प्राप्ते वसन्तसमये समागतायामनङ्गोत्सवतिथावतीते निशीथिन्याः प्रथमयामे राजद्वारमागतासु द्वितीययामगजघटासु, रसिते प्रमोदावसरतूर्ये, श्रुतावसरतूर्यरवसंभ्रान्तेषु दत्तपर्याणानारुह्योपवाह्यवाजिनो राजद्वारमतिरंहसा प्रधावितेषु परिवर्द्धकेषु यथायामं निरूपितयामिकेषु निजनिजकर्म-

---

**टिप्पनकम्**—उपवाह्यवाजिनः राजवाहनाश्वाः । परिवर्धकाः-अश्वसंवारकाः ।

---

येषां तादृशैः, फारकैः-प्राकारमूलखानकैः, प्रार्थ्यमानः-इष्यमाणः, प्राकारखण्डीप्रवेशः-अवान्तरप्राकारप्रवेशो येषु तादृशानि; पुनः **तृणपूलकोल्कानलप्रदीप्तकरिशारिनिःसरद्विहस्तहस्त्यारोहाणि** तृणपूलकानां-तृणमयपूलकसम्बन्धिभिः, उल्कानलैः-ज्वालाभिभिः, प्रदीप्ताः-सन्तप्ता याः, करिशारयः-गजपर्याणकानि, ताभ्यो निःसरन्तो विहस्ताः-व्याकुलाः, हस्त्यारोहाः-हस्त्यारूढा जना येषु तादृशानि; पुनः **वेगलग्नाश्रितप्तनाराचविलीयमाननृपतिकाञ्चनमुकुटानि** वेगेन लग्नैः-संसक्तैः, अश्रितप्तैः, नाराचैः-बाणैः, विलीयमानानि-द्रवन्ति, नृपतीनां काञ्चनमुकुटानि-सुवर्णमयशिरोऽलङ्कारा येषु तादृशानि; पुनः **कुठारताडितप्रतोलीकपाटनिस्वनानुसारनिपतत्प्रबलपाषाणवर्षाणि** कुठारैः-तदाख्यशस्त्रविशेषैः, ताडितानां प्रतोलीकपाटानां-रथ्याद्वारपिधानानाम्, ये निस्वनाः-शब्दाः, तदनुसारेण निपतत्, पाषाणानां-प्रस्तराणाम्, वर्षं-वृष्टिर्येषु तादृशानि; पुनः **कृतकलकलग्रामीणावलोक्यमानप्रहारविकलविद्रवद्द्विपघटानि** कृतः कलकलः-कोलाहलो यैस्तादृशैः, ग्रामीणैः-ग्रामवासिजनैः, अवलोक्यमाना, प्रहारेण-आघातेन, विकलानां-खिन्नानाम्, विद्रवतां-पलायमानानाम्, द्विपानां-हस्तिनाम्, घटा-मण्डलं येषु तादृशानि; पुनः **भयानकानि** भयङ्कराणि; पुनः **कुतूहलकराणि** दिदृक्षाजनकानि; पुनः **क्रोधजनकानि** अमर्षोत्पादकानि; पुनः **हासावहानि** हासजनकानि; पुनः **विनोदभूतानि** विनोदमयानि; **च** पुनः, **निर्वेददायीनि** ग्लानिजनकानि [ औ ] । **एवं च** अनेन प्रकारेण च, **अभिनवोढदम्पतिकरपल्लवयोरिव** अभिनवोढयोः-नवपरिणीतयोः, दम्पत्योः-जायापत्योः, करपल्लवयोः-पल्लवोपमकोमलकरयोः, **काञ्चीग्रहणरक्षणविधौ** काञ्च्याः-तन्नामकनगर्याः, पक्षे स्त्रीकटिभूषणविशेषस्य, ग्रहणस्य-शत्रुसैन्यकर्तृकाक्रमणस्य, पक्षे पतिकर्तृकाकर्षणस्य, रक्षणस्य-स्वसैन्यकर्तृकतद्वारणस्य, पक्षे जायाकर्तृकतन्निरोधस्य, विधौ-व्यापारे, **अधिरूढगाढाभिनिवेशयोः** अधिरूढः-प्राप्तः, गाढः-अत्यन्तः, अभिनिवेशः-आग्रहो याभ्यां तादृशयोः, **तयोः** स्वसैन्यशत्रुसैन्ययोः, **कियानपि** कतिपयोऽपि, कालः, **अतिपपात** व्यतीतः । **एकदा** एकस्मिन् काले, **वसन्तसमये** चैत्रवैशाखात्मके वसन्तऋतौ, **प्राप्ते** समागते; पुनः **अनङ्गोत्सवविधौ** कामदेवोत्सवविधौ, **समागतायाम्** उपस्थितायाम्; पुनः **निशीथिन्याः** रात्रेः, **प्रथमयामे** प्रथमप्रहरे, **अतीते** व्यतीते सति; पुनः **द्वितीययामगजघटासु** द्वितीययामस्य-द्वितीयप्रहरस्य सम्बन्धिनीषु, तत्प्रहरावच्छेदेन रक्षणकर्मणि नियुक्तासु इत्यर्थः, गजघटासु-हस्तिसैन्येषु, **राजद्वारं** राजभवनद्वारम्, **आगतासु** उपस्थितासु सतीषु; पुनः **प्रमोदावसरतूर्ये** प्रमोदावसरसम्बन्धिवाद्यविशेषे, **रसिते** शब्दिते सति; पुनः **श्रुतावसरतूर्यरवसम्भ्रान्तेषु** श्रुतेन-श्रवणगोचरीकृतेन, अवसरतूर्यरवेण-स्वावसरसूचकवाद्यविशेषध्वनिना, **सम्भ्रान्तेषु** प्राप्तसम्भ्रमेषु, **श्रुतावतरत्तूर्यरवसम्भ्रान्तेष्विति** पाठकल्पे श्रुतेन अवतरता-उद्भवता तूर्यरवेण सम्भ्रान्तेष्विति व्याख्येयम्, **परिवर्धकेषु** अश्ववाहकेषु, **दत्तपर्याणान्** स्थापितपल्ययनान्, **उपवाह्यवाजिनः** स्ववाहनभूताश्वान्, **आरुह्य** अध्यास्य, **अतिरंहसा** अतिवेगेन, राजद्वारं **प्रधावितेषु** धावितुमारब्धवत्सु; पुनः **यथायामं** यथाप्रहरम्, **निरूपितयामिकेषु** निश्चितप्राहरिककार्येषु, **चिरनिरोधखिन्नतनुषु** चिरकालिकैकभावस्थानखिन्नशरीरेषु,

शालाभ्यो निर्गतेषु चिरनिरोधखिन्नतनुषु नियोगिषु, पुरःसरद्वित्रदीपिकेषु व्रजत्सु निजशिबिराणि तारतरकरेणुघण्टाक्वणितसूचितेषु सामन्तेषु, आपणिकसंवृतसायंतनपण्यसंततिषु विकटायमानेषु विपणिवीथीचतुष्पथेषु, शिबिरपर्यन्तबद्धगुल्मकेषु स्थित्वा स्थित्वा युगपदारटत्सु वाह्यतन्त्रपदातिवृन्देषु, विश्रान्तजनरवनिरङ्कुशप्रसरेष्वितस्ततः श्रूयमाणेष्वापानकमृदङ्गध्वनिषु, शयनमन्दिराङ्गणनिहितशय्यानिषण्णे संनिहितकतिपयप्रणयिनि प्रारब्धमदनजागरस्य जायाजनस्य गीतकान्याकर्णयति परितः परित्यक्तविग्रहकथानिरवग्रहमनसि सेनाधिपे, सहसैव संत्रासितकटकलोकस्त्रासतरलमन्दुरातुरङ्गश्रेणिश्रुतः सत्वरापसृतपृष्ठप्रसुप्ताधोरणानामपहायापहाय पांशुतल्पान्युत्तिष्ठतामिभपतीनां चरणशृङ्खलारणितजरठेन जर्जरीकृतः कण्ठगर्जितेन, गजगर्जितारवश्रवणकुपितानां पञ्जरकेसरिणां सरभसकरास्फालितशलाकाप्रतिनादबृंहितेन बहलीकृतः फूत्कृतेन, प्रतिसैन्यमाहतानां प्रसृत-

---

टिप्पनकम्—गुल्मकं-स्थानकम् । निरवग्रहम्-उच्छृङ्खलम् । मन्दुरा-अश्वशाला । काहलः-भम्पकः ।

---

**नियोगिषु** भृत्येषु, **निजनिजकर्मशालाभ्यः** स्वस्वकार्यगृहेभ्यः, **निर्गतेषु** निष्क्रान्तेषु; पुनः **तारतरकरेणुघण्टाक्वणितसूचितेषु** तारतरेण-तीव्रतरेण, करेणूनां-हस्तिनाम्, घण्टाक्वणितेन-घण्टानादेन, सूचितेषु-संकेतितेषु, **सामन्तेषु** स्वविषयान्तर्वर्तिनृपेषु, **पुरःसरद्वित्रदीपिकेषु** पुरः-अग्रे, सरन्तः-गच्छन्तः, द्वित्राः-द्वौ वा त्रयो वा, दीपिकाः-दीपवाहका येषां तादृशेषु, **निजशिबिराणि** स्वसैन्यावासान्, **व्रजत्सु** गच्छत्सु; पुनः **आपणिकसंवृतसायन्तनपण्यसन्ततिषु** आपणिकैः-विक्रेतृभिः, संवृताः-उपसंहृताः, सायन्तनपण्यानां-सायंकाले विक्रयणार्थं प्रस्तुतवस्तूनाम्, सन्ततयः-पङ्क्तयो येषु तादृशेषु, **विपणिवीथीचतुष्पथेषु** विपणिवीथीनाम्-आपणमार्गाणाम्, चतुष्पथेषु चतुर्दिगभिमुखमार्गेषु, **विकटायमानेषु** प्रकटायमानेषु; पुनः **शिबिरपर्यन्तबद्धगुल्मकेषु** शिबिरपर्यन्ते-सैन्यावासप्रान्ते, बद्धगुल्मकेषु-बद्धपङ्क्तिकेषु, **वाह्यतन्त्रपदातिवृन्देषु** वाह्यतन्त्रपदातीनां-बाह्यराष्ट्रपदगामिनाम्, वृन्देषु-समूहेषु, **स्थित्वा स्थित्वा** मुहुर्मुहुः स्वगमनमवरुध्य; **युगपत्** सहैव, **आरटत्सु** शब्दायमानेषु; पुनः **विश्रान्तजनरवनिरङ्कुशप्रसरेषु** विश्रान्तः-निवृत्तो यो जनरवः-लोकशब्दस्तेन निरङ्कुशप्रसरेषु-अप्रतिबद्धप्रचारेषु, **आपानशालामृदङ्गध्वनिषु** आपानशालायाः-मद्यपानसभायाः, मृदङ्गध्वनिषु-वाद्यमानमृदङ्गनादेषु, **इतस्ततः** अभितः, **श्रूयमाणेषु**; पुनः **शयनमन्दिराङ्गणनिहितशय्यानिषण्णे** शयनमन्दिराङ्गणे-शयनभवनप्राङ्गणे, निहितायां स्थापितायाम्, शय्यायां निषण्णे-उपविष्टे, **सन्निहितकतिपयप्रणयिनि** समीपस्थकतिपयस्नेहास्पदजने, **प्रारब्धमदनजागरस्य** प्रारब्धा मदनजागरा-कामदेवोद्देश्यकजागरणं येन तादृशस्य, **जायाजनस्य** स्त्रीजनस्य, **गीतकानि** गानानि, **आकर्णयति** शृण्वति सति, पुनः **परितः** सर्वतः, **परित्यक्तविग्रहकथानिरवग्रहमनसि** परित्यक्ता-निवारिता या, विग्रहकथा-युद्धवार्ता, तया निरवग्रहं-प्रतिबन्धरहितमुच्छृङ्खलमिति यावत्, मनो यस्य तादृशे, **सेनाधिपे** सेनापतौ सति, **महान्** गम्भीरः, **कलकलारवः** कोलाहलध्वनिः, **उदभूत्** प्रादुरभूत्। कीदृशः ? **सहसा** शीघ्रम्, **संत्रासितकटकलोकः** भीषितसैन्यजनः; पुनः **त्रासतरलमन्दुरातुरङ्गश्रेणिश्रुतः** त्रासेन-भयेन, तरला-चपला या, मन्दुरायाः-अश्वशालायाः, तुरङ्गश्रेणिः-अश्वपङ्क्तिः, तया श्रुतः-श्रवणगोचरीकृतः; पुनः **सत्वरापसृतपृष्ठप्रसुप्ताधोरणानां** सत्वरं-शीघ्रम्, अपसृताः-दूरीभूताः, पृष्ठप्रसुप्ताः-पृष्ठभागमधिशयिताः, आधोरणाः-हस्तिपका येषां तादृशानाम्, पुनः **पांशुतल्पानि** उन्नतशय्याः, **अपहाय अपहाय** त्यक्त्वा त्यक्त्वा, **उत्तिष्ठताम्** उत्थानं कुर्वताम्, **इभपतीनां** महागजानाम्, **चरणशृङ्खलारणितजरठेन** चरणशृङ्खलायाः-चरणबन्धनविशेषस्य, रणितेन-शब्देन, जरठेन-वृद्धेन, **कण्ठगर्जितेन** कण्ठकृतगर्जनेन, **जर्जरीकृतः** मिश्रितः; पुनः **गजगर्जितारवश्रवणकुपितानां** गजानां-हस्तिनाम्, यद् गर्जितं-गर्जनम्, तद्रूपस्य आरवस्य-शब्दस्य, श्रवणेन, कुपितानाम्-ईर्ष्यितानाम्, **पञ्जरकेसरिणां** पञ्जरबद्धसिंहानाम्, **सरभसकरास्फालितशलाकाप्रतिनादबृंहितेन** सरभस-सवेगं यथा स्यात् तथा, कराभ्याम्-अग्रिमपादाभ्याम्, आस्फालिताः-आहता याः, शलाकाः-पञ्जरस्थलोहयष्टयः, तासां प्रतिनादेन-प्रतिध्वनिना, बृंहितेन-वर्धितेन, **फूत्कृतेन** फूत्कारेण, बहलीकृतः-वर्धितः; पुनः **प्रतिसैन्यं** प्रतिसेनासम्भवेन, **आहतानां** नादितानाम्, **सन्नाहपटहानां** युद्धार्थकवचपरिधानद्योतकवाद्यविशेषाणाम्, **प्रसृततारतरकाहलाक्वणितकाहलेन** प्रसृतेन-प्रवृद्धेन, तारतरेण-अतितीव्रेण,

तारतरकाहलाक्वणितकाहलेन सन्नाहपटानामुन्नादितः कोलाहलेन, ससंभ्रमोत्थितानां तत इतः प्रधावताम् 'आहरत रथवरूथानि, कल्पयत मातङ्गान्, आरोहत तुरङ्गान्, अङ्गीकुरुत तनुत्राणि गृह्णीत शस्त्राणि' इत्यनवरतमाघोषतामधिकारिपुरुषाणां श्रवणपरुषेण घोषितस्तारतुमुलेन व्याहृतेन, निर्भरभरितसकलत्रिभुवनोदरो महानुदभूत् कलकलारवः [ अं ]। तं च प्रलयकालजृम्भितमहाभैरवाट्टहासभैरवं रवमाकर्ण्य समुपजातरिपुबलावस्कन्दपातशङ्को नायकस्तत्काललब्धावसरेण भृत्येनेव रणरसेन बद्धविकटरोमाञ्चकवचेन प्रेर्यमाणो विजृम्भितातिभीषणभ्रुकुटिसंकटायमानललाटभित्तिरमर्षदष्टदशनच्छदो दक्षिणकरेणाच्छिद्य परिचारकहस्तादुत्पाततडिल्लतानुकारिणं कृपाणमितरपाणिना प्रेङ्खयन् विचित्ररत्नखण्डखचितमन्तककितवकौतुकाष्टापदं प्रकोष्ठनिविष्टमष्टापदफलकमतिबहलेन तिर्यग्विसर्पता खड्गप्रभापटलेन मलिनितमाबद्धविकटकालायसकङ्कटकमिवोरःकपाटमुद्वहन् रभसदूरपातिभिरभिमुखप्रकटितासियष्टिमात्मच्छायामभिहन्तुमिव

---

टिप्पनकम्—उन्नादितः-उच्चैः कृतः। वरूथं-रथगोपनम्। कल्पयत सज्जयत। तारतुमुलेन-उच्चबहलेन [ अं ]। भैरवः-शङ्करः। अवस्कन्दः-धाटकः। अष्टापदं-चतुरङ्गफलकम्। अष्टापदफलकं सुवर्णफरकः। कालायसकङ्कटः-लोहकवचम्।

---

काहलानां-महाढक्कानाम्, क्वणितेन-शब्देन, काहलेन-वर्धितेन अव्यक्तेन वा, **कोलाहलेन** शब्देन, **उन्नादितः** संवर्धितः; पुनः **ससंभ्रमोत्थितानां** सवेगमुत्थितानाम्, **तत इतः** तत्रात्र **प्रधावताम्**-प्रकर्षेण धावताम्, **अधिकारिपुरुषाणां** सैन्याध्यक्षजनानाम्, **श्रवणपरुषेण** कर्णकठोरेण, **तारतुमुलेन** अतिगम्भीरेण, **व्याहृतेन** शब्देन, **घोषितः** पुष्टिमापादितः, कीदृशानां तेषाम्? **रथवरूथानि** रथानां वरूथानि-वर्माणि, रथगुप्तिस्थानानि, परप्रहाररक्षार्थमावृतस्थानानि वा, **आहरत** आनयत अन्वेषयत वा, **मातङ्गान्** हस्तिनः, **कल्पयत** सज्जयत, **तुरङ्गान्** अश्वान्, **आरोहत** पृष्ठावच्छेदेनाधितिष्ठत, **तनुत्राणि** कवचान्, **अङ्गीकुरुत** धारयत, **शस्त्राणि** शस्त्रसमूहम्, **गृह्णीत** उत्थापयत, **इति** एवम्, **अनवरतं** निरन्तरम्, **आघोषताम्** आक्रोशताम्; पुनः **निर्भरभरितसकलत्रिभुवनोदरः** निर्भरम्-अत्यन्तम्, भरितं-पूरितम्, सकलं-समग्रम्, त्रिभुवनस्य-भुवनत्रयस्य, उदरं-मध्यं येन तादृशम् [ अं ]। **प्रलयकालजृम्भितमहाभैरवाट्टहासभैरवं** प्रलयकाले-जगद्विध्वंससमये, जृम्भितः-प्रकटितः, महाभैरवस्य-महाकालस्य, योऽट्टहासः-महाहासः, तद्वद् भैरवं-भयङ्करम्, **तम्** अनुपदोक्तम्, **रवं** शब्दम्, **आकर्ण्य** श्रुत्वा, **समुपजातरिपुबलावस्कन्दपातशङ्कः** समुपजाता-समुत्पन्ना, रिपुबलस्य-शत्रुसेनायाः, अवस्कन्दपातस्य-आक्रमणार्थमागमनस्य, शङ्का यस्य तादृशः सन्, **नायकः** सेनापतिः, **राजकुलात्** राजधानीतः, **अतिजवेन** अतिवेगेन, **निरगच्छत्** निष्क्रान्तः। कीदृशः? **तत्काललब्धावसरेण** तत्क्षणप्राप्तावसरेण, **भृत्येनेव** अनुचरेणेव, **बद्धविकटरोमाञ्चकवचेन** बद्धः-धृतः, विकटः-दृढः, रोमाञ्चकवचः-रोमाञ्चरूपं वर्म येन तादृशेन, **रणरसेन** संग्रामोत्साहेन, **प्रेर्यमाणः** प्रवर्त्यमानः; पुनः **विजृम्भितातिभीषणभ्रुकुटिसंकटायमानललाटभित्तिः** विजृम्भितया-प्रकटितया, अतिभीषणया-अतिभयानिकया, भ्रुकुट्या-नेत्रोपरितनरोमराजिकौटिल्येन, संकटायमाना-संकुचिताकारा, ललाटभित्तिः-ललाटस्थलं यस्य तादृशः; पुनः **अमर्षदष्टदशनच्छदः** अमर्षेण-क्रोधेन, दष्टौ-कृतदशनौ, दशनच्छदौ-ओष्ठौ यस्य तादृशः, **दक्षिणकरेण** दक्षिणहस्तेन, **परिचारकहस्तात्** भृत्यहस्तात्, **उत्पाततडिल्लतानुकारिणं** प्रलयकालिकविद्युल्लतासदृशम्, **कृपाणं** खड्गम्, **आच्छिद्य** बलाद् गृहीत्वा, **इतरपाणिना** वामहस्तेन, **अष्टापदफलकं** सुवर्णमयं फलकं-'ढाल' इति प्रसिद्धमस्त्रप्रतिघातनिवारणसाधनम्, **प्रेङ्खयन्** प्रचालयन्, कीदृशम्? **विचित्ररत्नखण्डखचितं** विचित्रैः-विलक्षणैः, रत्नखण्डैः-रत्नावयवैः, खचितं-व्याप्तम्, पुनः **अन्तककितवकौतुकाष्टापदम्** अन्तकः कितवस्य-यमरूपद्यूतकारस्य, कौतुकाष्टापदं-कुतूहलजनकचतुरङ्गशारिफलकभूतम्, तत्सदृशमित्यर्थः, पुनः **प्रकोष्ठनिविष्टं** प्रकोष्ठे-कूर्पराधोभागे, निविष्टं-स्थितम्; पुनः **अतिबहलेन** अतिविपुलेन, **तिर्यग्विसर्पता** तिरःप्रसरता, **खड्गप्रभापटलेन** कृपाणकान्तिकलापेन, **मलिनितं** मालिन्यमापादितम्, अत एव **आबद्धविकटकालायसकङ्कटमिव** आबद्धः-गृहीतः, विकटः-विषमः, कालायसकङ्कटः-लोहविशेषनिर्मितकवचो येन तादृशमिव, **उरःकपाटं** वक्षःस्थलरूपमर्गलम्, **उद्वहन्** धारयन्, पुनः **रभसदूरपातिभिः** रभसेन-वेगेन, दूरपतनशीलैः, पुनः **अभिमुखप्रकटितासियष्टिम्**

पुरःप्रवर्तितैः पादैराकम्पितक्षितिराक्षेपदूरोच्छलितहारविप्रकीर्णेन नीहारनिकरस्पर्द्धिना किरणविसरेण संवर्द्धयन्निवारातिसैन्यसंदर्शनाय चन्द्रातपमनुमार्गप्रधावितेन संभ्रमस्खलितगतिना वीरलोकेन गमनवेगानिलाकृष्टेनेवानुसृतगतिरतिजवेन राजकुलान्निरगच्छत् [ अः ] । द्वारदेशावस्थितश्चाग्रतो दत्तदृष्टिरतिवेगादापतन्तावतिशयच्छेकपाटहिकताडितपटहनादपटुतरेण दूरादेव खुरपुटध्वनिना प्रकटीकृतावुरःकपाटघटितातनुतनुत्राणौ तत्क्षणविपाटितकाषायपटार्धान्तपीडितोत्तमाङ्गौ गृहीतनिशितप्रासमुष्टिना वामेन किञ्चिदुत्क्षिप्तवल्गौ दक्षिणेन च करतलेन त्रासतरलिताक्षतुरगतिर्यगवलोकितोत्क्षेपां कशामुद्वहन्तावश्वदर्शनसरभसप्रधावितैः शिबिरवेसरैरिव धूसरैः खुररजोभिः पश्चादनुगम्यमानावनवरतदोलायमानजङ्घाकाण्डतया तुरगपृष्ठवर्तिनावपि धावन्ताविवोपलक्ष्यमाणावासन्नवर्तिना शिबिरलोकेन किं किमेतदिति संभ्रान्तेन पृच्छयमानौ मनोरथाविव मनसो जीवाविव जवस्य धारकाविव वायोरुत्सेकाविवौत्सुक्यस्य विगतपर्याणतुरङ्गमाधिरूढौ काचरक-काण्डरात-

---

**टिप्पनकम्**—सम्भ्रमश्च-आकुलता [ अः ] । प्रासः-सेलः [ क ] ।

---

अभिमुखम्-अग्रे, प्रकटिता-आविर्भूता, असियष्टिः-कृपाणदण्डो यस्यां तादृशीम्, आत्मच्छायां स्वच्छायाम्, **अभिहन्तुमिव** अपहर्तुमिव, **पुरःप्रवर्तितैः** अग्रे प्रेरितैः, **पादैः** चरणैः, **आकम्पितक्षितिः** ईषत्कम्पितभूतलः; पुनः **अरातिसैन्यसन्दर्शनाय** शत्रुसैन्यसमवलोकनाय, **चन्द्रातपं** चन्द्रिकाम्, **आक्षेपदूरोच्छलितहारविप्रकीर्णेन** आक्षेपेण-सञ्चालनेन, दूरोच्छलितात्-दूरमुत्पतितात्, हारात्-रत्नमाल्यात्, विप्रकीर्णेन-प्रसृतेन, पुनः **नीहारनिकरस्पर्धिना** हिमौघानुकारिणा, **किरणविसरेण** किरणपुञ्जेन, **संवर्धयन्निव** सम्यग् वर्धयन्निवेत्युत्प्रेक्षा; पुनः **अनुमार्गप्रधावितेन** प्रतिमार्गं कृतातिधावनेन, अत एव **गमनवेगानिलाकृष्टेनेव** धावनवेगोत्थितवायुकृताकर्षणेनेव, **सम्भ्रमस्खलितगतिना** वेगस्खलितगमनेन, **वीरलोकेन** सुभटजनेन, **अनुसृतगतिः** अनुसृतगमनः [ अः ] । च पुनः, **द्वारदेशावस्थितः** द्वारदेशे कृतावस्थितिकः सन्, **अग्रतः** अग्रे, **दत्तदृष्टिः** व्यापारितनयनः, **अज्ञाततमौ** अतिपरिचितौ, काचरक-काण्डरातनामानौ, **अश्ववारौ** अश्वारोहिणौ, **अद्राक्षीत्** दृष्टवान्, स सेनापतिरिति शेषः । कीदृशौ तौ ? **अतिवेगात्** अतिजवात्, **आपतन्तौ** आगच्छन्तौ; पुनः **अतिशयच्छेकपाटहिकताडितपटहनादपटुतरेण** अतिशयेन, छेकः-निपुणो यः, पाटहिकः-पटहाख्यवाद्यविशेषवादनशिल्पी, तेन, ताडितस्य-वादितस्य, पटहस्य, नादन-ध्वनिना, पटुतरेण-स्फुटतरेण, मिश्रितेनेत्यर्थः, **खुरपुटध्वनिना** खुरपुटशब्देन, **दूरादेव** दूरत एव, **प्रकटीकृतौ** प्राकट्यमापादितौ; पुनः **उरःकपाटघटितातनुतनुत्राणौ** वक्षःस्थलधृतविशालकवचौ; पुनः **तत्क्षणविपाटितकाषायपटार्धान्तपीडितोत्तमाङ्गौ** तत्क्षणं-तत्काले, विपाटितस्य-विदारितस्य, काषायपटस्य-कषायरक्तवस्त्रस्य, यद् अर्धम्-अर्धभागः, तस्यान्तेन-अञ्चलेन, पीडितं-घटितम्, उत्तमाङ्गं-शिरो ययोस्तादृशौ; पुनः **गृहीतनिशितप्रासमुष्टिना** गृहीता-धृता, निशितस्य-तीक्ष्णस्य, प्रासस्य-कुन्तस्य, मुष्टिः-मुष्टिधार्यभागो येन तादृशेन, **वामेन**-दक्षिणेतरेण, करतलेन, **किञ्चिदुत्क्षिप्तवल्गौ** किञ्चिद्-ईषद्, उत्क्षिप्ता-उन्नमिता, वल्गा-अश्वमुखस्थरज्जुर्याभ्यां तादृशौ; च पुनः, **दक्षिणेन** वामेतरेण, **करतलेन** हस्ततलेन, **त्रासतरलिताक्षतुरगतिर्यगवलोकितोत्क्षेपां** त्रासेन-भयेन, तरलिते-चञ्चलिते, अक्षिणी-नेत्रे यस्य तादृशेन, तुरगेण-अश्वेन, तिर्यक्-सकटाक्षपातम्, अवलोकितो दृष्टः, उत्क्षेपः-उद्यमनं यस्यास्तादृशीम्, **कशाम्** अश्वताडनीम्, **उद्वहन्तौ** दधानौ; पुनः **अश्वदर्शनसरभसप्रधावितैः** अश्वदर्शनेन, सरभसं-सवेगम्, प्रधावितैः-प्रकर्षेण धावितैः, **शिबिरवेसरैरिव** सैन्यखेचरैरिव, **धूसरैः** तद्वर्णैः, **खुररजोभिः** अश्वशफोद्धतधूलिभिः, **पश्चात्** पृष्ठदेशे, **अनुगम्यमानौ** अनुस्रियमाणौ; च पुनः, **अनवरतदोलायमानजङ्घाकाण्डतया** अनवरतं-सततम्, दोलायमानौ-इतस्ततः सञ्चलन्तौ, जङ्घाकाण्डौ-जङ्घारूपस्तम्भौ ययोस्तादृशतया, **तुरगपृष्ठवर्त्तिनावपि** अश्वपृष्ठाधिष्ठितावपि, **धावन्ताविव** धावनं कुर्वन्ताविव, **उपलक्ष्यमाणौ** प्रतीयमानौ; पुनः **आसन्नवर्त्तिना** निकटवर्तिना, **सम्भ्रान्तेन** सम्भ्रमान्वितेन, **शिबिरलोकेन** सैनिकजनेन, **एतत्** पुरो दृश्यम्, किं किं भवतीति **पृच्छयमानौ** जिज्ञासा ज्ञाप्यमानौ; पुनः **मनसः** हृदयस्य, **मनोरथाविव** अभिलाषभूताविव; पुनः **जवस्य** वेगस्य, **जीवाविव** प्राणभूताविव; पुनः **वायोः** पवनस्य, **धारकाविव** नियामकाविव; पुनः

नामानौ प्रज्ञाततमावश्ववारावद्राक्षीत्, अप्राक्षीच सत्वरम्–'अरे!, किमेष कटकक्षोभः' इति [ क ]। अथ तौ समीपमेत्य त्यक्ततुरगावुरगाविव सर्वाङ्गस्पृष्टभूतलौ प्रणम्य युगपदूचतुः—'दण्डनाथ! संप्रत्येव संनद्धसकलकरितुरङ्गयोधमावद्धवीरपट्टपादातभीषणमरुणनेत्रपताकापटपल्लवितरथनिरन्तरमुत्तरप्रतोलिमार्गेण निर्गतं काञ्च्याः कृतसमस्तसमरसामग्रीकमहितानामनीकममर्षपरवशं च पौरुषावलेपेन तृणलघूनस्मान् मन्यमानमतिजवेन प्राप्तमभ्यर्णेऽस्य कटकस्य वर्तते इति श्रुत्वा प्रभुः प्रमाणम्' इत्युक्त्वा विरेमतुः [ ख ] ॥

सेनापतिस्तु तं तयोराकर्ण्य कर्णामृतकल्पं जल्पमुपजातहर्षो रणरसोत्कर्षपुष्यत्पुलकजालकः सजलजीमूतस्तनितगम्भीरेण स्वरेण तत्क्षणादिष्टकिङ्करससंभ्रमास्फालितमावद्धस्फुटप्रतिशब्दमिव दर्शयन् ध्वनन्तमाजिदुन्दुभिमभ्यर्णचरमनुचरगणं रथानयनार्थमादिक्षत्। नचिराच्च तेनान्तिकमुपनीतमुभयतः प्रचलदतिचारुपत्रमुदरविनिहितमहाहिभीषणानेकास्त्रं पत्ररथराजमिव रथाङ्गपाणिरध्यास्त रथं यथासंनिहितेनात्मसैन्येनानु-

---

टिप्पनकम्—वीरपट्टः–चीरिका [ ख ]। ससम्भ्रमं–सादरम्। प्रचलदतिचारुपत्रम् एकत्र पत्रम्–अश्वः, अन्यत्र पत्राणि–पिच्छानि।

---

औत्सुक्यस्य उत्सुकतायाः, विलम्बासहिष्णुताया इत्यर्थः, उत्सेकाविव उन्नतिस्वरूपाविव; पुनः विगतपर्याणतुरङ्गं' विगतं–नष्टम्, पर्याणम्–उपरितनसुखासनं यस्मिन् तादृशमश्वम्, अधिरूढौ आरूढौ। च पुनः, सत्वरं शीघ्रम्, अप्राक्षीत् पृष्टवान्, अरे! इति स्वन्यूनसम्बोधनम्, किमित्याह—एषः अयम्, कटकक्षोभः कटकस्य–सेनायाः, क्षोभः–सम्भ्रमः, किम्? किंहेतुकः [ क ]। अथ प्रश्नानन्तरम्, त्यक्ततुरगौ त्यक्ताश्वौ, तौ काचरक–काञ्चरातनामानौ अश्ववारौ, समीपमेत्य निकटमागत्य, उरगाविव सर्पाविव, सर्वाङ्गस्पृष्टभूतलौ सर्वाङ्गालिङ्गितभूतलौ सन्तौ, प्रणम्य प्रणामं कृत्वा, युगपत् एककालम्, ऊचतुः उक्तवन्तौ। किमित्याह—दण्डनाथ! हे चतुरङ्गसेनापते!, सम्प्रत्येव इदानीमेव, अहितानां शत्रूणाम्, अनीकं सैन्यम्, अस्य कटकस्य सैन्यस्य, अभ्यर्णे निकटे, अतिजवेन अतिवेगेन, प्राप्तम् उपस्थितम्, वर्तते, इति श्रुत्वा श्रवणगोचरीकृत्य, भवन्तः यूयम्, प्रमाणं किंस्तैव्यनिर्णायकाः, इत्युक्त्वा विरेमतुः विरामं प्राप्तौ। कीदृशं तत्? सन्नद्धसकलकरितुरङ्गयोधं सन्नद्धाः–वर्मिताः, सकलाः–समग्राः, करिणः–हस्तिनः, तुरङ्गाः–अश्वाः, योधाः–सुभटाश्च यस्मिंस्तादृशम्; पुनः आवद्धवीरपट्टपादातभीषणम् आवद्धः–धृतः, वीरपट्टः–वीरचिह्नभूतपट्टो ध्वजो येन तादृशेन, पादातेन–पदातीनां पदगामिसैनिकानां समूहेन, भीषणं–भयानकम्; पुनः अरुणनेत्रपताकापटपल्लवितरथनिरन्तरम् अरुणानां–रक्तानाम्, नेत्रपताकानां–नेत्राकारविशिष्टवस्त्रनिर्मितध्वजानाम्, पटैः–वस्त्रैः, पल्लविताः–व्याप्ता ये रथास्तैः, निरन्तरं–संकीर्णम्; पुनः काञ्च्याः तदाख्यप्रकृतनगर्याः, उत्तरप्रतोलिमार्गेण उत्तररथ्यात्मकमार्गेण, निर्गतं निष्क्रान्तम्; पुनः कृतसमस्तसमरसामग्रीकं कृता–सम्पादिता, समस्ता समरसामग्री–युद्धसामग्री यस्मिंस्तादृशम्; पुनः अमर्षपरवशम् ईर्ष्याधीनम्; पुनः पौरुषावलेपेन पराक्रमगर्वेण, अस्मान्, तृणलघून् तृणवत्तुच्छान्, मन्यमानम् [ ख ] ॥

सेनापतिस्तु सेनानायकस्तु, तयोः अश्ववारयोः, कर्णामृतकल्पं श्रवणामृतप्रायम्, जल्पं वचनम्, आकर्ण्य श्रुत्वा, उपजातहर्षः उत्पन्नानन्दः, रणरसोत्कर्षपुष्यत्पुलकजालकः रणरसस्य–रणानुरागस्य, उत्कर्षेण–औत्कट्येन, पुष्यत्–पुष्टिमापाद्यमानम्, पुलकजालं–रोमाञ्चपुञ्जो यस्य तादृशः, सजलजीमूतस्तनितगम्भीरेण सजलस्य–जलपूर्णस्य, जीमूतस्य–मेघस्य, यत् स्तनितं–गर्जितं तद्वद्, गम्भीरेण, स्वरेण, तत्क्षणादिष्टकिङ्करससम्भ्रमास्फालितं तत्क्षणं–तत्कालम्, आदिष्टैः–आज्ञप्तैः, किङ्करैः–भृत्यैः, ससम्भ्रमं–सवेगम्, आस्फालितं–ताडितम्, ध्वनन्तं नदन्तम्, आजिदुन्दुभिं सङ्ग्रामदुन्दुभिम्, आवद्धस्फुटप्रतिशब्दमिव धृतस्पष्टप्रतिध्वनिमिव, दर्शयन् प्रत्याययन्, अभ्यर्णचरं निकटवर्तिनम्, अनुचरगणं भृत्यवृन्दम्, रथानयनार्थं रथोपस्थापनार्थम्, आदिक्षत् आदिष्टवान्। च पुनः, नचिरात् शीघ्रम्, तेन अनुचरगणेन, अन्तिकं निकटम्, उपनीतम् उपस्थापितम्; पुनः उभयतः उभयपार्श्वे, प्रचलदतिचारुपत्रं प्रचलन्ती अतिचारुणी–अतिमनोहरे, पत्रे–वाहने, पक्षे पक्षौ यस्य तादृशम्; पुनः

गम्यमानो युगपदाहतानां कुपितयमहुङ्कारानुकारिभाङ्कारभैरवमतिगम्भीरमारसन्तीनां समरढक्कानां ध्वनितेन पातयन्निव सवन्धनान्यरातिहृदयानि, तारतरव्याहारिणां वन्दिवृन्दानां हृदयहारिणा जयशब्दाडम्बरेण मुखरिताम्बरः शिबिरान्निरगच्छत् । कृतव्यूहविरचनश्च समरसंक्षोभक्षमायामुपान्तभूमावस्थात् [ ग ] ॥

अथाकर्णितसमरभेरीनिनादजृम्भितानन्दाः सरसरोचनारचितललाटतिलकबिन्दवो दूर्वाप्रवालदन्तुरैः शिरोभिरभ्यर्णचारिचारणोच्चार्यमाणवीर्यसंपदस्त्वरितपदसंचाराभिरागत्यागत्य करिघटाभिः समन्ततः ससामन्तचक्राः परिवारयांचक्रुरेनं सेनापतयः, प्रत्येकं पातितस्निग्धदृष्टिना च तेन सप्रसादमादिष्टाः प्रणम्य निजनिजस्थानेषु तस्थुः [ घ ] ॥

अथ निशीथानुभावभास्वरेण विषममुन्मीलता निमीलता च दीपिकानिवहेन पिशुनितममञ्जुगुञ्ज-

---

टिप्पनकम्—उदरविनिहितमहाहिभीषणास्त्रम् एकत्र महाहय एव भीषणानेकास्त्राणि, अन्यत्र महाहिवत् । पत्त्ररथराजं गरुडम् [ ग ] ।

---

**उदरविनिहितमहाहिभीषणानेकास्त्रम्** उदरे—मध्यभागे, विनिहितानि—स्थापितानि, महाहिभीषणानि—महासर्पवद् भयानकानि, अस्त्राणि यस्मिन्, पक्षे महाहय एव—महासर्पा एव, भीषणानि अस्त्राणि येन तादृशम्, **रथाङ्गपाणिः** रथाङ्गं—चक्रम्, पाणौ—हस्ते यस्य स विष्णुः, **पत्त्ररथराजमिव** पत्त्राणि—पक्षा एव, रथाः—रथा इव गमनसाधनानि येषां ते पत्त्ररथाः—पक्षिणः, तेषां राजा—गरुडः, तमिव, रथम्, **अध्यास्य** अधिरुह्य, **यथासन्निहितेन** यावान् सन्निहित आसीत् तावता, **आत्मसैन्येन** स्वसैनिकेन, **अनुगम्यमानः** अनुस्रियमाणः, **युगपदाहतानां** युगपत् ताडितानाम्, **कुपितयमहुङ्कारानुकारिभाङ्कारभैरवं** कुपितस्य—क्रुद्धस्य, यमस्य यो हुङ्कारस्तदनुकारिणा, भाङ्कारेण—ध्वनिविशेषेण, भैरवं—भीषणम्, तथा **अतिगम्भीरम्** अतिस्फुटं च यथा स्यात् तथा, **आरसन्तीनाम्** आनदन्तीनाम्, **समरढक्कानां** संग्रामवाद्यविशेषाणाम्, **ध्वनितेन** ध्वनिना, **सबन्धनानि** भयाद्विनियन्त्रितानि, **अरातिहृदयानि** शत्रुहृदयानि, **पातयन्निव** भ्रंशयन्निव; पुनः **तारतरव्याहारिणाम्** अत्युच्चैरुच्चारिणाम्, **वन्दिवृन्दानां** स्तुतिपाठकसमूहानाम्, **हृदयहारिणा** हृदयप्रियेण, **जयशब्दाडम्बरेण** जयकाराडम्बरेण, **मुखरिताम्बरः** ध्वनितगगनमण्डलः, **शिबिरात्** सैन्यावासात्, **निरगच्छत्** निष्क्रान्तः । **च** पुनः, **कृतव्यूहविरचनः** कृता—विहिता, व्यूहस्य सैन्यसन्निवेशविशेषस्य, विरचना येन तादृशः सन्, **समरसंक्षोभक्षमायां** संग्रामसञ्चारसमर्थायाम्, **उपान्तभूमौ** पर्यन्तभूमौ, **अस्थात्** स्थितवान् [ ग ] ॥ **अथ** तत्र स्थित्यनन्तरम्, **आकर्णितसमरभेरीनिनादजृम्भितानन्दाः** आकर्णितेन—श्रुतेन, समरभेरीनिनादेन—संग्रामढक्काध्वनिना, जृम्भितः—प्रकटितः, आनन्दो येषां तादृशाः; पुनः **सरसरोचनारचितललाटबिन्दवः** सरसया—आर्द्रया, रोचनया—गोरोचनया, रचिताः—कल्पिताः, ललाटतिलकबिन्दवः—ललाटे तिलकरेखा यैस्तादृशाः; पुनः **दूर्वाप्रवालदन्तुरैः** दूर्वाख्यतृणविशेषनूतनदलव्याप्तैः, **शिरोभिः** मस्तकैः, उपलक्षिताः; पुनः **अभ्यर्णचारिचारणोच्चार्यमाणवीर्यसम्पदः** अभ्यर्णचारिभिः—निकटगामिभिः, चारणैः—बन्दिभिः, उच्चार्यमाणाः—स्तूयमानाः, वीर्यसम्पदः—पराक्रमसम्पत्तयो येषां तादृशाः, **ससामन्तचक्राः** स्वविषयान्तर्वर्तिनृपसमुदायसहिताः, सेनापतयः, **त्वरितपदसञ्चाराभिः** त्वरितः—शीघ्रः, पदसञ्चारः—चरणसञ्चारो यासां तादृशीभिः, **करिघटाभिः** हस्तियूथैः, **आगत्यागत्य** उपस्थायोपस्थाय, **समन्ततः** सर्वतः, **एनं** चतुरङ्गसेनानायकम्, **परिवारयाञ्चक्रुः** परिवेष्टन्ते स्म । **च** पुनः, **प्रत्येकं** एकैकस्मिन्, **पातितस्निग्धदृष्टिना** पातिता—प्रक्षिप्ता, स्निग्धा—स्नेहार्द्रा, दृष्टिर्येन तादृशेन, **तेन** सेनानायकेन, **सप्रसादं** प्रसन्नतापूर्वकम्, **आदिष्टाः** आज्ञप्ताः सन्तः, **प्रणम्य** नमस्कृत्य, **निजनिजस्थानेषु** स्वस्वस्थानेषु, **तस्थुः** स्थिताः [ घ ] ॥ अथ अनन्तरम्, **प्रतिपन्थिबलं** शत्रुसैन्यम्, **चक्षुषः पथि** दृष्टिमार्गम्, **अढौकत** आगमत् । कीदृशम् ? **निशीथानुभावभास्वरेण** निशीथानुभावेन—मध्यरात्रप्रभावेण, भास्वरेण—प्रकाशमानेन; पुनः **विषमं** विषमप्रकारं यथा स्यात् तथा, **उन्मीलता** दीप्यमानेन, **निमीलता** संकुचता च, **दीपिकानिवहेन** प्रदीपसमूहेन, **पिशुनितं** सूचितम्; पुनः **अमञ्जुगुञ्जत्कोलाहलम्**.

त्काहलमाकर्ण्यमानतारपरुषहयहेषारवमितस्ततः श्रूयमाणगम्भीरगजगर्जितमावेगतर्जिताश्वैर्वारंवारमश्ववारैरावेद्यमानागमनमग्रस्कन्धताडितोद्धुरसमरढक्कमढौकत चक्षुषः पथि प्रतिपन्थिबलम्, अविरलनिरस्तशरनिकरशीकरासारडामरं च तद्दुर्वाररभसमुद्दामकलकलव्याप्तसकलदिङ्मुखमभिमुखप्रधावितेन जलदागमक्षुभितममरापगापूरजलमिव लवणजलधिना प्रत्यगृह्यतास्मद्बलेन [ ड ]। परस्परवधनिबद्धकक्षयोश्च तयोस्तत्क्षणमाकुलितसकलजीवलोको युगपदेकीभूतोदारवारिराशिरस्त्रजलविसरवर्षिघनपदातिघोरो मुदितयोगिनीमृग्यमाणलोकपालकपालचषकः

---

**टिप्पनकम्**—अग्रस्कन्ध -अग्रसेना [ ड ]। कक्षा-निश्चय । **आकुलितसकलजीवलोकः** एकत्र ससम्भ्रमसर्वजीवा जना यत्र स तथोक्त , अन्यत्र ससम्भ्रमसर्वभुवन । **युगपदेकीभूतोदारवारिराशि** एकत्र एकहेलया मिलित उद्गतशब्द शत्रुसघातो यत्र स तथोक्त , अन्यत्र युगपन्मिलितोद्धतसमुद्र.। **अस्त्रजलविसरवर्षिघनपदातिघोरः** एकत्र रुधिरोदकवर्षकनिबिडपत्तिभैरव , अन्यत्र रक्तवज्जलवर्षकमेघावस्थानातिरौद्र । **मुदितयोगिनीमृग्यमाणलोकपालकपालचषकः** एकत्र हृष्टशाकिनीगवेष्यमाणनृपतिशिरोऽस्थिमयपात्र , अन्यत्र हृष्टचामुण्डान्वेष्यमाणदिक्पालकपालचषक ।

---

क्षमञ्जु-कठोर यथा स्यात् तथा, गुञ्जन्त -ध्वनन्त , काहला -महाढक्का यस्मिंस्तादृशम्, पुन **आकर्ण्यमानतारपरुषहयहेषारवम्** आकर्ण्यमाना -श्रूयमाणा , तारा -तीव्रा , परुषा -कर्णकठोरा , हयानाम्-अश्वानाम्, हेषारवा -हेषाख्यशब्दा यस्मिंस्तादृशम्, पुन **इतस्ततः** अत्र तत्र, **श्रूयमाणगम्भीरगजगर्जितं** श्रूयमाणम्, गम्भीरं-तुमुलम्, गजगर्जित-हस्तिगर्जन यस्मिंस्तादृशम्, पुन **आवेगतर्जिताश्वैः** आवेगै -अतिवेगै , तर्जिता -ताडिता , अश्वा यैस्तादृशै , **अश्ववारैः** अश्वारोहिसैनिकै , **वारं वारम्** अनेकधा, **आवेद्यमानागमनम्** आवेद्यमान-ज्ञाप्यमानम्, आगमन यस्य तादृशम्, पुन **अग्रस्कन्धताडितोद्धुरसमरढक्कम्** अग्रस्कन्धे सेनासन्निवेशाग्रभागे, ताडिता -नादिता , उद्धुरा -दृढा , समरढक्का -सग्रामवाद्यविशेषा यस्मिंस्तादृशम्। च पुन , **अविरलनिरस्तशरनिकरशीकरासारडामरम्** अविरल-निरन्तरम्,निरस्त -विकीर्णो य , शरनिकर -बाणसमूह , तद्रूपजलकणधारापातेन, डामरं-व्याप्तम्, पुन **दुर्वाररभसं** दुर्निवारवेगम्, पुन **उद्दामकलकलव्याप्तदिङ्मुखम्** उद्दाम्ना-उत्कटेन, कलकलेन-कोलाहलेन, व्याप्तानि-पूरितानि, सकलानि-सर्वाणि, दिङ्मुखानि, सकलाना दिशा या मुखानि-अग्रभागा येन तादृशम्, **तत्** शत्रुसैन्यम्, **अभिमुखप्रधावितेन** शीघ्रमभिमुखमागतेन, **अस्मद्बलेन** अस्मत्सैन्येन, **प्रत्यगृह्यत** आक्रान्तम्, केन कीदृश किमिव ? **लवणजलधिना** लवणसमुद्रेण, **जलदागमक्षुभितं** जलदागमेन-वर्षर्तुना, क्षुभित सञ्चालितम्, **अमरापगापूरजलमिव** अमरापगाया -देवनद्या , गङ्गाया इति यावत्, पूरजलमिव-प्रवाहजलमिव [ ड ]। च पुन , **परस्परवधनिबद्धकक्षयोः** परस्परस्य, वधाय-घाताय, निबद्धा-नितरा बद्धा, कक्षा-कटिघटितपश्चाद्भागे निश्चयो वा याभ्या तादृशयो , **तयोः** स्वसैन्य शत्रुसैन्ययो , **महाप्रलयसन्निभः** महाप्रलयतुल्य , **समरसघट्टः** सग्रामसघष , **अजायत** जात । कीदृश ? **तत्क्षण** तत्कालम् ,? **आकुलितसकलजीवलोक** आकुलिता -क्षोभिता , सकला -समस्ता , जीवा -प्राणिनो यैस्तादृशा लोका -जना यत्र तादृश , पक्षे आकुलिता -क्षोभिता , सकला -समस्ता , जीवलोका -भवनानि येन तादृश , पुन **युगपदेकीभूतोदारवारिराशिः** युगपद्-एककालावच्छेदेन, एकीभूत -समिलित , उदारव -उद्गतशब्द , अरिराशि -शत्रुसमुदायो यत्र तादृश , पक्षे युगपद्-एककालावच्छेदेन, एकीभूता -समिलिता , उदारा -महान्त , वारिराशय -समुद्रा यत्र तादृश , पुन **अस्त्रजलविसरवर्षिघनपदातिघोरः** अस्त्रजलविसरवर्षिण -रुधिररूपजलौघवर्षिणो ये, घना -निबिडा , पदातय -पत्तय , तै अतिघोर -अतिभयङ्कर , पक्षे अस्रवज्जलविसरवर्षिण -रुधिरमयजलौघवर्षिणो ये, घना -मेघा , तेषां यानि पदानि-अवस्थानानि, तै , अतिघोर -अतिभयङ्कर , पुन **मुदितयोगिनीमृग्यमाणलोकपालकपालचषकः** मुदितया-रुधिरपानहृष्टया, योगिन्या-शाकिन्या, पक्षे मुदितया लोकसंहारहृष्टया, योगिन्या-चामुण्डया, मृग्यमाणा -अन्विष्यमाणा , लोकपालानां-नृपाणाम्, पक्षे इन्द्रादिदिक्पालानाम्, कपालचषका -मस्तकोपरितनार्धभागरूपास्थिरूपरुधिरपानपात्रविशेषा ,

प्रचलितरसाकुलभूभृच्चक्रवालकृततुमुलः प्रसृतरभसोत्तालगजदानवारिरार्तत्रिदशदारिकान्विष्यमाणरमणसार्थो निपीतनरवशाविस्वरविसारिशिवाफेत्कारडामरः [च] । सतारकावर्ष इव वेतालदृष्टिभिः, सोल्कापात इव निशितप्रासवृष्टिभिः, सनिर्घातपात इव गदाप्रहारैः, ससंवर्तकाम्बुदुर्दिन इव करिशीकरासारैः, सोत्पातरविमण्डल इव कीलालितकरालचक्रमुक्तिभिः, सवैद्युतस्फूर्ज इव जवापतज्ज्वलितशक्तिभिः, सखण्डपरशुताण्डव इव प्रचण्डानिलधूतध्वजसहस्रैः, सकालाग्निधूम इव प्रकुपितसुभटभ्रुकुटीतमिस्रैरजायत महाप्रलयसंनिभः

---

टिप्पनकम्—प्रचलितरसाकुलभूभृच्चक्रवालकृततुमुल एकत्र प्रचलितवसुन्धराकुलगिरिचक्रविहिताकुलशब्द, अन्यत्र प्रचलितवीररसाकुलनृपचक्रकृताकुलारव । प्रसृतरभसोत्तालगजदानवारि एकत्र प्रसृत-प्रवृत्तम्, रभसोत्तालगजानाम्-उत्सुकोत्कटकरिणाम्, दानवारि-मदजलं यत्र स तथोक्त, अन्यत्र प्रसृत उत्तालगजवद् दानवारि-शङ्करो यत्र स तथोक्त । आर्तत्रिदशदारिकान्विष्यमाणरमणसार्थः एकत्र आर्ताभिस्त्रिसृभिर्दशभिश्च, दारिकाभि-अङ्गनाभि, अन्विष्यमाणो भर्तृसंघातो यत्र स तथा, अन्यत्र आर्तदेवपुत्रिकागवेष्यमाणभर्तृसंघातः । निपीते त्यादि-शिवाफेत्कारडामर-एकत्र चामुण्डाफेत्कारेण डामर-रौद्र, अन्यत्र क्रोष्ट्री० [च]। कीलालित-सरुधिरः । स्फूर्ज-स्फुरणम् । खण्डपरशु-शङ्कर । कालाग्नि-पातालरुद्र [च]।

---

पक्षे तद्रूपमद्यपानपात्रविशेषा यस्मिंस्तादृश पुन प्रचलितरसाकुलभूभृच्चक्रवालकृततुमुलः प्रचलितेन-उच्छलितेन, रसेन-वीररसेन, आकुलानाम्-आक्षुतानाम्, भूभृता-राज्ञाम्, चक्रवालेन-मण्डलेन, कृत तुमुल-सान्द्रयुद्ध यस्मिन्, पक्षे प्रचलिताया-प्रकम्पिताया, रसाया-पृथिव्या, कुलभूभृता-महेन्द्रादिकुलपर्वतानाम्, चक्रवालेन-समूहेन, कृतम्, परस्परोपरि पतनरूप सान्द्र युद्ध यस्मिंस्तादृश पुन प्रसृतरभसोत्तालगजदानवारि प्रसृत-विस्तृतम्, रभसोत्तालाना-वेगोद्धतानाम्, गजाना, दानवारि-मदजल यस्मिंस्तादृश, पक्षे प्रसृत-सहर्तुं व्याप्टत, रभसोत्ताल-औत्सुक्योत्कटो हर्षमेदुरो वा, गजदानवस्य-गजासुरस्य, अरि-शत्रु शिव संहारभैरव इति यावत्, यस्मिंस्तादृश, पुन आर्तत्रिदशदारिकान्विष्यमाणरमणसार्थ आर्ताभि-विरहव्यथाभि, त्रिदशदारिकाभि-देवाङ्गनाभि, अन्विष्यमाण, रमणसार्थ-प्रियसमूहो यस्मिंस्तादृश, युद्धे मृताना देवत्वप्राप्ते प्रसिद्धत्वा वैधव्यविधुरितानां तदङ्गनाना वरान्वेषणोपपत्ते, पक्षे त्रिदशाभि-तिसृत्तदशसंख्यकाभि, त्रिशत्संख्यकाभिरिति यावत्, उपलक्षणत्वाद् बहुसंख्यकाभिरित्यर्थ, दारिकाभि-अङ्गनाभि, अन्विष्यमाण, रमणसार्थ-भर्तृगणो यस्मिंस्तादृश, पुन निपीतनरवशाविस्वरविसारिशिवाफेत्कारडामर. निपीता-नितरा पानकर्मतामापादिता या, नराणां-मनुष्याणाम्, वशा-धातुविशेष, तया विस्वरेण-विकृतस्वरेण, विसारिणीनां-प्रसारिणीनाम्, शिवाना-शृगालीनाम्, पक्षे विसारिण्या शिवाया-चण्डिकाया, फेत्कारेण-ध्वनिविशेषेण, डामर-व्याप्त, रौद्र इति यावत् [च], पुन वेतालदृष्टिभि. वेतालाना-मन्त्रविशेषाणाम्, पक्षे शिवानुचरविशेषाणाम्, दृष्टिभि-दृष्टिपातै, सतारकावर्ष इव तारकाणा ताराणाम्, यद् वर्ष-वृष्टि, तत्सहित इवेत्युत्प्रेक्षा पुन निशितप्रासवृष्टिभि निशितानां-तीक्ष्णानाम्, प्रासाना-कुन्ताख्यास्त्राणाम्, या वृष्टयस्ताभि, सोल्कापात इव उल्कापातसहित इवेति चोत्प्रेक्षा, पुन गदाप्रहारै. गदाप्रक्षेपै, सनिर्घातपात इव वज्रपातसहित इव, पुन करिशीकरासारै. गजमदजलकणधारासम्पातै, ससंवर्तकाम्बुदुर्दिन इव संवर्तकस्य-तदाख्यमेघविशेषस्य, अम्बुभि-जलै, यद् दुर्दिन-मेघाच्छन्नदिनम्, तत्सहित इव पुन कीलालितकरालचक्रमुक्तिभिः कीलालित-रुधिरार्द्रीभूतम्, कराल-भयानक च, यच्चक्र-तदाख्यमस्त्रम्, तन्मुक्तिभि-तद्विमोचनै, सोत्पातरविमण्डल इव उत्पातरविमण्डलेन-जगत्संहारसूचकसूर्यमण्डलेन, सहित इव पुन जवापतज्ज्वलितशक्तिभि जवेन-वेगेन, आपतन्तीभि-निपतन्तीभि, ज्वलिताभि-दीप्ताभि, शक्तिभि-तदाख्यास्त्रविशेषै, सवैद्युतस्फूर्ज इव वैद्युतेन-विद्युत्सम्बन्धिना, स्फूर्जेन-स्फुरणेन, सहित इव पुन प्रचण्डानिलधूतध्वजसहस्रै प्रचण्डेन-उद्दण्डेन, अनिलेन-वायुना, धूता-कम्पिता, ये ध्वजास्तेषां सहस्रै, सखण्डपरशुताण्डव इव खण्डपरशो-शिवस्य, ताण्डवेन-नृत्येन, सहित इव, पुन प्रकुपितसुभटभ्रुकुटीतमिस्रै. प्रकुपितानाम्-अतिक्रुद्धानाम्, सुभटाना-सुयोधानाम्, भ्रुकुटीभि-नेत्रोपरितनरोमराजिकौटिल्यै, यानि तमिस्राणि-अन्धकारास्तै, सकालाग्निधूम इव कालाग्नि-प्रलयकालिकाग्नि, धूमेन सहित इवेति

समरसंघट्टः [छ]। सर्वतश्च गात्रसंघट्टरणितघण्टानामरिद्विपावलोकनक्रोधधावितानामिभपतीनां बृंहितेन, प्रतिबलाश्वदर्शनक्षुभितानां च वाजिनां हेषितेन, हर्षोत्तालसूततादिततुरङ्गवद्धरंहसां च स्यन्दनानां चीत्कृतेन, सकोपधानुष्कनिर्दयाच्छोटितज्यानां च चापयष्टीनां टङ्कृतेन, खरखुरप्रदलितदण्डानां च पर्यस्यतां रथकेतनानां कडत्कारेण, निष्ठुरधनुर्यन्त्रनिष्ठ्यूतानां च निर्गच्छतां नाराचानां सूत्कारेण, वेगोह्यमानविवशवेताल-कोलाहलघनेन च रुधिरापगानां घूत्कारेण, प्रतिरसितसम्भृतेन समरभेरीणां भाङ्कारेण, निर्भराध्मातसकल-दिक्चक्रवालं साक्रन्दमिव साट्टहासमिव सास्फोटनरवमिव ब्रह्माण्डमभवत् [ज]। अनन्तरं च सेनाभरा-क्रान्तमेदिनीमूर्च्छान्धकाराकृतिः कवलयितुमिव सशैलद्वीपकाननं त्रिभुवनमुल्ललास लासकस्तरुणजलधरपटल-शङ्कया विमुक्तकलकेकाविलापानां वनकलापिनामाब्रह्मलोकमेणाङ्कमण्डलाकाण्डसैंहिकेयो रजःसंघातः।

---

टिप्पनकम्—बृंहित-गजगर्जितम्। सूत-सारथि। पर्यस्यतां पतताम्। प्रतिरसित-प्रतिशब्दः [ज]। लासक. नर्तक। एणाङ्क-चन्द्र।

---

च सर्वत्रोत्प्रेक्षा [छ]। सर्वतः परित, गात्रसंघट्टरणितघण्टानां गात्रसंघट्टेन-गात्राणां-शरीराणां परस्परसंघर्षेण, रणिता-ध्वनिता, घण्टा येषां तादृशानाम्, पुन अरिद्विपावलोकनक्रोधधावितानाम् अरिद्विपानां-शत्रुगजानाम्, अवलोकनेन-दर्शनेन, य क्रोधस्तेन धावितानां-शीघ्र गतानाम्, इभपतीनां महागजानाम्, बृंहितेन गर्जितेन च पुन, प्रतिबलाश्वदर्शनक्षुभितानां प्रतिबलाश्वदर्शनेन-प्रतिद्वन्द्विसैन्याश्वदर्शनेन, क्षुभितानां-सञ्चलितानाम्, वाजिनाम्-अश्वानाम्, हेषितेन-हेषाख्यशब्देन, च पुन, हर्षोत्तालसूतताडिततुरङ्गवद्धरंहसां हर्षेण उत्ताला-उद्वेलिता, ये सूता-सारथय, तैर्बद्ध-माहितम्, रंह-वेगो येषां तादृशानाम्, स्यन्दनानां रथानाम्, चीत्कृतेन चीत्कारशब्देन, च पुन, सकोपधानुष्कनिर्दयाच्छोटितज्यानां सकोपा-क्रुद्धा, ये धानुष्का-धनुर्धारिण, ते, निर्दयम्-अत्यन्त यथा स्यात् तथा, आच्छोटिता-आकृष्टा, ज्या-मौर्वी, रज्जुरिति यावत्, यासां तादृशीनाम्, चापयष्टीनां धनुर्यष्टीनाम्, टङ्कृतेन टङ्कारेण, च पुन, पर्यस्यताम्-अध पतताम्, पुन खरखुरप्रदलितदण्डानां खराणां-गर्दभानाम्, खुरै-शफै, दलितानां-विदारितानाम्, रथकेतनानां रथध्वजानाम्, कडत्कारेण ध्वनिविशेषेण, च पुन, निष्ठुरधनुर्यन्त्र-निष्ठ्यूतानां निष्ठुरेण-दृढेन, धनुर्यन्त्रेण, निष्ठ्यूतानां-प्रक्षिप्तानाम्, अत एव निर्गच्छतां ततो निष्क्रामताम्, नाराचानां बाणानाम्, सूत्कारेण ध्वनिविशेषेण, च पुन, वेगोह्यमानविवशवेतालकोलाहलघनेन वेगेन उह्यमानानां-वहनकर्मतामापद्यमानानाम्, विवशानां-रुधिरपानपरवशानाम्, वेतालानां-भूतविशेषाणाम्, य कोलाहलस्तेन, घनेन-निबिडेन, रुधिरापगानां रुधिरनदीनाम्, घूत्कारेण ध्वनिविशेषेण, पुन समरभेरीणां संग्रामढक्कानाम्, प्रतिरसितसम्भृतेन प्रतिध्वनिपूर्णेन, भाङ्कारेण ध्वनिविशेषेण, निर्भराध्मातसकलदिक्चक्रवालं निर्भरम्-अत्यन्त यथा स्यात् तथा, आध्मात-शब्दितम्, सकलानां-सर्वासां दिशाम्, चक्रवाल-मण्डलं यस्मिंस्तादृशम्, ब्रह्माण्डं चतुर्दशभुवनाधारात्मकं जगत्, साक्रन्दमिव सविलापमिव, साट्टहासमिव महाहाससहितमिव, सास्फोटनरवमिव, आस्फोटनरवेण-पर्वतावदारण-ध्वनिना सहितमिव, अभवत् जातम् [ज]। च पुन, अनन्तर ब्रह्माण्डस्योक्तस्थित्यनन्तरम्, सेनाभराक्रान्त-मेदिनीमूर्च्छान्धकाराकृतिः सेनाभरेण-सैन्यभारेण, आक्रान्ताया, आकुलिताया, मेदिन्या-पृथिव्या, यो मूर्च्छान्ध-कार-मूर्च्छारूपान्धकार, सा आकृति-आकारो यस्य तादृश, रज सङ्घात. धूलिसमूह, सशैलद्वीपकानन शैला-पर्वता, द्वीपा-जलमध्यस्थलप्रदेशा, काननानि-वनानि, तै सहितम्, त्रिभुवनम् भुवनत्रयम्, कवलयितुमिव भक्ष-यितुमिव, उल्ललास उच्छलति स्म। कीदृश? तरुणजलधरपटलशङ्कया तरुणा-अभिनवा ये, जलधरा-मेघा, तेषां यत् पटल-समूह, तस्य शङ्कया-संशयेन, विमुक्तकलकेकाविलापानां विमुक्त-मुखान्निर्गमित, कल-मधुर, केकाविलाप-केकाख्यशब्दविशेषेण विलपन यैस्तादृशानाम्, वनकलापिनां वनमयूराणाम्, लासक. नर्तक, पुन आब्रह्मलोकं ब्रह्मलोकमभिव्याप्य, एणाङ्कमण्डले चन्द्रबिम्बे, अकाण्डसैंहिकेय. अकालराहुस्वरूप। प्रतिक्षण

प्रतिक्षणमुद्धुरैर्गुणध्वनिभिरज्ञायत धनुष्मतामिषुव्यापारः, शस्त्रशिखिकणद्योतेन पदमदीयत प्रचलितैः प्रत्यरिपदातिभिः, अविदितात्मीयपरविभागेन व्यलम्ब्यत मुहूर्तमुद्गूर्णहेतिनापि सुभटलोकेन, प्रभूतपिशिताभ्यवहारजनिततीव्रोदन्येन कर्दमप्रायमपीयत क्षतजापगाम्बु कौणपगणेन [झ]॥

एवं च भीषणावद्धतुमुले कुतूहलोत्तालकालदूताकुलितदशदिशि क्रव्यादकुलविलुप्यमानवीरलोके नृत्यत्परेतपरिषदि कृतान्तमहोत्सव इव निर्भरं प्रवृत्ते समरसंरम्भे क्षीयमाणेषु क्षितिपतिषु निपतत्सु पादातेषु सीदत्सु सादिषु प्रजत्सु विधुरतामाधोरणेषु प्रहारविकलकायेष्वितस्ततः परिस्खलत्सु शून्यासनेषु सप्तिषु स्फुरत्कृपाणचक्रत्रिशूलकार्मुकप्रायप्रहरणदुरालोकायामनेकशवमुण्डमालामालितवपुषि चण्डिकायामिव रूपपरिवर्तेन कृतसंनिधावुपलक्ष्यमाणायां क्षितावमर्षमय इव क्रौर्यमय इव वैरमय इव व्याजमय इव हिंसामय इव विभाव्यमाने जगति त्रिभागशेषस्थितौ त्रियामायाममर्षगतमरणशङ्कानिरङ्कुशप्रवृत्तिभिर्वीरलोकैरहंप्रथमिकया

---

टिप्पनकम्—उदन्या-तृषा । कौणपाः-राक्षसा [झ]। क्रव्यादा -राक्षसा । परेता -पिशाचाः [ञ]।

---

क्षणे क्षणे, **उद्धुरैः** उच्चै, **गुणध्वनिभिः** आकृष्टमौर्वीशब्दै, **धनुष्मतां** धनुर्धारिणाम्, **इषुव्यापारः** बाणविक्षेपात्मको व्यापार, **अज्ञायत** ज्ञायते स्म । **प्रचलितैः** प्रस्थितै, **प्रत्यरिपदातिभिः** उपस्थितशत्रुपदगामिसैनिकै, **शस्त्रशिखिकणद्योतेन** शस्त्रशिखिन -खड्गादिरूपाग्ने, कणाना-स्फुलिङ्गानाम्, द्योतेन-प्रकाशेन, पद चरणम्, **अदीयत** आरोप्यते स्म । **उद्गूर्णहेतिनापि** उद्यतबाणेनापि, **सुभटलोकेन** सुयोधजनेन, **अविदितात्मीयपरविभागेन** अविदित -अप्रतीत, आत्मीयाना-स्वजनानाम्, परेषाम्-अनात्मीयजनानाम्, शत्रुजनानामिति यावत्, विभाग -पार्थक्य येन तादृशेन सता, **मुहूर्तं** क्षणम्, **व्यलम्ब्यत** बाणविक्षेपे विलम्ब कृत । **प्रभूतपिशिताभ्यवहारजनिततीव्रोदन्येन** प्रभूतस्य प्रचुरस्य, पिशितस्य-मासस्य, अभ्यवहारेण-भक्षणेन, जनिता-उत्पन्ना, तीव्रा-दु सहा, उदन्या-पिपासा यस्य तादृशेन, **कौणपगणेन** राक्षसगणेन, **कर्दमप्रायं** पङ्कमयम्, **क्षतजापगाम्बु** रुधिरनदीजलम्, **अपीयत** पीयते स्म [झ]॥ **एवम्** अनेन प्रकारेण, **भीषणावद्धतुमुले** भीषण-भयानकम्, आबद्ध-समन्तात् प्रवर्तितम्, तुमुलं-सान्द्रयुद्ध यस्मिंस्तादृशे, पुन **कुतूहलोत्तालकालदूताकुलितदशदिशि** कुतूहलेन-औत्सुक्येन, उत्ताले -उद्धते, कालदूते -यमदूते, आकुलिता -आक्रान्ता, दश दिशो यस्मिंस्तादृशे, पुन **क्रव्यादकुलविलुप्यमानवीरलोके** क्रव्यादाना-राक्षसानाम्, कुलेन-समूहेन, विलुप्यमाना -मासार्थमुत्कृत्यमाना, वीरलोका -युद्धमृतवीरपुरुषा यस्मिंस्तादृशे, पुन **नृत्यत्परेतपरिषदि** नृत्यन्ती-हर्षेणोच्छलन्ती, परेताना-व्यन्तरविशेषाणाम्, परिषत्-सभा समूह इति यावत्, यस्मिंस्तादृशे, पुन **कृतान्तमहोत्सव इव** यमराजमहोत्सव इव, **निर्भरम्** अत्यन्तम्, **प्रवृत्ते** प्रारब्धे, **समरसंरम्भे** सङ्ग्रामसङ्घर्षे, **क्षितिपतिषु** नृपेषु, **क्षीयमाणेषु** म्रियमाणेषु, पुन **पदातिषु** पदगामिसैनिकसमूहेषु, **निपतत्सु** अध स्खलत्सु, पुन **सादिषु** अश्वारोहिसैनिकेषु, **सीदत्सु** व्यथमानेषु, पुन **आधोरणेषु** हस्तिपकेषु, **विधुरतां** क्लेशम्, **व्रजत्सु** अनुभवत्सु, पुन **प्रहारविकलकायेषु** प्रहारेण-खड्गाघातेन, विकल -भग्न, काय -शरीरं येषा तादृशेषु, **शून्यासनेषु** पर्याणादिरहितेषु, **सप्तिषु** अश्वेषु, **इतस्ततः** अत्र तत्र, **परिस्खलत्सु** परिपतत्सु, पुन **स्फुरत्कृपाणचक्रत्रिशूलकार्मुकप्रायप्रहरणदुरालोकया** स्फुरन्ति-उज्ज्वलन्ति, यानि कृपाणचक्रत्रिशूलकार्मुकाणि, कृपाण -खड्ग, चक्र-चक्राकारोऽस्त्रविशेष, त्रिशूल-यस्य शल्याग्राणि त्रीणि त्रिखाग्राणि भवन्ति तादृगस्त्रविशेष, कार्मुकं नाम-धनु, तत्प्राये -तत्प्रचुरे, प्रहरणे -अस्त्रे, दुरालोकाया-दु खेन दृश्यायाम्, च पुन, **अनेकशवमुण्डमालामालितवपुषि** अनेकेषा शवानां-मृतकानाम्, या मुण्डमाला-मस्तकस्थितमाला, पक्षे मस्तकपङ्क्ति, तया मालित-शोभितम्, वपु -शरीरं यस्यास्तादृश्याम्, **क्षितौ** पृथिव्याम्, **रूपपरिवर्तेन** स्वरूपपरिवर्तनेन, **कृतसन्निधौ** कृतसमीपावस्थानायाम्, **चण्डिकायामिव** तदाख्यदेव्यामिव, **उपलक्ष्यमाणायां** प्रतीयमानायां सत्याम्, पुन **जगति**, **अमर्षमय इव** क्रोधमय इव, पुन **क्रौर्यमय इव** क्रूरतामय इव, पुन **वैरमय इव** शात्रवमय इव, पुन **व्याजमय इव** पारस्परिकच्छलमय इव, पुनः **हिंसामय इव** हिंसाप्रचुर इव, **विभाव्यमाने** प्रतीयमाने सति, पुन **त्रियामाया** रात्रौ, **त्रिभागशेषस्थितौ** त्रिभागरूपा-

प्रार्थ्यमानयशसि पर्यायेण जयपराजयावासादयति सैन्यद्वये सहसैव शत्रुसैन्यादसह्यरभसो मृगयुमार्गणप्रहारताडित इव मृगारातिराकर्णितदुर्नरेन्द्रमन्त्रपद इव महाहिराघ्रातविपक्षवारणमदगन्ध इव वनकरेणुरनिललोलपताकापटसहस्रमरिकुलप्रलयाय मुक्तशिखमिवोत्खातशस्त्रपुरुषकृतपरिक्षेपं रथमारूढः प्रौढकालायसकवचगूढकायैः पुनरुक्तनर्जितसारथिभिरभङ्गुरभुजबलाभिमानैरनतिभूरिभिरवनिपतिपुत्रैरनुगम्यमान एको नृपकुमारः कुमारसदृशाकृतिरतिरंहसा निरगमत् [ज]। निर्दयास्फालितधनुश्चातिदूरोल्लसितेन श्यामलितदशदिशा कुटिलविषमेण भ्रुकुटिवलिलेखात्रयेण धूमोद्गमेनेवानुमीयमानहृदयप्रदीप्तमन्युरभिमन्युरिव चक्रव्यूहस्य सेनापतिपुरोभागपुञ्जितस्य राजसमूहस्य संचरदनेकरथसहस्रदुष्प्रवेशमविशन्मध्यम्, अनुवर्तितक्षत्रधर्मैश्च महाबलैर्नरपतिभिरेकैकशोऽभिमुखीभवद्भिः क्षणमात्रमन्थरितरथगतिः 'वज्रायुध ! वज्रायुध !' इति सगर्वं व्याहरन् वाहिनीभर्तुरन्तिकमधिगच्छत् [ट] ॥

---

तृतीयभागरूपा, शेषस्थिति -शेषावस्थानं यस्यास्तादृश्यां सत्याम्; पुनः **सैन्यद्वये** स्वसैन्य-शत्रुसैन्ययो', **अमर्षगतमरणशङ्कानिरङ्कुशप्रवृत्तिभिः** अमर्षेण-ईर्ष्यावशेन, गता निवृत्ता, या मरणशङ्का-मृत्युभयम्, तेन निरङ्कुशप्रवृत्तिभिः-निर्बाधप्रवृत्तिकैः, **वीरलोकैः** वीरपुरुषैः, **अहंप्रथमिकया** 'अहं प्रथमः, अहं प्रथमो योधानाम्' इति पारस्परिकस्पर्धावशेन, **प्रार्थ्यमानयशसि** प्रार्थ्यमानम्-अभिलष्यमाणं यशो येन तादृशे, अत एव **पर्यायेण** क्रमेण, जय-पराजयौ, **आसादयति** प्राप्नुवति सति, **सहसैव** अकस्मादेव, **शत्रुसैन्यात्** शत्रुसैन्यसकाशात्, **कुमारसदृशाकृतिः** कार्तिकेयतुल्याकारः, एकः, **नृपतिकुमारः** राजकुमारः, **अतिरंहसा** अतिवेगेन, **निरगमत्** निर्गतः। कीदृशः? **असह्यरभसः** असह्यः-सोढुमशक्यः, रभसः-वेगो यस्य तादृशः, क इव? **मृगयुमार्गणप्रहारताडितः** मृगयोः-व्याधस्य, मार्गणप्रहारेण-बाणप्रक्षेपेण, ताडितः, **मृगारातिः** सिंह इव; पुनः **आकर्णितदुर्नरेन्द्रमन्त्रपदः** आकर्णितानि-श्रुतानि, दुर्नरेन्द्राणां-दुष्टमन्त्रपाठकानाम्, मन्त्रपदानि-मन्त्राक्षराणि येन तादृशः, **महाहिः** महासर्प इव; पुनः **आघ्रातविपक्षवारणमदगन्धः** आघ्रातः-आघ्राणकर्मतामापादितः, विपक्षवारणानां-शत्रुगजानाम्, मदगन्धः-दानवारिगन्धो येन तादृशः, **वनकरेणुः** वनगज इव; पुनः कीदृशः? **रथमारूढः** कृतरथारोहणः, कीदृशं रथम्? **अनिललोलपताकापटसहस्रम्** अनिलेन-वायुना, लोलम्-उद्धूयमानम्, पताकापटानां-ध्वजवस्त्राणाम्, सहस्रं यस्मिंस्तादृशम्, पुनः **अरिकुलप्रलयाय** शत्रुकुलसमूलोच्छेदाय, **मुक्तशिखमिव** मुक्ता-निर्गमिता, शिखा-ज्वाला येन तादृशम्, अग्निमिवेत्युत्प्रेक्षा, पुनः **उत्खातशस्त्रपुरुषकृतपरिक्षेपम्** उत्खातशस्त्रैः-उद्घाटितशस्त्रैः, पुरुषैः, कृतः परिक्षेपः-परिवेष्टनं यस्य तादृशम्, पुनः **प्रौढकालायसकवचगूढकायैः** प्रौढेन-सुदृढेन, कालायसकवचेन-लोहविशेषनिर्मितवर्मणा, गूढः-रक्षितः, कायः-शरीरं येषां तादृशैः, **पुनरुक्ततर्जितसारथिभिः** पुनरुक्तेन-पुनः पुनर्वचनेन, तर्जिताः-भर्त्सिताः सारथयो यैस्तादृशैः, पुनः **अभङ्गुरभुजबलाभिमानैः** अभङ्गुरः-अविनश्वरः, प्रबल इत्यर्थः, भुजबलाभिमानः-भुजबलगर्वो येषां तादृशैः, **अनतिभूरिभिः** अनत्यधिकैः, परिमितैरिति यावत्, **अवनिपतिपुत्रैः** राजकुमारैः, **अनुगम्यमानः** अनुश्रियमाणः [ ञ ]। च पुनः, **निर्दयास्फालितधनुः** निर्दयम्-अत्यन्तं यथा स्यात् तथा, आस्फालितम्-आकृष्टं धनुर्येन तादृशः, राजकुमार इति शेषः, **सेनापतिपुरोभागपुञ्जितस्य** सेनापतेः-सेनानायकस्य, पुरोभागे-अग्रभागे, पुञ्जितस्य-संहतस्य, राजसमूहस्य-नृपगणस्य, **सञ्चरदनेकमहारथसहस्रदुष्प्रवेशं** सञ्चरतां-प्रचरताम्, अनेकेषां महारथानां सहस्रेण, दुष्प्रवेशं-दुःखेन प्रवेष्टुं योग्यम्, **चक्रव्यूहस्य** सैन्यसन्निवेशविशेषस्य, **मध्यं** मध्यभागम्, **अभिमन्युः** तदाख्योऽर्जुनसुतुरिव, **अविशत्** प्रविष्टवान्; कीदृशः? **धूमोद्गमेनेव** धूमोत्थानेनेव, **अतिदूरोल्लसितेन** सुदूरादेवाविर्भूतेन, **श्यामलितदशदिशा** श्यामलिताः-मलिनिताः, दश दिशो येन तादृशेन, **कुटिलविषमेण** कुटिलेन-वक्रेण, विषमेण-उन्नतानतेन, **भ्रुकुटिवलिलेखात्रयेण** भ्रुकुटिः-नेत्रोपरितनकुटिलरोमावलिः, तदुपरिस्थिता या वलिलेखाः-वलिरूपा रेखाः, तासां त्रयेण, **अनुमीयमानहृदयप्रदीप्तमन्युः** अनुमीयमानः-अनुमितात्मकज्ञानविषयतामापाद्यमानः, हृदये, प्रदीप्तः-प्रज्वलितः, मन्युः-क्रोधो यस्य तादृशः **अनुवर्तितक्षत्रधर्मैः** अनुवर्तिताः-अनुसृताः, संग्रामशौर्यादिरूपाः क्षत्रधर्माः क्षत्रियधर्मा यैस्तादृशैः, **महाबलैः** प्रबलैः, **एकैकशः** प्रत्येकम्, **अभिमुखीभवद्भिः** सम्मुखमागच्छद्भिः, **नरपतिभिः** नृपतिभिः, **क्षणमात्रमन्थरितरथगतिः**

सेनाधिपोऽपि गम्भीरमधुरेण तेन व्याहृतध्वनिना प्रथमजलधरस्तनितेनेव विन्ध्यः सद्य एवोद्भिन्नसरसरोमाञ्चकन्दलः कोपविस्फारितपुटेन कवलयन्निव तारकोदरप्रतिबिम्बित सप्रगल्भचलितपक्ष्मणा लोचनद्वयेन सतुरङ्गरथमातङ्गपार्थिवं प्रतिपक्षम् 'इत इतः पश्य माम्' इति व्याहरन्नेव वाहितरथः समेत्य तस्येक्षणपथे समस्थित [ठ]। वारंवारमन्योऽन्यकृततर्जनयोश्च तयोराकर्णान्ताकृष्टमुक्तास्तुल्यकालमास्वादितगलामिषा विसारिणो, लङ्घितदशदिशो दूराध्वगा, राजकार्योपयोगिनस्तीक्ष्णाः, परितोषितसुराङ्गनाः सुपर्वाणो, महाजवा वाजिनश्चापलतोषिताः क्षितिपालदारका, विषमाश्वमण्डलभेदिनः प्राप्तमोक्षा, दत्तदीर्घनिद्रा महासंनिपाताः,

---

टिप्पनकम्—आस्वादितगलामिषा., विसारिण. मत्स्या, कीदृशा ? आस्वादित-भक्षितम्, गलामिष-बडिशीमांस यैस्ते तथोक्ता, अन्यत्र प्रसरणशीलास्तथा आस्वादितग्रीवामांसा । लङ्घितदिश, दूराध्वगा. दूरपथिका, कीदृशा ? लङ्घितदिश -अतिक्रान्ताशा भवन्ति, दूरमार्गगन्तारो लङ्घितदिशश्च । राजकार्योपयोगिनस्तीक्ष्णा. एकत्र तीक्ष्णा -घातका, ते नृपार्थसाधका, अन्यत्र निशाता । परितोषितसुराङ्गना, सुपर्वाण. एकत्र देवा, अन्यत्र शोभनग्रन्थिद्वयमध्या, उभयेऽपि हर्षितदेवयोषा । महाजवा वाजिन. एकत्र वाजिनोऽ[श्वा, अ]न्यत्र सपिच्छा, उभयेऽपि महावेगा । चापलतोषिता., क्षितिपालदारकाः एकत्र राजपुत्रा, कीदृशा ? चापलतोषिता -चपलत्व हर्षिता, अन्यत्र नृपविदारका, धनुर्लताश्रिता । विषमाश्वमण्डलभेदिन., प्राप्तमोक्षा. एकत्र प्राप्तनिर्वाणा,

---

क्षणमान-मुहूर्तमात्रम्, मन्थरिता-शिथिलिता, रयस्य गति -गमन यस्य तादृश, वज्रायुध ! वज्रायुध ! इति भो वज्रायुध ! भो वज्रायुध ! इति, सगर्वं गर्वपूर्वकम्, व्याहरन् ब्रुवन्, वाहिनीभर्तु. अनुपदोक्तनामकस्य सेनापते, अन्तिकं समीपम्, अभ्यागच्छत् आगतवान् [ट] ॥ सेनाधिपोऽपि सेनापतिरपि, प्रथमजलधरस्तनितेन प्रथममेघगर्जितेन, विन्ध्य इव तदाख्यकुलपर्वत इव, गम्भीरमधुरेण गम्भीरेण-तीव्रेण, मधुरेण च, व्याहृतध्वनिना कथितशब्देन, सद्य एव तत्क्षणमेव, उद्भिन्नसरसरोमाञ्चकन्दल. उद्भिन्नानि-उन्मीलितानि, सरसानि-रसान्वितानि, रोमाञ्चकन्दलानि-रोमाञ्चरूपनवाङ्कुराणि यस्य तादृश सन्, कोपविस्फारितपुटेन कोपेन-क्रोधेन, विस्फारितौ पुटौ-पुटाकारकनीनिकावरणत्वचौ यस्य तादृशेन, पुन सप्रगल्भचलितपक्ष्मणा सप्रगल्भ-निर्भयं यथा स्यात् तथा, चलिते पक्ष्मणी-नेत्रावरणरोमलेखे यस्य तादृशेन, लोचनद्वयेन नेत्रद्वयेन, तारकोदरप्रतिबिम्बितं तारकयो -नेत्रमध्यवर्ति कनीनिकयो, उदरे-मध्ये, प्रतिबिम्बितम्, सतुरङ्गरथमातङ्गपार्थिव तुरङ्गै -अश्वै, रथै स्यन्दनै, मातङ्गै -हस्तिभि, पार्थिवै -नृपैश्च, सहितम्, प्रतिपक्ष शत्रुम्, कवलयन्निव ग्रसन्निव, इत इत. अत्र अत्र, मा वज्रायुधम्, पश्य इति व्याहरन्नेव कथयन्नेव वाहितरथ. प्रस्थापितरथ, समेत्य समीपमागत्य, तस्य राजकुमारस्य, ईक्षणपथे दृष्टिपथे, समस्थित प्रतिष्ठते स [ठ] ॥ [illegible] पुन, वार वार मुहुर्मुहु, अन्योऽन्यकृततर्जनयो. अन्योऽन्य-परस्परम्, कृत तर्जन-प्रहारो याभ्या तादृशयो, तयो. सेनापति राजकुमारयो, शराः बाणा, प्रसस्रु. प्रसृता । कीदृशा ? विसारिण. प्रसरणशीला मत्स्यरूपाश्च, केन साधर्म्येण ? आकर्णान्ताकृष्टमुक्ता. आकर्णान्त-कर्णान्तपर्यन्तम्, आकृष्टा -पूर्वं कृताकर्षणा, पश्चान्मुक्ता -लक्ष्येषु निपातिता, पक्षे बडिशसूच्या कर्णान्त यावदाकृष्टा -जलादुद्धृता, पश्चान्मुक्ता -बडिशान्निःसृता, पुन आस्वादितगलामिषा. आस्वादित भक्षितम्, गलामिष ग्रीवास्थमांसम्, पक्षे ग्रीवामांस च यैस्तादृशा, बडिशसूचीग्रथितमामिष भक्षतां मत्स्यानां तेन सह तद्विद्धग्रीवास्थमांसभक्षणस्याप्यवर्जनीयताया लोकप्रसिद्धत्वात् पुन लङ्घितदशदिशः लङ्घिता -त्वरितगत्या कृतलङ्घना, दश दिशो यैस्तादृशा, अत एव दूराध्वगाः दूरमार्गगामिन, दूरगामिपथिकरूपाश्च, पुन राजकार्योपयोगिन. राज्ञा यानि कार्याणि तदुपयोगिन -तत्साधका, तीक्ष्णा. निशिता, तीव्रा आत्मत्यागिनो वा, पुन परितोषितसुराङ्गना परितोषिता -सन्तोषिता, सुराङ्गना -देव्यो यैस्तादृशा, सुपर्वाणः सुष्ठु पर्व ग्रन्थिद्वयमध्यभागो येषा तादृशा, पक्षे देवस्वरूपाश्च, युद्धे समागतानां योधाना देवत्वापादनेन तै पतिरहिताना देवीना सन्तोषणोपपत्ते, पुन महाजवा अतिवेगशालिन, वाजिन. वाज -पक्षोऽस्ति येषा तादृशा, पक्षे अश्वस्वरूपाश्च, पुन चापलतोषिता. चाप -धनुरेव लतति चापलता, तस्याम् उषिता -कृतनिवासा, पक्षे चपलस्य भाव -चापल्यम्, तेन तोषिता -हर्षिता, क्षितिपालदारका. क्षितिपालान् उभयसमवेतनृपान् दारयन्ति विदारयन्ति, भिन्दयन्तीति यावद्

स्वेच्छाविहारिणः खेचरा, ऋजुस्वभावा लब्धशुद्धयः, कचिद् वातिका इव सूतमारणोद्यताः, कचिद् राजाध्यक्षा इवाकृष्टसुभटग्रामकङ्कटाः, कचिद् वलयकारा इव कल्पितकरिविषाणाः, कचित् कितवा इव लिखिताष्टापदसारफलकाः, कचित् पतङ्गा इव पक्षपवनान्दोलितदीपिकाखण्डार्चिषोऽभिलषितगजदाना मार्गणतामुन्मिषित-

---

कीदृशास्ते ? विषमाश्वमण्डलभेदिन –आदित्यमण्डलभेदिन , अन्यत्र विषमतुरगसंघातदारकास्तथा लब्धमुक्तय । **दत्तदीर्घनिद्रा महासन्निपाताः** एकत्र महासन्निपाता –ज्वरविशेषा , दत्ततन्द्राका , अन्यत्र दत्तमरणा , तथा महत्सु सन्निपात –निपतन येषा ते तथोक्ता । **स्वेच्छाविहारिण , खेचरा** विद्याधरा , कीदृशास्ते ? स्वेच्छाविहारिण –आत्मेच्छाविहरणशीला , अन्यत्र आकाशगामिन , स्वेच्छाविहारिणश्च । **ऋजुस्वभावा लब्धशुद्धय** ऋजुस्वभावा कीदृशा ? लब्धशुद्धय –लब्धनैर्मल्या , एतेऽन्तर्भूत इवार्थो द्रष्टव्य । **सूतमारणोद्यताः** सारथिमारणकृतोद्यमा , अन्यत्र पारत, मारणोद्यता । **आकृष्टसुभटग्रामकङ्कटा** विदारितसुभटसमूहकवचा , अन्यत्र आकृष्टा –अपनीता , सुभटग्रामेभ्य कङ्कटा –कङ्कटका यैस्ते तथोक्ता , आकृष्टा –आकर्षिता , सुभटग्रामेभ्य कङ्कटा –कृपियला यैस्ते तथोक्ता इति वा । **कल्पितकरिविषाणा** खण्डितगजदन्ता , अन्यत्र वि··· । **लिखिताष्टापदसारफलकाः** एकत्र लिखितद्युतविशेषशारिगृहका , अन्यत्र विदारितसुवर्णमयप्रधानफलका । **पतङ्गा** शलभा , पक्षा –पिच्छानि । **अभिलषितगजदाना मार्गणतां** दान–वितरण खण्डन च, मार्गणता चोद्वहन्त । **उन्मिषितनीलत्विषो याणतां** त्विट्–दीप्तिरतिशोभा च,

---

इति क्षितिपालदारका , पक्षे क्षितिपालबालकस्वरूपा , पुन **विषमाश्वमण्डलभेदिनः** विषमा –विलक्षणा ये अश्वा –शत्रुसैन्यघोटका , तद्भेदनशीला , पक्षे विषमा –विषमसंख्यका , सप्तेति यावत्, अश्वा यस्य स विषमाश्व –सूर्य , तन्मण्डलभेदिन , पुन **प्राप्तमोक्षाः** आप्त –लब्ध , मोक्ष –धनु सकाशात् मोचन यैस्तादृशा , पक्षे मुक्तिशान्तिभीषस्वरूपाश्च अशेषकर्मक्षयानन्तर मध्यस्थसूर्यमण्डलमुल्लङ्घ्य जीवाना मुक्तिगमनप्रसिद्धे , पुन **दत्तदीर्घनिद्रा** दत्ता–प्रापिता, दीर्घनिद्रा मरणम्, पक्षे विवेकशून्यावस्था यैस्तादृशा , **महासन्निपाताः** महान्–भयङ्कर , सन्निपात –सम्यङ् निपातो येषा तादृशा , पक्षे महान्त सन्निपाता –कफादिधातुत्रयवैषम्यरूपत्रिदोषजनितज्वरविशेषा , पुन **स्वेच्छाविहारिण** अप्रतिहतगामिन पक्षे स्वेच्छया विहरणशीला , **खेचरा** आकाशगामिन , पक्षे विद्याधरा , पुन **ऋजुस्वभावाः** वक्रतारहितस्वभावा , पक्षे निष्कपटस्वभावा , **लब्धशुद्धय** परिमार्जनत प्राप्तनैर्मल्या , पक्षे अन्तर्मालिन्यशून्या शुद्धमना , पुन **कचित्** कस्मिंश्चित् स्थले, **वातिका इव** वात–व्याधिमन्ता इव, **सूतमारणोद्यता** सारथिमारणोद्यता , पक्षे सूतस्य–पारदस्य, मारणे उत्सुका , पुन **कचित्** कस्मिंश्चित् स्थाने, **राजाध्यक्षा इव** राज्ञ , अध्यक्षा –करग्रहणाद्यधिकारिजना इव, **आकृष्टसुभटग्रामकङ्कटा** आकृष्टा –विदारिता , सुभटग्रामस्य–सुभटसमूहस्य, कङ्कटा –कवचा यै , पक्षे आकृष्टा –आहृता , सुभटग्रामेभ्य कङ्कटा –कवचा यै , यद्वा आकृष्टा –करादिग्रहणाय आनीता , सुभटग्रामेभ्य कङ्कटा –कृपीवला यैस्तादृशा , अथवा आकृष्टा –अपनीता , सुभटग्रामेभ्य कङ्कटा –कङ्कटका यैस्ते तथा, पुन **कचित्** कुत्रचित् स्थाने, **वलयकारा इव** वलय–हस्तिदन्तमय कङ्कण कुर्वन्ति रचयन्तीति वलयकारा , त इव, **कल्पितकरिविषाणा** कल्पिता –खण्डिता , पक्षे वलयाद्याकारमापादिता –करिणा–हस्तिनाम्, विषाणा –दन्ता यैस्तादृशा , पुन **कचित्** कुत्रापि स्थले, **कितवा इव** द्यूतकारा इव, **लिखिताष्टापदसारफलका** लिखिता –विदारिता , अष्टापदसारफलका –अष्टापदस्य–सुवर्णस्य, सारा –दृढा , फलका –अस्त्राघातनिवारका संग्रामसाधनविशेषा यैस्तादृशा , पक्षे लिखिता –चित्रिता , अष्टापदसारफलका –द्यूतसाधनशारिपट्टा यैस्तादृशा , **कचित्** कुत्रचित् स्थाने, **पतङ्गा इव** शलभा इव, **पक्षपवनान्दोलितदीपिकाखण्डार्चिष** पक्षपवने –पिच्छोद्भूतपवने , पक्षे पक्षोद्भूतपवने , आन्दोलितानि–उद्वेल्लितानि, दीपिकाखण्डार्चींषि–दीपिकाना खण्डभूता ज्वाला यैस्तादृशा , पुन **अभिलषितगजदाना** अभिलषितम्–इष्टम्, गजाना–हस्तिनाम्, दान–खण्डन भेदनमिति यावत्, पक्षे येषा दान–धनसम्प्रदानरूपवितरण यैस्तादृशा , अत एव **मार्गणता** याचनताम्, पक्षे याचकताम्, **उद्वहन्त** दधाना इत्यग्रिमक्रियापदेनान्वेति, पुन **उन्मिषितनीलत्विषः** उन्मिषिता –उद्भासिता , नीला –नीलवर्णा , त्विष –कान्तयो येषा तादृशा , अत एव **याणतां**

नीलत्विषो बाणतां द्विधाकृतोद्दण्डपुण्डरीकाः कादम्बाभिधामारवमुखरिताशामुखाः शिलीमुखाभिख्यां मुख्यामुद्वहन्तः, सायकाः प्रसस्रुः [ड]। अतिसंहततया च तेषामन्तरितचक्षुरिन्द्रियाः पुरोवर्तिनामपि वीराणां रणमतीन्द्रियं नाद्राक्षुरमरपङ्क्तयः, समीपेऽपि त्रिदशतां सुभटजनमुपागतं न स्वयानमारोपयितुमपारयन्नप्सरसः, समासन्नस्यापि न कबन्धस्य स्कन्धरुधिरधारया कपालान्यपूरयन् परेतयुवतयः, निरुद्धचन्द्रालोकबद्धान्धकारेषु च रुधिरनिम्नगातीरेषु प्ररूढतालतरुवनशङ्कया निर्विशङ्कमध्यासितोर्ध्ववेतालमण्डलमध्याभिरमराङ्गनाभिररम्यन्त समरासादिताः पत्तयः [ढ]। मुहूर्ताच प्रीतहृदयः स नरपतिकुमारः सेनाधिपतिमवदत्—'वज्रायुध! तवानेन सकललोकविस्मयकारिणा भुजबलेन धनुरिवावर्जितं मम निसर्गस्तब्धमपि हृदयम्, आशैशवादपारपौरुषमदोन्मादपरवशस्य मे शतशः संगरेषु संवृत्तः प्रवेशः, जातश्च सहस्रसंख्यैर्धन्विभिः सह समागमः,

---

बाणतां चोद्वहन्तः। **द्विधाकृतोद्दण्डपुण्डरीकाः कादम्बाभिधां** द्विधाकृतानि-छिन्नानि, उद्गतदण्डानि पुण्डरीकाणि-छत्राणि यैस्ते तथोक्ताः, अन्यत्र छिन्नोद्दण्डपद्माः, कादम्बाः-हंसाश्च। **आरवमुखरिताशामुखाः शिलीमुखाभिख्यां** शब्दशब्दितदिङ्मुखाः, शिलीमुखाभिख्यां, शिलीमुखाः-भ्रमराः [ड]।

---

शरताम्, पक्षे नीलझिण्टीनामकबाणवृक्षताम्, उद्वहन्तः, तद्वृक्षाणामपि तादृक्कान्तिकत्वेन साधर्म्यात्; पुनः, **द्विधाकृतोद्दण्डपुण्डरीकाः** द्विधाकृतानि-खण्डितानि, उद्दण्डानि-ऊर्ध्वदण्डावलम्बितानि, पुण्डरीकाणि-रिपुभूतनृपच्छत्राणि, पक्षे उद्दण्डानि-ऊर्ध्वनालावलम्बितानि, पुण्डरीकाणि-कमलानि यैस्तादृशाः, अत एव **कादम्बाभिधां** कादम्बेति कलहंससाधारणसंज्ञाम्, उद्वहन्तः, कलहंसानां शराणां च कादम्बसंज्ञकत्वात्; पुनः **आरवमुखरिताशामुखाः** आरवैः-सशब्दैः, मुखरितानि-प्रतिनादितानि, आशामुखानि-दिङ्मुखानि यैस्तादृशाः, अत एव **मुख्यां** प्रधानभूताम्, **शिलीमुखाभिख्यां** भ्रमरसाधारणशिलीमुखेति संज्ञाम्, उद्वहन्तः, शराणां भ्रमराणां च शिलीमुखेतिसंज्ञकत्वात् [ड]। च पुनः, **तेषां** बाणानाम्, **अतिसंहततया** अन्योऽन्यमतिमिलिततया, **अन्तरितचक्षुरिन्द्रियाः** अन्तरितं-व्यवहितम्, चक्षुरिन्द्रियं यासां तादृश्यः, **अमरपङ्क्तयः** पङ्क्तिबद्धदेवगणाः, **पुरोवर्त्तिनामपि** अग्रे स्थितानामपि, **वीराणां** सुयोधानाम्, **अतीन्द्रियम्** इन्द्रियागोचरम्, **रणं** संग्रामम्, **चक्षुषा** नेत्रेण, **न अद्राक्षुः** द्रष्टुमशक्नुवन्। पुनः **समीपेऽपि** पार्श्वेऽपि, पार्श्वस्थितमपीत्यर्थः, **त्रिदशतां** संग्राममरणजन्यदेवत्वम्, **उपागतं** प्राप्तम्, **सुभटजनं** सुयोधजनम्, **स्वयानं** स्ववाहनम्, **आरोपयितुम्** आरोहयितुम्, **अप्सरसः** स्वर्वेश्याः, **न अपारयन्** अशक्नुवन्, निरन्तरबाणप्रहारजनितान्धकारमयत्वेन पार्श्ववर्तिनोऽपि मृतसुभटा न दृष्टिगोचरीभवितुमशकन्निति भावः। एवं **समासन्नस्यापि** पार्श्वस्थस्यापि, **कबन्धस्य** "मनुष्याणां सहस्रेषु हतेषु हतमूर्धसु। तदावेशात् कबन्धः स्यादेकोऽमूर्धा क्रियान्वितः॥" इत्यन्यत्रोक्तशिरोरहितसक्रियशरीरस्य, **स्कन्धरुधिरधारया** स्कन्धरुधिरस्य-स्कन्धस्यन्दितशोणितस्य, धारया-प्रवाहेण, **परेतयुवतयः** पिशाचयुवतयः, **कपालानि** सकर्परान्, **न अपूरयन्** न पूरयितुमपारयन्। च पुनः, **निरुद्धचन्द्रालोकबद्धान्धकारेषु** निरुद्धः-अनवरतबाणवर्षेणावरुद्धः, चन्द्रालोकः-चन्द्रप्रकाशो येषु तादृशेषु, अत एव बद्धः-स्थापितः, अन्धकारो येषु, यद्वा निरुद्धेन चन्द्रालोकेन बद्धोऽन्धकारो येषु तादृशेषु, **रुधिरनिम्नगातीरेषु** शोणितनदीतटेषु, **प्ररूढतालतरुवनशङ्कया** प्ररूढतालाख्यवृक्षविशेषवनसन्देहेन, **निर्विशङ्कं** निश्शङ्कं यथा स्यात् तथा, **अध्यासितोर्ध्ववेतालमण्डलमध्याभिः** अध्यासितम्-अधिष्ठितम्, ऊर्ध्ववेतालानाम्-ऊर्ध्ववर्तिव्यन्तरविशेषाणाम्, मण्डलमध्यं-मण्डलमध्यभागो याभिस्तादृशीभिः, **अमराङ्गनाभिः** देवाङ्गनाभिः, **समरासादिताः** समरात्-रणात्, आसादिताः-प्राप्ताः, **पत्तयः** पदातयः, **अरम्यन्त** रम्यन्ते स्म [ढ]। च पुनः, **मुहूर्तात्** क्षणात्, **प्रीतहृदयः** प्रसन्नमनाः, **स नरपतिकुमारः** राजकुमारः, **सेनाधिपतिं** सेनानायकं वज्रायुधम्, **अवदत्** उक्तवान्, **वज्रायुध!** हे तत्संज्ञकसेनापते! **सकललोकविस्मयकारिणा** सकललोकानां-सर्वजनानाम्, विस्मयकारिणा-आश्चर्यजनकेन, **अनेन तव भुजबलेन** बाहुविक्रमेण, **निसर्गस्तब्धमपि** निसर्गेण-स्वभावेन, स्तब्धमपि-निश्चेष्टमपि, मम **हृदयं**, **धनुरिव** चापदण्ड इव, **आवर्जितं** नमितम्, सचेष्टतामापादितमित्यर्थः। **आ शैशवात्** आबाल्यात्, **अपारपौरुषमदोन्मादपरवशस्य** अपारम्-अनन्तम्, यत् **पौरुषं** पराक्रमः, तज्जन्येन मदेन-अभिमानेन, य उन्मादः-

न तु जनितमेवंविधं केनाप्यपरेण कौतुकम्, अतिवाहितश्च पुरः करकलितकार्मुकेण काल एतावान्, तदेतर्हि कृत्वा मनः सविशेषसावधानं प्रहर सर्वात्मना, विधेहि च स्वशक्त्या महात्मन्! आत्मनो रक्षाम्, एष मुच्यसे भुजबलाभिमानभङ्गादवलम्बितासमक्षमस्य समक्षमस्य सामन्तलोकस्य मर्त्यलोकावाससौख्येनेति व्याहरन्नेव वेगाकृष्टचापयष्टिरुत्पातजलधर इव जलधारासारमन्धकारिताष्टदिगन्तरालसूत्रिताकालप्रदोषम्, अनवरतमुत्पतद्भिर्नभसि भीषणैर्ज्यानिनादैररिशिरोभिश्च व्याहृतविसर्गम्, स्तूयमानमिव सुभटशस्त्रपातरणितेन, प्रणम्यमानमिव भूमिनिक्षिप्तमूर्धभिः कबन्धैः, अर्च्यमानमिव निपतदातपत्रकुसुमैः स्यन्दनैः, क्षिप्यमाणलाजमिव उच्छलत्कुम्भमुक्ताफलाभिः करिघटाभिः, अभिषिच्यमानमिव मुक्तासृग्वृष्टिभिः प्रहारव्रणैः, दीयमानचक्राभिघातमिव विलोलमणिकुण्डलैः क्ष्मापालमुण्डैः, प्रबलपरिवारपरिगतमिव शरच्छेदैः, मूकं

---

क्षिप्तविभ्रमः, तत्परवशस्य-तदधीनस्य, मे मम, शतशः शतशतसंख्यकेषु, संगरेषु संग्रामेषु, प्रवेशः, संवृत्तः निष्पन्नः। च पुनः, सहस्रसंख्यैः सहस्रात्मकसंख्याविशिष्टैः, धन्विभिः धनुर्धारिभिः, सह समागमः, जातः अभूत्। तु किन्तु, अपरेण त्वदन्येन, केनापि, एवंविधम् ईदृशम्, कौतुकं न जनितं नोत्पादितम्। च पुनः, करकलितकार्मुकेण करे-हस्ते, कलितं-धृतम्, कार्मुकं-धनुर्येन तादृशेन, मयेति शेषः, पुरः पूर्वम्, एतावान्, कालः समयः, अतिवाहितः व्यतीतः, तत् तस्माद्धेतोः, एतर्हि अधुना, मनः हृदयम्, सविशेषसावधानं सविशेषं-सातिशयम्, सावधानम्-अवधानपूर्वकं यथा स्यात् तथा, सर्वात्मना सर्वतोभावेन, प्रहर मदुपरि प्रहारं कुरु। च पुनः, महात्मन्! भो महानुभाव!, स्वशक्त्या स्वपराक्रमेण, आत्मनः स्वस्य, रक्षां प्रतीकारम्, विधेहि कुरु। एषः पुरोवर्ती त्वमिति यावत्, भुजबलाभिमानस्य बाहुबलगर्वस्य, भङ्गात् नाशात्, अवलम्बितासमक्षमस्य अवलम्बिता-आश्रिता, असमा-असाधारणा, क्षमा-सहनशक्तिर्येन तादृशस्यापि, समक्षमस्य साधारणसहनशक्तिकस्येति विरोधः, तदुद्धारे तु तादृशस्य अस्य, सामन्तलोकस्य, स्वाधिकृतनृपजनस्य, समक्षम्, मर्त्यलोकावाससौख्येन मर्त्यभुवननिवाससुखेन, मुच्यसे रहितो भवसि, एतत्क्षणमेव म्रियसे इति भावः। इति व्याहरन्नेव इत्थं ब्रुवन्नेव, वेगाकृष्टचापयष्टिः वेगेन-शीघ्रम्, आकृष्टा चापयष्टिः-धनुर्दण्डो येन तादृशः सन्, पक्षे चापः-इन्द्रधनुः, उत्पातजलधरः प्रलयकालिकमेघः, जलधारासारमिव वेगविशिष्टवृष्टिमिव, यद्वा जलधाराऽऽसारम्, उत्पातजलधर इव, असंख्यं सङ्ख्याशून्यम्, मार्गणव्रातं बाणगणम्, असृजत् अमुञ्चत्। कीदृशम्? अन्धकारिताष्टदिगन्तरालसूत्रिताकालप्रदोषं-अन्धकारितेन-अन्धकारव्यापितेन, अष्टानां दिशाम्, अन्तरालेन-मध्येन, सूत्रितः-कल्पितः, अकाले-असमये, प्रदोषः-निशारम्भो येन तादृशम्; पुनः नभसि आकाशे, उत्पतद्भिः उच्छलद्भिः, भीषणैः भयङ्करैः, ज्यानिनादैः मौर्वीशब्दैः, च पुनः, अरिशिरोभिः शत्रुमस्तकैः, व्याहृतविसर्गं व्याहृतः-सूचितः, विसर्गः-विमोचनं यस्य तादृशम्; पुनः सुभटशस्त्रपातरणितेन सुभटानां-सुवीराणाम्, यानि शस्त्राणि-खड्गादीनि, तत्पातेन-तत्प्रहारेण, यद्रणितं-शब्दः, तेन, स्तूयमानमिव क्रियमाणस्तुतिकमिवेत्युत्प्रेक्षा; पुनः भूमिनिक्षिप्तमूर्धभिः भूमौ निक्षिप्ताः-प्रक्षिप्ताः, मूर्धानो-मस्तकानि येषां तादृशैः, कबन्धैः शिरोरहितशरीरैः, प्रणम्यमानमिव क्रियमाणप्रणाममिवेत्युत्प्रेक्षा; पुनः निपतदातपत्रकुसुमैः निपतन्ति-स्खलन्ति, आतपत्राणां-छत्राणाम्, कुसुमानि-पुष्पाणि येभ्यस्तादृशैः, पक्षे निपतन् य आतपस्ततो रक्षणकर्तॄणि कुसुमानि, स्यन्दनैः रथैः, अभ्यर्च्यमानमिव पूज्यमानमिव; पुनः उच्छलत्कुम्भमुक्ताफलाभिः उच्छलन्ति-उद्वेलन्ति, कुम्भमुक्ताफलानि-मस्तकस्थितमुक्तामणयः, पक्षे कुम्भवद् वर्तुलानि मुक्ताफलानि यासां तादृशीभिः, करिघटाभिः हस्तिसमूहैः, क्षिप्यमाणलाजमिव क्षिप्यमाणाः-प्रक्षिप्यमाणाः, लाजाः-आर्द्रतण्डुला भृष्टधान्यानि वा यस्मिंस्तादृशमिव; पुनः मुक्तासृग्वृष्टिभिः मुक्ताः-पातिताः, असृजां-रुधिराणाम्, वृष्टयः-वर्षा यैस्तादृशैः, प्रहारव्रणैः प्रहारजन्यक्षतैः, अभिषिच्यमानमिव क्रियमाणाभिषेकमिव; पुनः विलोलमणिकुण्डलैः विलोलानि-चपलानि, मणिकुण्डलानि मणिमयकर्णालङ्करणविशेषा येषु तादृशैः, क्ष्मापालमुण्डैः नृपमस्तकैः, दीयमानचक्राभिघातमिव दीयमानः-क्रियमाणः, चक्रेण-तदाख्यास्त्रविशेषेण, अभिघातः-आघातो यस्य तादृशमिव; पुनः शरच्छेदैः अन्यान्यबाणखण्डैः, प्रबलपरिवारपरिगतमिव प्रबलैः-बलवत्तरैः, परिवारैः-

मांसभेदे, मन्दं मेदसि, मुखरमस्थिषु, मन्थरं स्नायुग्रन्थिष्वसंख्यमसृजन्मार्गणव्रातम् [ण] । अतिवेगव्यापृतोऽस्य तत्र क्षणे प्रोत इव तूणीमुखेषु, लिखित इव मौर्व्याम्, उत्कीर्ण इव पुङ्खेषु, अवतंसित इव श्रवणान्ते तुल्यकालमलक्ष्यत वामेतरः पाणिः [त] । अविरलशरासारत्रासिता हंसीव मेघागमे पल्वलमनवलोकिताश्रयविसंस्थुला सैन्यपतिवक्षःस्थलममुञ्चद् राजलक्ष्मीः; उद्भ्रान्तहृदया च क्षणं बाहुशिरसि, क्षणं धनुषि, क्षणं कृपाणधाराम्भसि, क्षणमातपत्रे, क्षणं पालिध्वजेषु, क्षणं चामरेष्वकुरुत स्थितिम् । [थ] । अहं तु तां तस्य विपदमप्रतिविधेयामुपनतामवलोक्य किंकर्तव्यतामूढः स्तम्भित इव मुहूर्तमतिष्ठम्, प्रयत्नवशाच्च प्रत्यानीतधैर्य इतस्ततश्च धावता हृदयेन तस्य प्राणपरिरक्षणोपायान् मृगयमाणः सततमासन्नवर्त्यपि व्याकुलतया मुहूर्तमपसृतं स्मृतेर्झगिति तत्पुरा परमेश्वरेण प्रहितमङ्गुलीयकं बालारुणमस्मरम्, उच्छ्वसितहृदयश्च तदभिनन्द्य बहुप्रकारमादरकृतप्रणामः पाणिना दक्षिणेनोदक्षिपम्, आक्षेपस्खलद्वाणिश्च तत्क्षणमरातिबाणोन्मथितकेतुच्छत्रकार्मुकं

---

टिप्पनकम्—पालिध्वजाः...... [थ] ।

---

परिजनैः, परिगतं—व्याप्तमिवेति सर्वत्रोत्प्रेक्षा; पुनः **मांसभेदे** मांसभेदनावसरे, **मूकं** निःशब्दम्; पुनः **मेदसि** वसायां मांसजन्यधातुविशेषे इति यावत्, तद्भेदने इत्यर्थः, **मन्दम्** अतीक्ष्णम्; पुनः **अस्थिषु** अस्थिभेदने, **मुखरं** वाचालम्; पुनः **स्नायुग्रन्थिषु** शारीरिकवायुवाहकनाडीविशेषग्रन्थिभेदने, **मन्थरं** जडम्, शिथिलप्रवृत्तिकमिति यावत् [ ण ] । **तत्र** तस्मिन्, **क्षणे** मुहूर्ते, **अस्य** नृपकुमारस्य, **अतिवेगव्यापृतः** वेगातिशयेन कृतव्यापारः, **वामेतरः** दक्षिणः, **पाणिः** हस्तः, **तुल्यकालं** समकालमेव, **अलक्ष्यत** लक्षितः । कीदृशः ? **तूणीमुखेषु** इषुधिमुखेषु, **प्रोत इव** गुम्फित इव; पुनः **मौर्व्यां** ज्यायाम्, **लिखित इव** चित्रित इव; पुनः **पुङ्खेषु** बाणमूलेषु, **उत्कीर्ण इव** उत्क्षिप्त इव; पुनः **श्रवणान्ते** कर्णान्तभागे, **अवतंसित इव** अलङ्करणतामापादित इवेति सर्वत्रोत्प्रेक्षा [ त ] । **मेघागमे** वर्षागमे, **अनवलोकिताश्रयविसंस्थुला** अनवलोकितः—अदृष्टः, आश्रयः—स्थानं यया तादृशी, अत एव विसंस्थुला—शिथिला, हंसी, **पल्वलं** क्षुद्रजलाशयमिव, **अविरलशरासारत्रासिता** अविरलेन—निरन्तरेण, शराणां—बाणानाम्, आसारेण—धारापातेन, त्रासिता सती, **राजलक्ष्मीः** राजोपास्यलक्ष्मीनामकदेवी, **सैन्यपतिवक्षःस्थलं** सैन्यपतेः—सेनानायकस्य, वज्रायुधस्य, वक्षःस्थलं—वक्षःप्रदेशम्, **अमुञ्चत्** त्यक्तवती । **च** पुनः, **उद्भ्रान्तहृदया** उद्भ्रान्तम्—उज्झितम्, हृदयं—सेनापतिवक्षो यया तादृशी सती, अत्र **उद्भ्रान्तहृदयेति** पाठे उद्भ्रान्तं—निजाश्रयविक्षेपवशेन, सम्भ्रान्तं—हृदयं यस्यास्तादृशी सतीत्यर्थः, राजलक्ष्मीरिति शेषः । **क्षणं** किञ्चित् कालम्, **बाहुशिरसि** बाहूर्ध्वभागे, पुनः क्षणं **धनुषि** धनुर्दण्डोपरि, पुनः क्षणं **कृपाणधाराम्भसि** खड्गधारात्मकजले, पुनः क्षणम् **आतपत्रे** छत्रोपरि, पुनः क्षणं किञ्चित् कालम्, **पालिध्वजेषु** कोणस्थितध्वजेषु, पुनः क्षणं **चामरेषु** राजव्यजनेषु, **स्थितिं** निवासम्, **अकुरुत** कृतवती [ थ ] । **अहं तु** विजयवेगस्तु, **तस्य** सेनापतेः, **अप्रतिविधेयाम्** अप्रतिकार्याम्, **उपनताम्** उपस्थिताम्, तां **विपदं** विपत्तिम्, **अवलोक्य** दृष्ट्वा, **किंकर्तव्यतामूढः** कर्तव्यविवेकरहितः, **स्तम्भित इव** कृतस्तम्भन इव, **मुहूर्तं** क्षणम्, **अतिष्ठं** स्थितवान् । **च** पुनः, **प्रयत्नवशात्** आयासवशात्, **प्रत्यानीतधैर्यः** प्रत्यानीतं—पुनराबाहितं धैर्यं येन तादृशः सन्, **इतस्ततः** अत्र तत्र, **धावता** भ्रमता, **हृदयेन** मनसा, **तस्य** सेनापतेः, **प्राणपरिरक्षणोपायान्** प्राणपरिरक्षणस्य—जीवनरक्षायाः, **उपायान्** प्रतीकारान्, **मृगयमाणः** अन्विष्यन्, **सततं** सदैव, **आसन्नवर्त्यपि** पार्श्ववर्त्यपि, **व्याकुलतया** व्यग्रतया, **मुहूर्तं** क्षणम्, **स्मृतेः** स्मृतिपथात्, **अपसृतं** भ्रष्टम्, **पुरा** पूर्वम्, **परमेश्वरेण** परमेश्वरतुल्यप्रभावेण भवता, **प्रहितं** प्रेषितं, तत्, **बालारुणं** तन्नामकम्, **अङ्गुलीयकम्** अङ्गुलिभूषणम्, **झटिति** शीघ्रम्, **अस्मरं** स्मृतवान् । **च** पुनः, **उच्छ्वसितहृदयः** उच्छ्वसितहृदयः सन्, तत् अङ्गुलीयकम्, **बहुप्रकारं** बहवः प्रकारा यस्मिंस्तादृशं यथा स्यात् तथा, **अभिनन्द्य** स्तुत्वा, **सादरकृतप्रणामः** आदरेण न तूपेक्षया कृतः प्रणामो नमस्कारो येन तादृशः, **दक्षिणेन** वामेतरेण, **पाणिना** हस्तेन, **उदक्षिपम्** उत्क्षिप्तवान् । **च** पुनः, **आक्षेपस्खलद्वाणिः** आक्षेपेण—रिपुकृतापमानेन, स्खलन्ती—स्खलनमाश्रयन्ती, वाणी—वचनं यस्य तादृशः, **तत्क्षणं** तत्कालम्, **अरातिबाणोन्मथितकेतुच्छत्रकार्मुकम्**

सेनान्यमुच्चैस्तरेण स्वरेणावोचम्—'दण्डाधिप ! कृतं तावदपरायुधपरिग्रहेण, गृहाण बालारुणाभिधानमिदममोघं प्रहरणम्, अनेन परिगृहीतभुजदण्डशक्तिर्विधेहि निरवग्रहप्रसरस्य विद्विषः प्रतापखण्डनम्, अकाण्ड एव निर्व्याजपौरुषतया मा स्म विसरः स्वामिकार्यम्' [द]। असौ तु सासूय इव तन्मदीयवचनमवधार्य कृतावधीरणो रणरसोच्छ्वसितगात्रयष्टिराविष्ट इव 'रे रे दुरात्मन् ! दुर्गृहीतधनुर्विद्यामदाध्मात ! द्रविडाधम ! धधान क्षणमात्रमग्रतोऽवस्थानम्, अस्थान एव किं दृप्यसि, पश्य ममापि संप्रति शस्त्रविद्याकौशलम्' इत्युदीर्य निर्यत्पुलकमसिलताग्रहणाय दक्षिणं प्रसारितवान् बाहुम्। अरिवधावेशविस्मृतात्मनश्च तस्योल्लसितकोपसाटोपकम्पिताङ्गुलौ कराग्रभागे गृहीत्वाङ्गुलीमेकां तदहमङ्गुलीयकमतिक्षिपम्। अधिष्ठितश्च स तदीयच्छायया तत्क्षणमेव दिग्नागदन्तमुशल इव वज्रप्रतिमया, महाहिभोग इव मणिप्रभया, समुद्रोर्मिरिव बाडवार्चिषा, कामप्यभिरामतामधृष्यतां च पर्यपुष्यत् [ध] ॥

---

टिप्पनकम्—धधान कुरु। अतिक्षिपं स्थापितवान् [ध]।

---

अरातीनां-शत्रूणाम्, बाणैः-बाणघातैः, उन्मथितानि-उच्छिन्नानि, केतुच्छत्रकार्मुकाणि-केतुः-ध्वजः, छत्रम्-आतपत्रम्, कार्मुकं-धनुश्च यस्य तादृशम्, सेनान्यं सेनाधिपतिम्, उच्चैस्तरेण अतिदीर्घेण, स्वरेण-कण्ठध्वनिना, अवोचम् उक्तवान्, अहमिति सर्वत्र शेषः। किमित्याह—दण्डाधिप ! चतुरङ्गसेनापते !, तावदिति वाक्यालङ्कारे, अपरायुधपरिग्रहेण अपरस्य-अन्यस्य, आयुधस्य-शस्त्रस्य, परिग्रहेण-ग्रहणेन, कृतम् अलम्, तत्परिग्रहो वृथेत्यर्थः। किन्तु बालारुणाभिधानं बालारुणनामकम्, इदं सन्निकृष्टम्, अमोघम् अव्यर्थम्, प्रहरणम् अस्त्रम्, गृहाण धारय। अनेन अङ्गुलीयकप्रहरणेन, परिगृहीतभुजदण्डशक्तिः सगृहीतभुजरूपदण्डसामर्थ्यः सन्, निरवग्रहप्रसरस्य निष्प्रतिबन्धप्रहारस्य, विद्विषः शत्रोः, प्रतापखण्डनं पराक्रमक्षयम्, विधेहि कुरु। अकाण्ड एव अनवसर एव, निर्व्याजपौरुषतया निष्कपटपराक्रमेण, वास्तविकपराक्रमेणेति यावत्, स्वामिकार्यं स्वामिकृतनियोगम्, मा स्म विसरः न विसर्यताम् [द]। असौ [redacted] सेनापतिस्तु, सासूय इव आविष्कृतदोष इव, तत् अनुपदोक्तम्, मदीयवचनं मदुपार्थ्यमावेदकवाक्यम्, अनवधार्य दृढध्यानत्वेनानिश्चित्य, उपेक्ष्येत्यर्थः, कृतावधीरणः कृततिरस्कारः, रणरसोच्छ्वसितगात्रयष्टिः रणरसेन-रणानुरागेण, उच्छ्वसिता-उद्गलिता, गात्रयष्टिः-शरीररूपा यष्टिर्यस्य तादृशः, आविष्ट इव प्रकुपित इव, भूताविष्ट इव वा, रे रे दुरात्मन् ! रे रे दुष्टात्मन् ! दुर्गृहीतधनुर्विद्यामदाध्मात ! दुर्गृहीतायाः-अयथास्थिततया गृहीतायाः, धनुर्विद्यायाः, मदेन-गर्वेण, आध्मात !-व्याप्त ! द्रविडाधम ! द्रविडदेशीयाधम !, क्षणमात्रं मुहूर्तमात्रम्, अग्रतः अग्रे, अवस्थानं स्थितिम्, धधान कुरु। अस्थान एव अनवसर एव, किं कस्माद्धेतोः, दृप्यसि गर्वं करोषि !, सम्प्रति तत्कालम्, पश्य अनुभव, ममापि मदीयमपि, शस्त्रविद्याकौशलं शस्त्रविद्यावैदग्ध्यम्, इत्युदीर्य इत्युक्त्वा, निर्यत्पुलकं निर्यन्तः-निर्गच्छन्तः, पुलकाः-रोमाञ्चा यस्मिंस्तादृशं यथा स्यात् तथा, असिलताग्रहणाय खड्गलताग्रहणाय, दक्षिणं वामेतरम्, बाहुं प्रसारितवान् व्यापारितवान्। च पुनः, अरिवधावेशविस्मृतात्मनः अरिवधावेशेन-शत्रुमारणाग्रहेण, विस्मृत आत्मा-स्वरूपं येन तादृशस्य, तस्य सेनापतेः, एकाम् अङ्गुलीं करशाखाम्, गृहीत्वा धृत्वा, उल्लसितकोपसाटोपकम्पिताङ्गुलौ उल्लसितेन-उत्कटेन, कोपेन-क्रोधेन, साटोपं-सावष्टारं यथा स्यात् तथा, कम्पिताः-अङ्गुलयो यस्मिंस्तादृशे, कराग्रभागे हस्ताग्रभागे, तत् बालारुणनामकम्, अङ्गुलीयकम्, अहम्, अतिक्षिपं स्थापितवान्, धारितवानित्यर्थः। स सेनापतिः, तदीयच्छायया अङ्गुलीयककान्त्या, अधिष्ठितः व्याप्तः सन्, तत्क्षणमेव तत्कालमेव, कामपि अनिर्वचनीयाम्, अभिरामतां रमणीयताम्, अधृष्यताम् अपराजेयतां च, पर्यपुष्यत् परिपुष्टवान्। कया क इव ! वज्रप्रतिमया वज्रधारदृशेन वज्रतुल्याकृत्या वा, वज्रप्रतिभयेति पाठे तु वज्रतुल्यकान्त्येत्यर्थः, दिङ्नागदन्तमुशल [redacted] दिङ्नागानां-दिग्गजानाम्, मुशलाकारदन्त इव, पुनः मणिप्रभया मणिकान्त्या, महाहिभोग इव महासर्पफणा इव,

अथ तस्य संनिहितदीपिकाखण्डकरदण्डताडिताः कोपेनेव प्रजज्वलुः प्राज्यतेजसो मणयः, प्रचिक्षिपुश्च दिङ्मुखेषु क्षेपीयः कटाक्षानिव दीर्घारुणानंशून् [न]। तैश्च प्रभापीतचन्द्रातपैः समन्ततः परामृष्टमभिनवार्ककिरणस्पृष्टमिव कुमुदकाननं सद्य इव निद्रया प्रत्यपद्यत प्रतिपक्षसैन्यम्, उद्दामदानपङ्कलग्नानीव नोद्धर्तुमङ्कुशानि शेकुरनेकपकपोलकूटेभ्यो निषादिनः, सुराङ्गनादर्शनोपारूढमदेव सद्योऽमुकुलायत दृष्टिः सुभटानाम्, कृतकचग्रहकालदूताकृष्यमाणानीव शनैः शनैरवनेमुः परिशिथिलकन्धरासंधीनि शिरांसि योधानाम्, विघटितमुष्टिबन्धविगलितासयश्च कृपाणिकाग्रहणस्पृहयेव निपेतुर्जघनपार्श्वेषु प्रहारदानाय दूरोत्क्षिप्ता दक्षिणपाणयः पादातस्य, अर्धावकृष्टस्रस्तकार्मुकनिरस्ताश्चार्धपथे एवाधोमुखीबभूवुस्त्रासशरव्यापायेव सायका धनुष्मताम्, दृष्टसुरवधूविभ्रमाविर्भूतमदनार्तानामिव प्रावर्तन्त जृम्भिका मुखेषु रथारोहाणाम्, स्वमदृष्टाचिरविमुक्तोद्वाष्पनिजजायाजनितदुःखानामिव प्रसस्रुरायतानि श्वसितान्यश्ववाराणाम्, श्रवणप्रविष्टारातिसिंहनादमुहूर्तविस्फा-

---

पुनः वाडवार्चिषा वडवानलज्वालया, समुद्रोर्मिरिव समुद्रतरङ्ग इव [ध] ॥ अथ अङ्गुलीयकधारणानन्तरम्, तस्य अङ्गुलीयकस्य, प्राज्यतेजसः प्रचुरतेजसः, मणयः, प्रजज्वलुः प्रज्वलन्ति स्म; कीदृशाः केनेव ? संनिहितदीपिकाखण्डकरदण्डताडिताः संनिहितानां-पार्श्वस्थितानाम्, दीपिकानां-प्रदीपानाम्, यः खण्डः-समूहः, तदीयकरदण्डैः-हस्तदण्डाभेदेनाध्यवसीयमानकिरणदण्डैः, ताडिताः-आहताः, अत एव कोपेनेव ताडनजन्यक्रोधेनेवेति प्रज्वलनहेतूत्प्रेक्षा। च पुनः, दिङ्मुखेषु दिङ्नायिकामुखेषु, नायकधिया कटाक्षानिव, क्षेपीयः अतिशीघ्रम्, दीर्घारुणान् दीर्घान्-आयतान्, अरुणांश्च, अंशून् किरणान्, प्रचिक्षिपुः प्रक्षिप्तवन्तः [न]। च पुनः, प्रभापीतचन्द्रातपैः प्रभया-कान्त्या, पीतः, चन्द्रातपः-चन्द्रिका यैस्तादृशैः; तैः मणिकिरणैः, समन्ततः सर्वतः, परामृष्टं स्पृष्टम्, प्रतिपक्षसैन्यं शत्रुसैन्यम्, अभिनवार्ककिरणस्पृष्टम् अभिनवस्य-उदयकालिकस्य, अर्कस्य-सूर्यस्य, किरणैः स्पृष्टम्, कुमुदकाननं कुमुदवनमिव, सद्य एव तत्क्षणमेव, निद्रया प्रत्यपद्यत प्राप्यत, अभिभूतमिति यावत्। निषादिनः हस्तिपकाः, उद्दामदानपङ्कलग्नानीव उद्दामा-उद्गाढो यो दानपङ्कः-मदकर्दमः, तत्र लग्नानीव-मग्नानीव, अङ्कुशानि हस्तिनियामकास्त्रविशेषान्, अनेकपकपोलकूटेभ्यः अनेकपानां-हस्तिनाम्, कपोलकूटेभ्यः-गण्डमण्डलेभ्यः, उद्धर्तुं निष्कासयितुम्, न शेकुः शक्नुवन्ति स्म। सुभटानां सुयोधानाम्, दृष्टिः, सुराङ्गनादर्शनोपारूढमदेव सुराङ्गनानां-देवाङ्गनानाम्, दर्शनेन-अवलोकनेन, उपारूढः-उद्भूतः, मदः-व्यामोहो यस्यास्तादृशीव, सद्यः तत्क्षणम्, अमुकुलायत समकुचत्। परिशिथिलकन्धरासन्धीनि परिशिथिलः-अतिशिथिलः, कन्धरासन्धिः-ग्रीवासन्धिर्येषां तादृशानि, योधानां सुभटानाम्, शिरांसि मस्तकानि, कृतकचग्रहकालदूताकृष्यमाणानीव कृतः कचग्रहः-केशाकर्षणं यैस्तादृशैः, कालदूतैः-यमराजदूतैः, आकृष्यमाणानीव-कृताकर्षणानीव, शनैः शनैः मन्दं मन्दम्, अवनेमुः अवनमन्ति स्म। च पुनः, विघटितमुष्टिबन्धविगलितासयः विघटितः-विश्लिष्टो यो मुष्टिबन्धः-अङ्गुलिसन्निवेशः, तेन विगलिताः-स्खलिताः, असयः-कृपाणा येभ्यस्तादृशाः, प्रहारदानाय प्रहारकरणाय, दूरोत्क्षिप्ताः दूरमुत्पातिताः, पादातस्य पादगामिसैनिकसमूहस्य, दक्षिणपाणयः दक्षिणहस्ताः, कृपाणिकाग्रहणस्पृहयेव कर्तरिकाग्रहणकामनयेव, जघनपार्श्वेषु कटिपुरोभागनिकटेषु, निपेतुः निपतिताः। च पुनः, अर्धावकृष्टस्रस्तकार्मुकनिरस्ताः प्राग् अर्धम् अवकृष्टानि-आकृष्टानि, पश्चात् स्रस्तानि-स्खलितानि यानि कार्मुकाणि-धनूंषि तेभ्यो निरस्ताः-स्खलिताः, धनुष्मतां धनुर्धारिणाम्, सायकाः बाणाः, त्रासशरव्यापायेव। त्रासत्रयाः, अर्धपथ एव अर्धमार्ग एव, अधोमुखीबभूवुः अधोमुखीभूताः। पुनः दृष्टसुरवधूविभ्रमाविर्भूतमदनार्तानामिव दृष्टैः-अवलोकितैः, सुरवधूनां-देववधूनाम्, विभ्रमैः-विलासैः, आविर्भूतेन-प्रकटितेन मदनेन-कामेन, आर्तानामिव-पीडितानामिव, रथारोहाणां रथारूढसैनिकानाम्, मुखेषु जृम्भिकाः-मुखविकाशाः, प्रावर्तन्त प्रवर्तन्ते स्म। पुनः स्वमदृष्टाचिरविमुक्तोद्वाष्पनिजजायाजनितदुःखानामिव स्वमदृष्टाभिः-स्वप्नावस्थायामवलोकिताभिः, अचिरविमुक्तोद्वाष्पाभिः-तात्कालिकविगलितोद्गताश्रुभिः, निजजायाभिः-स्ववधूभिः, जनितम्-अनुभावितं दुःखं येषां तादृशानामिव, अश्ववाराणाम् अश्वारोहिसैनिकानाम्, आयतानि दीर्घाणि, श्वसितानि निःश्वासाः, प्रसस्रुः प्रसरन्ति स्म। पुनः श्रवणप्रविष्टारातिसिंहनादमुहूर्तविस्फारितापि श्रवणयोः-कर्णयोः, प्रविष्टे, अरातीनां-शत्रूणाम्, सिंहनादे-सिंहनादसदृशनादे।

रिताप्यघटतामर्षलोहितायमानजडपुटा दृष्टिः सामन्तानाम्, अव्यापृतवामकरतलालीनरश्मिपाशाश्चोर्ध्वीकृतप्राजनावष्टम्भेन विसंस्थुलावयवास्तस्थुः सारथयः [प]। एवं च तेनातर्कितोपनतेनाप्रतिविधेयेन दैवेनेव लुप्तपुरुषकारेण, जरागमेनेव मन्दीकृताखिलेन्द्रियशक्तिना, महापुरुषेणेव गोपायितसमस्तात्मगुणेनाऽनायुःपरिक्षयेण मृत्युनाऽसर्पदंशेन विषवेगेनाऽनभिघातजेन मूर्च्छान्धकारेणाऽदोषक्षोभजन्मना संनिपातेनाऽनुन्मीलिततारकेण तमसा, महानिद्रावेगेन युगपदभिभूयमाने वैरिसैन्ये स वीरवर्गाग्रेसरो राजकुमारो रोषदष्टाधरोष्ठमुज्झितरथपृष्ठमुद्गूर्णकृपाणमभिमुखमतिरंहसा समापतन्तं सेनापतिमवलोक्य तद्वधाय धनुषि निवेशितमसितलोलदीधितिजटालफलधारमरातिरुधिरपानतृष्णया प्रसारितजिह्वासहस्रमिव सद्य एव समहृत संहृतानेकप्रतिपक्षप्राणं बाणम्, उत्सृष्टचापयष्टिश्च तत्क्षणं क्षात्रसमरनीतिप्रियतया पृथक्कृत्य परिवारतः कृपाणमात्मानं च वेगादवतरन्निद्रावेगविगलितपरिस्पन्दः स्यन्दनोत्सङ्गमगमत् [फ]।

---

मुहूर्तं-किञ्चित्कालम्, विस्फारितापि-विस्तारितापि, अमर्षलोहितायमानजडपुटा अमर्षेण-क्रोधेन, लोहितायमानौ-रक्तीभवन्तौ, जडपुटौ-व्यामूढचर्मपुटौ यस्यास्तादृशी, सामन्तानाम् अधिकृतनृपाणाम्, दृष्टिः, अघटत समकुचत्। च पुनः, अव्यापृतवामकरतलालीनरश्मिपाशाः अव्यापृताः-व्यापाररहिताः, वामकरतले-वामहस्ततले, आलीनाः-संसक्ताः, रश्मिपाशाः-अश्वादिनियन्त्रकरज्जुपाशा येषां तादृशाः, विसंस्थुलावयवाः विह्वलावयवाः, सारथयः-अश्वशासकाः, ऊर्ध्वीकृतप्राजनावष्टम्भेन ऊर्ध्वीकृतस्य-उन्नमितस्य, प्राजनस्य-अश्वादिप्रेरकदण्डस्य, अवष्टम्भेन-अवलम्बेन, तस्थुः तिष्ठन्ति स्म [प]। च पुनः, एवम् अनेन प्रकारेण, अतर्कितोपनतेन अकस्मादापतितेन, अप्रतिविधेयेन प्रतीकाररहितेन, अत एव दैवेनेव दुर्भाग्येणेव, लुप्तपुरुषकारेण लुप्तः-विनष्टः, पुरुषकारः-पराक्रमो येन तादृशेन; पुनः जरागमेनेव वार्धक्यागमेनेव, मन्दीकृताखिलेन्द्रियशक्तिना मन्दीकृता-शिथिलिता, अखिलेन्द्रियशक्तयः-सर्वेन्द्रियसामर्थ्यानि येन तादृशेन; पुनः महापुरुषेणेव महात्मनेव, गोपायितसमस्तात्मगुणेन गोपायिताः-तिरोहिताः, पक्षे संयमेन रक्षिताः, समस्ताः, आत्मगुणाः-धैर्यादयो येन तादृशेन; पुनः अनायुःपरिक्षयेण आयुःपरिक्षयरहितेन, मृत्युना मृत्युरूपेण; पुनः असर्पदंशेन सर्पदशनरहितेन, विषवेगेन विषज्वालारूपेण; पुनः अनभिघातजेन प्रहाराजन्येन, आकस्मिकेनेत्यर्थः, मूर्च्छान्धकारेण मूर्च्छारूपान्धकारेण; पुनः अदोषक्षोभजन्मना दोषाणां-वैषम्यापन्नवातपित्तादीनाम्, यः क्षोभः-प्रकोपस्तज्जनितेन, सन्निपातेन महाज्वरेण; पुनः अनुन्मीलिततारकेण अनुन्मीलिताः-अप्रकाशिताः, तारकाः-नक्षत्राणि यस्मिंस्तादृशेन, तमसा अन्धकाररूपेणेति रूपकमाला, गम्योत्प्रेक्षा माला वा; महानिद्रावेगेन महत्या निद्राया वेगेन-औत्कट्येन; वैरिसैन्ये शत्रुसैन्ये, युगपद् एकदैव, अभिभूयमाने बाध्यमाने सति, वीरवर्गाग्रेसरः वीरसमाजाग्रणीः, स राजकुमारः, रोषदष्टाधरोष्ठं रोषेण-क्रोधेन, दष्टः-खण्डितः, अधरोष्ठः-निम्नोष्ठो येन तादृशम्, पुनः उज्झितरथपृष्ठम् उज्झितं-त्यक्तम्, रथस्य, पृष्ठं-पृष्ठभागो येन तादृशम्; पुनः उद्गूर्णकृपाणम् उद्गूर्णः-उद्यतः, कृपाणः-खड्गो येन तादृशम्; पुनः अतिरंहसा अत्यन्तवेगेन, अभिमुखं संमुखम्, समापतन्तम् आगच्छन्तम्, सेनापतिं निरुक्तसेनानायकम्, अवलोक्य दृष्ट्वा, तद्वधाय सेनापतिमारणाय, धनुषि, निवेशितम् आरोपितम्, असितलोलदीधितिजटालफलधारम् असिताभिः-कृष्णाभिः, लोलाभिः-तरलाभिः, दीधितिभिः-किरणैः, जटाला-व्याप्ता, फलधारा-अग्रधारा यस्य तादृशम्; अत एव अरातिरुधिरपानतृष्णया अरातीनां-शत्रूणाम्, यानि रुधिराणि-शोणितानि, तत्पानाभिलाषेण, प्रसारितजिह्वासहस्रमिव व्यात्तसहस्रसंख्यकजिह्वाकमिवेत्युत्प्रेक्षा; संहृतानेकप्रतिपक्षप्राणम् संहृताः-विनाशिताः, अनेकेषां प्रतिपक्षाणां-शत्रूणाम्, प्राणाः-असवो येन तादृशम्; बाणं शरम्, सद्य एव तत्क्षणमेव, समहृत संहृतवान्, प्रहारान्निवारितवानित्यर्थः। च पुनः, उत्सृष्टचापयष्टिः त्यक्तधनुर्दण्डः सन्, क्षात्रसमरनीतिप्रियतया क्षात्री-क्षत्रियसम्बन्धिनी या समरनीतिः-पराजये शस्त्रत्यागरूपा संग्रामनीतिः, तत्प्रियतया, तत्क्षणं तत्कालम्, परिवारतः खड्गकोशात्, पक्षे परिजनात्, कृपाणं खड्गम्, आत्मानं च स्वं च, पृथक्कृत्य, अवतरन्निद्रावेगविगलितपरिस्पन्दः अवतरन्त्याः-आपतन्त्याः, निद्रायाः, वेगेन-उत्कर्षेण, विगलितः-विनष्टः, परिस्पन्दः-शारीरिकचेष्टा यस्य तादृशः, स्यन्दनो-

अत्रान्तरे लब्धरोपनिर्यातनावसराणि 'हत हत, उपसर्पतोपसर्पत, गृहीत गृहीत' इत्यनवरतकृतकोलाहलानि बद्धवेगद्विरदपृष्ठशारिदोलायमानसकलसायासप्रासपूलानि चलितरथचक्रचीत्कारचकितशाकिनीचक्रवालार्धावलोकितान्युद्गूर्णकृपाणपादातपादपातकम्पितधराण्यधावन्त सर्वतोऽस्मत्सैन्यकानि [च] ॥

सेनाधिपस्तु तस्य महात्मनस्त्रिभुवनाभिभाविना भुजवीर्येण निर्व्याजमावर्जितमनास्तानि तथाविधप्रकटितसंरम्भाणि सर्वतः प्रधावितान्यवलोक्य संभ्रमोत्क्षिप्तबाहुयुगलो गद्गदिकागृह्यमाणगलनिर्गलदपर्याप्ताक्षरं 'रे रे स देवस्योत्तरकोशलेश्वरस्य पादपङ्कजेभ्यः शपते, योऽस्मै कुप्यति' इति स्वशक्त्या व्याहरन् पुनः पुनरादिष्टसूतसत्वरप्रवर्तितरथ्येन रथेन तं प्रदेशमागच्छत् [भ]। अद्राक्षीच तं समासन्नदीपिकालोकप्रकाशितमासक्तसान्द्रसमररेणुधूसराभिरामवपुषम्, औषधीनाथमिव पार्वणमस्तपर्वतप्रस्थे पृथुनि रथपृष्ठे पर्यस्तम्,

---

टिप्पनकम्—रथ्याः-अश्वाः [भ] । सापिच्छं-काकतुण्डिका [म] ।

---

**स्सङ्गं रथमध्यम्, अगमत्** गतवान् [फ] ॥ **अत्रान्तरे** अस्मिन्नवसरे, **अस्मत्सैन्यकानि** अस्मत्सैन्यसमूहाः, **सर्वतः** सर्वदिक्षु, **अधावन्त** धावन्ते स्म; कीदृशानि ? **लब्धरोपनिर्यातनावसराणि** लब्धः-प्राप्तः, रोषेण-क्रोधेन, निर्यातनायाः-शत्रुपीडनायाः, अवसरो यैस्तादृशानि; पुनः **हत हत** मारयत मारयत, **उपसर्पत उपसर्पत** उपगच्छत उपगच्छत, शत्रूनिति शेषः, **गृहीत गृहीत,** अस्त्राणीति शेषः, **इति** इत्थम्, **अनवरतकृतकोलाहलानि** अनवरतं-निरन्तरम्, कृतः कोलाहलो यैस्तादृशानि; पुनः **बद्धवेगद्विरदपृष्ठशारिदोलायमानसकलसायासप्रासपूलानि** बद्धवेगाः-धृतत्वराः, ये द्विरदाः-हस्तिनः, तेषां पृष्ठशारिषु-पृष्ठाधिष्ठितपर्याणेषु, दोलायमानानि-सञ्चलन्ति, सकलानां समस्तानाम्, सायानां बाणानाम्, आसानां-विक्षेप्यास्त्रविशेषाणाम्, प्रासानां-कुन्तानाम्, पूलानि-भारा येषु तादृशानि, पुनः **चलितरथचक्रचीत्कारचकितशाकिनीचक्रवालार्धावलोकितानि** चलितानि यानि रथचक्राणि-रथसमूहाः, तेषां चीत्कारेण-ध्वनिविशेषेण, चकितं-विस्मितम्, शाकिनीनां-देवीविशेषाणाम्, यच्चक्रवालं-समूहस्तेन, अर्धम्, अवलोकितानि-दृष्टानि, पुनः **उद्गूर्णकृपाणपादातपादपातकम्पितधराणि** उद्गूर्णाः-उत्थापिताः, कृपाणाः-खड्गा येन तादृशस्य, पादातस्य-पदगामिसैनिकसमूहस्य, पादपातेन-चरणाघातेन, कम्पिता-आन्दोलिता, धरा-पृथ्वी यैस्तादृशानि [च] ॥

**सेनाधिपस्तु** सेनानायकस्तु, **पुनः पुनः** वारं वारम्, **आदिष्टसूतसत्वरप्रवर्तितरथ्येन** आदिष्टः-आज्ञप्तो यः, सूतः-सारथिः, तेन सत्वरं-शीघ्रम्, प्रवर्तितौ-प्रेरितौ, रथ्यौ-अश्वौ यस्य तादृशेन रथेन, **तं प्रदेशं** यत्र कुमार आसीदित्यर्थः, **आगच्छत्** आगतवान् । कीदृशः ? **महात्मनः** महिमशालिनः, **तस्य** नृपकुमारस्य, **त्रिभुवनाभिभाविना** जगत्त्रयविजयिना, **भुजवीर्येण** बाहुविक्रमेण, **निर्व्याजं** निष्कपटं यथार्थमिति यावत्, **आवर्जितमनाः** हृतहृदयः; पुनः **तथाविधप्रकटितसंरम्भाणि** तथाविधम्-उक्तप्रकारं यथा स्यात् तथा, प्रकटितः-आविष्कृतः, संरम्भः-वेग उत्साहो वा यैस्तादृशानि, **सर्वतः**, **प्रधावितानि** अतिसत्वरं गतानि, **तानि** सैनिकानि, **अवलोक्य** दृष्ट्वा, **सम्भ्रमोत्क्षिप्तबाहुयुगलः** वेगोत्थापितभुजयुगलः, किं कुर्वन् ? **गद्गदिकागृह्यमाणगलनिर्गलदपर्याप्ताक्षरं** गद्गदिकया-शोकादिजन्याव्यक्तोच्चारणक्रियया, गृह्यमाणात्, गलात्-कण्ठात्, निर्गलन्ति-निस्सरन्ति, अपर्याप्तानि-अपरिपूर्णानि, अक्षराणि यस्मिंस्तादृशं यथा स्यात् तथा, **रे रे** इति सम्भ्रमद्योतकम्, **उत्तरकोशलेश्वरस्य** कोशलराष्ट्रोत्तरविभागेश्वरस्य, **देवस्य** राज्ञः, **पादपङ्कजेभ्यः** चरणकमलेभ्यः, [illegible] शपते, यः, **असै** नृपकुमाराय, **कुप्यति** कोपं करोति, इति **स्वशक्त्या** स्वसामर्थ्येन, **व्याहरन्** ब्रुवन् [भ]। च पुनः, तं नृपकुमारम्, **अद्राक्षीत्** दृष्टवान् । कीदृशम् ? **समासन्नदीपिकालोकप्रकाशितं** समासन्नैः-सन्निकृष्टैः, दीपिकालोकैः-दीपवाहकजनैः, यद्वा समासन्नायाः-पार्श्ववर्तिन्याः, दीपिकायाः, आलोकैः-प्रभाभिः, प्रकाशितम्; पुनः **आसक्तसान्द्रसमररेणुधूसराभिरामवपुषम्** आसक्तैः-सक्तैः, सान्द्रैः-निबिडैः, समररेणुभिः-समरोद्भूतधूलिभिः, यो धूसरः-किञ्चित्पाण्डुवर्णः, तेन अभिरामम्-मनोहरम्, वपुः-शरीरं यस्य तादृशम्; पुनः **अस्तपर्वतप्रस्थे** अस्तपर्वतस्य अस्ताचलस्य, प्रस्थे-शिखरे, **पार्वणं** पूर्णिमासम्बन्धिनम्, **औषधीनाथमिव** चन्द्रमिव, **पृथुनि** विशाले, **रथपृष्ठे**

आसादितविजयरिपुदर्शनपरिजिहीर्षयेव निमिमिषितेक्षणारविन्दम्, आजिविपन्नसुभटजीवितसंजिघृक्षयायातयमदर्शनागतया यमुनयेवाबद्धविकटतरङ्गया भ्रुकुट्यान्धकारितललाटभित्तिम्, उपरि रिपुशिलीमुखासारेणाधस्ताच्च रणरभसरोमाञ्चजालकेन जर्जरितमुल्लसितमिव मूर्च्छान्धकारमुन्निद्रतापिच्छनीलमस्थूलं कालायसकवचमुरःस्थलेनोद्वहन्तम्, उत्सृष्टचापयष्टिना वामेन दक्षिणेन च स्फुरितदीर्घनखकिरणेन तत्क्षणभ्रष्टकरवालान्वेषिणेव पाणिना विराजमानम्, उपान्तकेतुस्तम्भविन्यस्तदेहभारैश्च निद्रादूरभुग्नकण्ठनालैरात्मयोधैः परिवृतं प्रसुप्तसरःकुमुदवनमध्यवर्तिनमिव प्रतिमादिनकरम्, अव्याजशौर्यावर्जितहृदयैश्चागत्यागत्य वीरवृन्दैर्वन्द्यमानबाणव्रणोद्वान्तरुधिरबिन्दुनिकरं कुमारम् [ मं ], उपजातविस्मयश्च निश्चलस्निग्धतारकेण चक्षुषा सुचिरमवलोक्य तदवलोकनप्रीतमनसा समीपवर्तिना सामन्तलोकेन सह बहुप्रकारमारब्धतद्वीर्यगुणस्तुतिस्तस्मिन्नेव प्रदेशे मुहूर्तमात्रमतिष्ठत्। तद्वृत्तान्तश्रवणसकुतूहलश्च निपुणतरमपि व्यापारितया दृष्ट्या यदा प्रतिपक्षपक्षे कमपि पुरुषं

---

रथपश्चाद्भागे, **पर्यस्तं** लीनम्; पुनः **आसादितविजयरिपुदर्शनपरिजिहीर्षयेव** आसादितः–प्राप्तः, विजयो येन तादृशस्य, रिपोः–स्वशत्रोः, यद् दर्शनम्, तत्परिजिहीर्षयेव–तत्परिहारेच्छयेव, **निमिमिषितेक्षणारविन्दं** निमीलितनयनारविन्दम्; पुनः **भ्रुकुट्या** नेत्रोपरितनकुटिलरोमराज्या, **अन्धकारितललाटभित्तिम्** अन्धकारिता–अन्धकारव्यापिता, ललाटभित्तिः–ललाटस्थलं यस्य तादृशम्, कीदृश्या ? **आजिविपन्नसुभटजीवितसंजिघृक्षयायातयमदर्शनागतया** आजौ–संग्रामे, विपन्नाः–मृताः, ये सुभटाः–सुयोधाः, तेषां यानि जीवितानि–प्राणाः, तत्संजिघृक्षया–तत्संहरणेच्छया, आयातस्य–आगतस्य, यमस्य–तदाख्यभ्रातुः, दर्शनाय–अवलोकनाय, आगतया–उपस्थितया, **यमुनयेव** तदाख्यनद्येव, **आबद्धविकटतरङ्गया** आबद्धाः–रचिताः, विकटाः–विशालाः, तरङ्गा यया तादृश्या, पुनः **कालायसकवचं** लौहविशेषमयं कवचम्, **उरःस्थलेन** वक्षःस्थलेन, **उद्वहन्तं** धारयन्तम्, कीदृशं कवचम् ? **उपरि** ऊर्ध्वभागे, **रिपुशिलीमुखासारेण** रिपुशिलीमुखानां–स्वशत्रुक्षिप्तबाणानाम्, आसारेण–धारापातेन, च पुनः, **अधस्तात्** अधोभागे, **रणरभसरोमाञ्चजालकेन** रणरभसेन–संग्रामवेगेन, उद्गतो यो रोमाञ्चः–पुलकः, तज्जालकेन–तत्पुञ्जेन, **जर्जरितं** विह्वलीकृतम्, अत एव **उल्लसितम्** उद्गतम्, **मूर्च्छान्धकारमिव** मूर्च्छारूपान्धकारमिवेत्युत्प्रेक्षा, पुनः **उन्निद्रतापिच्छनीलम्** उन्निद्रः–उत्फुल्लो यस्तापिच्छः–तमालः, तद्वन्नीलवर्णम्, पुनः **अस्थूलं** लघुम्; पुनः कीदृशं कुमारम् ? **उत्सृष्टचापयष्टिना** उत्सृष्टा–त्यक्ता, चापयष्टिः–धनुर्दण्डो येन तादृशेन, **वामेन** दक्षिणेतरेण, **पाणिना** हस्तेन, च पुनः, **स्फुरितदीर्घनखकिरणेन** स्फुरिताः–उज्ज्वलिताः, दीर्घाः, नखकिरणाः–नखकान्तयो यस्मिंस्तादृशेन, **तत्क्षणभ्रष्टकरवालान्वेषिणेव** तत्क्षणं–तत्कालम्, भ्रष्टः–स्वसकाशात् पतितो यः, करवालः–खड्गः, तदन्वेषिणेव–तदन्वेषणव्यापृतेनेव, दक्षिणेन, **पाणिना** हस्तेन, **विराजमानं** शोभमानम्; च पुनः, **उपान्तकेतुस्तम्भविन्यस्तदेहभारैः** उपान्तेषु–निकटस्थेषु, केतुस्तम्भेषु–ध्वजस्तम्भेषु, विन्यस्तः–धृतः, देहभारो यैस्तादृशैः, पुनः **निद्रादूरभुग्नकण्ठनालैः** निद्रया दूरभुग्नानि–दूरपर्यन्तकुटिलानि, कण्ठनालानि–कण्ठरूपकमलदण्डा येषां तादृशैः, **आत्मयोधैः** स्वकीयसुभटैः, **परिवृतं** परिवेष्टितम्, अत एव **प्रसुप्तसरःकुमुदवनमध्यवर्तिनं** प्रसुप्तं–सङ्कुचितम्, यत् सरःकुमुदवनं–तडागस्थकुमुदवनम्, तन्मध्यवर्तिनम्, **प्रतिमादिनकरमिव** सूर्यप्रतिबिम्बमिव; च पुनः, **अव्याजशौर्यावर्जितहृदयैः** अव्याजेन–वास्तविकेन, शौर्येण, आवर्जितम्–अवनमितं हृदयं येषां तादृशैः, **वीरवृन्दैः** वीरसमूहैः, **आगत्य आगत्य** उपस्थायोपस्थाय, **वन्द्यमानबाणव्रणोद्वान्तरुधिरबिन्दुनिकरं** वन्द्यमानः–स्तूयमानः, बाणव्रणोद्वान्तानां–बाणव्रणनिर्गतानाम्, रुधिरबिन्दूनां–शोणितबिन्दूनाम्, निकरः–समूहो यस्य तादृशम् [ मं ]। च पुनः, **उपजातविस्मयः** उत्पन्नाश्चर्यः, **निश्चलस्निग्धतारकेण** निश्चला–निःस्पन्दाः, स्निग्धाः–आर्द्रा च, तारका–कनीनिका यस्य यस्मिन् वा तादृशेन, **चक्षुषा** नेत्रेण, **सुचिरम्** अतिदीर्घकालम्, **अवलोक्य** दृष्ट्वा, **तदवलोकनप्रीतमनसा** तद्दर्शनप्रसन्नहृदयेन, **समीपवर्तिना** पार्श्ववर्तिना, **सामन्तलोकेन** अधिकृतनृपजनेन, सह, **बहुप्रकारम्** अनेकप्रकारं यथा स्यात् तथा, **आरब्धतद्वीर्यगुणस्तुतिः** आरब्धा–प्रारब्धा, तद्वीर्यगुणानां–तत्पराक्रमगुणानाम्, स्तुतिः–प्रशंसा येन तादृशः, **तस्मिन्नेव प्रदेशे** राजकुमारावस्थितिप्रदेशे, **मुहूर्तमात्रं** क्षणमात्रम्, **अतिष्ठत्** स्थितवान्, सेनापतिरिति शेषः। च पुनः, **तद्वृत्तान्तश्रवणसकुतूहलः** तत्कुमारवृत्तान्तश्रवणे, सकुतूहलः–सोत्कण्ठः, **निपुणतरमपि**

चैतन्यालिङ्गितं नाद्राक्षीत्, तदाऽस्य चामरग्राहिणीमप्राक्षीत्—'बालिके ! कथय कोऽयम्, कस्य वाऽपत्यम्, किमभिधानः, किंनिमित्तमनपेक्षितात्मविनिपातः पतङ्ग इव पावके सहसैवास्मत्सैन्ये प्रविष्टः, किमर्थमसमर्थसहायेनानेन साहसप्रायमिदमतिदुष्करं कर्माध्यवसितम्, कया प्रत्याशया शक्तेनापि शत्रुवधकर्मणि न कृतो दिवस एवाभियोगः, किं फलमभिलष्य निर्व्याजपौरुषेणाप्यङ्गीकृतः क्षुद्रक्षत्रियलोकसूत्रितः सौप्तिकयुद्धमार्गः' [य]। सैवमापृष्टा सेनाधिपेन किमपि ध्यात्वा परामृष्टनयनबाष्पसलिला विलोक्याभिमुखमन्तर्दुःखावेगपिशुनमत्यायतं निःश्वस्य च शनैरवादीत्—'महाभाग ! किं कथयामि मन्दभाग्या, कीदृशोऽयमिदानीं कथ्यते, गता खल्वस्तमस्य कथा, कथ्यमानापि कीदृशी भवत्येतदवस्थस्यास्य पूर्वावस्था, तथापि श्रूयताम्—एष खल्वशेषद्वीपावनीपालमौलिमालामलनदुर्ललितपादयुगलस्य युगायतभुजप्राकाररक्षितनिजक्षितेरवधीरितविषधरेन्द्रोग्रवदननिःश्वासविषवेगेनागणितकालकूटज्वालाटोपेनानपेक्षितरामविशिखशिखिशिखाडम्बरेणाविज्ञात-

---

अवधानातिशयपूर्वकमपि यथा स्यात् तथा, व्यापारितया प्रेरितया, दृष्ट्या चक्षुषा, यदा यस्मिन् काले प्रतिपक्षपक्षे शत्रुपक्षे, कमपि एकमपि, पुरुषं, चैतन्यालिङ्गितं चैतन्यवन्तम्, न, अद्राक्षीत् दृष्टवान्, तदा अस्य राजकुमारस्य, चामरग्राहिणीं चामरवाहिनीं दासीम्, अप्राक्षीत् पृष्टवान्, किमित्याह—बालिके ! भो थाले !, कथय ब्रूहि, कोऽयम् अयं राजकुमारः कः ?, वा अथवा, कस्य अपत्यं पुत्रः ?, किमभिधानः किंनामा ?, किंनिमित्तः कस्माद्धेतोः ?, पावके अग्नौ, पतङ्ग इव, अनपेक्षितात्मविनिपातः अनपेक्षितः—उपेक्षितः, आत्मविनिपातः स्वविनाशो येन तादृशः, सहसैव अविविच्यैव, अस्मत्सैन्ये अस्मत्सेनामध्ये, प्रविष्टः आपतितः, किमर्थम् किमुद्दिश्य, असमर्थसहायेन असमर्थः—शक्तिशून्यः, सहायो यस्य तादृशेन, अनेन राजकुमारेण, साहसप्रायम् अविवेकप्रयुक्तम्, अतिदुष्करम् अत्यन्तकठिनम्, इदं, कर्म कार्यम्, अध्यवसितं कर्तुं विचारितम् ?, कया प्रत्याशया सम्भावनया, शत्रुवधकर्मणि रिपून्मूलनात्मककार्ये, शक्तेन समर्थेनापि, दिवस एव दिनमध्य एव, अभियोगः सङ्घर्षः, न कृतः ?, किं फलं कं परिणामम्, अभिलष्य उद्दिश्य, निर्व्याजपौरुषेणापि वास्तविकपराक्रमशालिनापि, अनेनेति शेषः, क्षुद्रक्षत्रियलोकसूत्रितः क्षुद्रैः—राजनीतिज्ञानशून्यैः, क्षत्रियलोकैः—क्षत्रियजनैः, सूत्रितः—रचितः, सौप्तिकयुद्धमार्गः सुप्तिकालिकस्य—रात्रिकालिकस्य, युद्धस्य, मार्गः—रीतिः, अङ्गीकृतः स्वीकृतः ? [य]। एवम् अनेन प्रकारेण, उक्तप्रकारेणेत्यर्थः, सेनाधिपेन सेनापतिना, आपृष्टा समन्ताज्जिज्ञासया ज्ञापिता, सा चामरग्राहिणी बालिका, किमपि किञ्चित्, ध्यात्वा विचिन्त्य, परामृष्टनयनबाष्पसलिला परामृष्टानि—प्रोञ्छितानि, नयनयोः, बाष्पसलिलानि—अश्रुजलानि यया तादृशी सती, अभिमुखं सम्मुखम्, विलोक्य निरीक्ष्य, च पुनः, अन्तर्दुःखावेगपिशुनम् हार्दिकवेदनातिशयसूचकम्, अत्यायतम् अतिदीर्घं यथा स्यात् तथा, निःश्वस्य निःश्वासं कृत्वा, शनैः मन्दम्, अवादीत् उक्तवती। किमित्याह—महाभाग ! हे महोदय !, मन्दभाग्या तुच्छभाग्या, अहमिति शेषः, किं कथयामि निरुपयामि, अपितु खाप्रकृततया न किमपि वक्तुमर्हामीत्यर्थः। इदानीम् अस्मिन् विपदवसरे, अयं राजकुमारः, कीदृशः कथम्भूतावस्थः, कथ्यते वर्ण्यते, खलु निश्चयेन, अस्य राजकुमारस्य, कथा वार्ता, अस्तं विनाशम्, गता प्राप्तवती। एतदवस्थस्य एषा मरणरूपा अवस्था यस्य तादृशस्य, अस्य नृपकुमारस्य, कथ्यमानापि वर्ण्यमानापि, पूर्वावस्था पुरातनवृत्तम्, कीदृशी कथम्भूता, दुःखावहैवेत्यर्थः, भवति सम्पद्यते। तथापि तादृश्यपि, श्रूयतां श्रवणगोचरीक्रियताम्। एषः अयम्, खलु निश्चयेन, सिंहलद्वीपभर्तुः सिंहलाख्यो यो द्वीपः—जलमध्यवर्तिस्थलप्रदेशः, तद्भर्तुः—तदधिपस्य, महानरेन्द्रस्य महानृपतेः, अतिशयप्रतापशालिन इत्यर्थः, चन्द्रकेतोः तन्नामकस्य, आत्मजः औरसपुत्रः, समरकेतुः तत्संज्ञकः, अस्तीति शेषः; नामेति वाक्यालङ्कारे। कीदृशस्य ? अशेषद्वीपावनीपालमौलिमालामलनदुर्ललितपादयुगलस्य अशेषाः—समस्ताः ये, द्वीपानां—जलमध्यवर्तिस्थलप्रदेशानाम्, अवनीपालाः—नृपाः, तन्मौलिमालानां—तन्मस्तकस्थमालानाम्, तन्मुकुटपङ्क्तीनां वा, मलनेन—सम्मर्देन, दुर्ललितं—सुखप्रादुर्भावेन, ललितं—सुन्दरम्, पादयुगलं—चरणद्वयं यस्य तादृशस्य, पुनः युगायतभुजप्राकाररक्षितनिजक्षितेः युगः नाम शकटधारोपयुक्तवस्तुविशेषः, तद्वद् आयतौ—दीर्घौ यौ, भुजौ—बाहू, तद्रूपेण

वाडवदहनदाहवेदनावेगेन जलनिधिनाऽप्यसोढनौतन्त्रपरिवृढप्रयाणसमर्दस्य समदसैन्यकरिविषाणकोणविघटितत्रिकूटकटकभित्तेरवस्कन्दपातभीतेनेव सर्वदा शर्वरीषु विहितप्रचारेण नक्तञ्चरचक्रवर्तिना लङ्केश्वरेणापि सततमभिशङ्कितोत्साहस्य सिंहलद्वीपभर्तुर्महानरेन्द्रस्य **चन्द्रकेतो**रात्मजः सर्वातिशायिना भुजवीर्यविलसितेनास्त्रशिक्षाकौशलेन च विस्मायितसकलपार्थिवः पार्थवत् पृथिव्यामेकधन्वी **समरकेतु**र्नाम [२]। सोऽयं महाबलतया बाल एवाधिगतयौवराज्याभिषेकः सकलसागरान्तरालद्वीपविजिगीषया गतोऽपि दूरमतिसत्वरः पितुराज्ञया राज्ञोऽस्य **कुसुमशेखर**स्य साहायकं कर्तुमासन्नवर्तिभिः कतिपयैरेव नृपतिभिरनुप्रयातः **काञ्ची**मनुप्राप्तः। स्थितश्चात्र पञ्चषाण्यपि दिनानि दूनचेतोवृत्तिः, अद्य तु प्रातरेव हेतुना केनापि विधृतोदारशृङ्गारवेषः परि-

---

प्राकारेण-दुर्गेण, स्वबाहुबलेनेत्यर्थः, रक्षिता-पालिता, निजक्षिति-स्वभूमिर्येन तादृशस्य, पुनः **जलनिधिनापि** समुद्रेणापि, **असोढनौतन्त्रपरिवृढप्रयाणसम्मर्दस्य** असोढ-अकृतसहन, नौतन्त्रस्य-नौकासाध्यस्य, परिवृढस्य-प्रधानभूतस्य, प्रयाणस्य-प्रस्थानस्य, सम्मर्द-आक्रमण यस्य तादृशस्य, समुद्रयात्रोपकरणसमृद्धिविशिष्टस्येत्यर्थः, कीदृशेन जलधिना? **अवधीरितविषधरेन्द्रोग्रवदननिःश्वासविषवेगेन** अवधीरित-तिरस्कृत, विषधरेन्द्रस्य-महासर्पस्य, स्वाधःस्थितशेषनागस्येत्यर्थः, उग्रो वदननिःश्वासविषवेग-मुखनिःसृतपवनविषवेगो येन तादृशेनापि, पुनः **अगणितकालकूटज्वालाटोपेन** अगणित-तुच्छत्वधियोपेक्षित, कालकूटस्य-'देवासुररणे देवैर्हतस्य पृथुमालिनः। दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसन्निभः॥ निर्यासः कालकूटोऽस्य मुनिभिः परिकीर्तितः।" इत्यन्यत्रोक्तनिर्यासरूपविषविशेषस्य, ज्वालाटोप-ज्वालातिशयो येन तादृशेनापि, पुनः **अनपेक्षितरामविशिखशिखिशिखाडम्बरेण** अनपेक्षित-उपेक्षित, रामस्य-दाशरथेः, विशिखशिखिनः-बाणरूपाग्नेः, शिखाडम्बर-ज्वालाविस्तारो येन तादृशेनापि, पुनः **अविज्ञातवाडवदहनदाहवेदनावेगेन** अविज्ञात-अननुभूत, अवज्ञातेति पाठे-अवज्ञात-तिरस्कृत, वाडवदहनस्य-वाडवाग्नेः, दाहवेदनाया-तापजन्यदुःखस्य, आवेग-औत्कट्य येन तादृशेनापि। पुनः कीदृशस्य चन्द्रकेतोः? **समदसैन्यकरिविषाणकोणविघटितत्रिकूटकटकभित्तेः** समदानां-सगर्वाणाम्, सैन्यकरिणां-सेनासमवेतहस्तिनाम्, विषाणकोणैः-दन्ताग्रभागैः, विघटिता-विश्लेषिता, त्रिकूटस्य-लङ्कासन्निहितसुवेलाख्यगिरेः, कटकभित्ति-नितम्बरूपभित्तिर्येन तादृशस्य, अत एव **लङ्केश्वरेणापि** रावणेनापि, **सततम्** अनवरतम्, **अभिशङ्कितोत्साहस्य** अभिशङ्कित-आशङ्कित, उत्साह-संग्रामोत्साहो यस्य तादृशस्य, कीदृशेन तेन? **अवस्कन्दपातभीतेनेव** अवस्कन्द-सैन्यसन्निवेशस्थानम्, तस्य-तदुपलक्षितसैन्यस्य च पात-तत्कर्तृकमाक्रमणम्, तद्भीतेनेव, **सर्वदा** सर्वस्मिन् दिने, **शर्वरीषु** रात्रिमध्य एव, **विहितप्रचारेण** कृतविहारेण, अत एव **नक्तञ्चरचक्रवर्तिना** रात्रिचराधिपेन, राक्षससम्राजेत्यर्थः, स्वाभाविकेऽपि तदीयरात्रिचरत्वे हेतुविधया तद्भयोत्प्रेक्षाऽत्र बोध्या। कीदृशः समरकेतुः? **सर्वातिशायिना** सर्वोत्कृष्टेन, **भुजवीर्यविलसितेन** बाहुविक्रमविलासेन, **च** पुनः, **अस्त्रशिक्षाकौशलेन** अस्त्रविद्यानैपुण्येन, **विस्मायितसकलपार्थिवः** विस्मायिता-आश्चर्यमनुभाविता, सकला-समस्ता, पार्थिवा-राजानो येन तादृशः, पुनः **पार्थवत्** पार्थः-अर्जुनः, तद्वत्, **पृथिव्यां** जगति, **एकधन्वी** अद्वितीयधनुर्धरः [२]। सः अनुपदवर्णितविक्रमः, अयं पुरो दृश्यमानः कुमारः, **महाबलतया** अतिपराक्रमशालितया **बाल एव** बाल्यावस्थ एव, **अधिगतयौवराज्याभिषेकः** अधिगत-प्राप्त, यौवराज्याय यौवनावस्थोचितराजकार्यकरणाधिकारार्थं, अभिषेक-विधिना स्नानं येन तादृशः सन्, **सकलसागरान्तरालद्वीपविजिगीषया** सकला-समस्ता ये सागरान्तरालद्वीपा-समुद्रमध्यस्थस्थलप्रदेशाः, तज्जिगीषया-तज्जयेच्छया, **दूरं** दूरस्थानम्, **गतोऽपि** प्राप्तवानपि, **पितुः** जनकस्य, **आज्ञया** आदेशेन, **अस्य** प्रत्यक्षभूतस्य, **कुसुमशेखरस्य** तदाख्यस्य, **राज्ञः** नृपस्य, **साहायकं** साहाय्यम्, **कर्तुम्** आचरितुम्, **आसन्नवर्तिभिः** पार्श्ववर्तिभिः, **कतिपयैः** परिमितैः, **नृपतिभिः** राजभिः, **अनुप्रयातः** अनुगतः, **काञ्चीं** तदाख्यनगरीम्, **अनुप्राप्तः** आगतः। च पुनः, **दूनचेतोवृत्तिः** सन्तप्तमनोवृत्तिः, अत्र काञ्चीनगर्याम्, **पञ्चषाण्यपि** पञ्च वा षड् वेति पञ्चषाणि, तावन्त्यपि, दिनानि, **स्थितः** स्थितिमकार्षीत्। **अद्य तु** अस्मिन् दिने तु, **प्रातरेव** प्रभातकाल एव, **केनापि** कस्मिंश्चित्, **हेतुना** निमित्तेन, **विधृतोदारशृङ्गारवेषः** विधृत-परिगृहीत, उदार-सातिशय, शृङ्गारवेष-शृङ्गाररसानुगुणवेषो येन

मितैरेव सह सुहृद्भिर्नरेन्द्रभवनोद्यानभूषणं गतः स्मरायतनम्, आसीनश्च तस्य द्वारदेशे विशन्तमनवरतमन्तरुपरतनिमेषेण चक्षुषा निरीक्षमाणो नगरनारीजनं स्थितो दिनमशेषम् [ल], अवसितायां च यात्रायामधिकतरमारूढगाढारतिः कारयित्वा मकरकेतोः पुरः सरोजिनीपत्रशयनम्, 'इहैव मयाद्य शयनीयम्' इत्युदीर्य विसर्जितासन्नपरिजनः केनापि विधिनातिवाह्य प्रदोषमागत्य चार्धरात्रसमये शिविरमकस्मादेव सज्जीकृतसकलनिजबलः, 'कुमार! नायं क्रमो नयस्य' इति विनिवार्यमाणोऽपि मन्त्रिभिः, 'युवराज! विरम्यतामितो दुरध्यवसायात्' इति निरुध्यमानोऽपि बन्धुभिः, 'कल्याणिन्! अङ्गीक्रियतां यात्रालग्नम्' इति निवर्त्यमानोऽपि मौहूर्तिकैः, 'देव! प्रतिपाल्यतामनुयाति सैन्यम्' इति विज्ञाप्यमानोऽपि प्रधानलोकेन, 'विद्वन्! निवेद्यतां कुसुमशेखरस्य' इति वारं वारमभिधीयमानोऽपि विबुधवर्गेण, निर्गतः काञ्च्याः। आकृष्यमाणश्च व्यसनैषिणा पुरो विधिना प्रणिधिनेवानाप्तेन प्राप्तो भुवमिमामवस्था च' [व]। इत्येवमावेदयन्त्यामेव तस्यामुपजातदुःखावेगेव प्रगलिततारका तनिमानमभजत रजनिः, अमरीभूतसुभटनिर्दयाश्लिष्टसुरवधूहारमुक्तमौक्तिक-

---

तादृश सन्, परिमितैरेव परिगणितैरेव, सुहृद्भिः मित्रैः सह, नरेन्द्रभवनोद्यानभूषणं राजप्रासादनिकटस्थितारामालङ्करणभूतम्, स्मरायतनं कामदेवमन्दिरम्, गतः प्राप्तः। च पुनः, तस्य कामदेवमन्दिरस्य, द्वारदेशे अन्तःप्रवेशप्रदेशे, आसीनः उपविष्टः, उपरतनिमेषेण निरुद्धस्पन्दनेन, चक्षुषा, अनवरतं निरन्तरम्, अन्तःविशन्तम् अन्तःप्रवेशं कुर्वन्तम्, नगरनारीजनं नागरिकस्त्रीजनम्, निरीक्षमाणः अवलोकमानः, अशेषं समस्तं, दिनम्, स्थितः स्थितिमकार्षीत् [ल]। यात्रायां कामदेवमन्दिरयात्रोत्सवे, अवसितायां समाप्तायाम्, अधिकतरम् अत्यधिकं यथा स्यात् तथा, आरूढगाढारतिः आरूढा–उत्पन्ना, गाढा–सान्द्रा, अरतिः–खेदो यस्य तादृशः, मकरकेतोः कामदेवस्य, पुरः अग्रे, सरोजिनीपत्रशयनं कमलिनीपत्रमयीं शय्याम्, कारयित्वा निर्माप्य, अद्य अस्मिन् दिने, मया, इहैव अस्यामेव शय्यायाम्, शयनीयं शयनं कर्तव्यम्, इत्युदीर्य इत्युक्त्वा, विसर्जितासन्नपरिजनः दूरीकृतपार्श्ववर्तिपरिवारः सन्, केनापि अनिर्वाच्येन दुःसमयेनेत्यर्थः, विधिना प्रकारेण, प्रदोषं रात्रिप्रथमभागम्, अतिवाह्य व्यतीत्य, अर्धरात्रसमये रात्रिमध्यभागे, शिबिरं सैन्यसन्निवेशस्थानम्, आगत्य, अकस्मादेव अकृतपूर्वविचारमेव, सज्जीकृतसकलनिजबलः सज्जीकृतं–सज्जितम्, सकलं–समस्तम्, निजबलं सैन्यं येन तादृशः, कुमार! भो नृपकुमार!, नयस्य नीतेः, अयं रात्रौ युद्धारम्भरूपः, क्रमः विधिः, न, इति एवम्, मन्त्रिभिः सचिवैः, विनिवार्यमाणोऽपि गमनान्निवर्त्यमानोऽपि, पुनः युवराज!, इतः अस्मात्, दुरध्यवसायात् असमीचीनोद्योगात्, विरम्यतां त्वया निवृत्यताम् इति एवम्, बन्धुभिः भ्रात्रादिभिः, निरुध्यमानोऽपि निवार्यमाणोऽपि, पुनः कल्याणिन्! कल्याणशालिन्!, यात्रालग्नं युद्धार्थं प्रस्थाने शुभजनकं राशीनामुदयः, अङ्गीक्रियतां पर्यालोच्यताम्, तत्पर्यालोचनं विना न गन्तव्यमित्यर्थः, इति एवम्, मौहूर्तिकैः मुहूर्तज्ञैः, निवर्त्यमानोऽपि अवरुध्यमानोऽपि, पुनः देव! राजन्!, अनुयाति पश्चादागच्छति, सैन्यं सेना, प्रतिपाल्यतां प्रतीक्ष्यताम्, इति एवम्, प्रधानलोकेन प्रधानजनेन, विज्ञाप्यमानोऽपि निवेद्यमानोऽपि, पुनः विद्वन्! विवेकशालिन्!, कुसुमशेखरस्य तन्नामकस्य राज्ञः, निवेद्यतां विज्ञाप्यताम्, सर्वमुक्तवृत्तमिति शेषः, इति एवम्, विबुधवर्गेण विज्ञवर्गेण, अभिधीयमानोऽपि उच्यमानोऽपि, काञ्च्याः तन्नाम्न्या नगर्याः, निर्गतः निष्क्रान्तः। च पुनः, अनाप्तेन अविश्वस्तेन, प्रणिधिनेव चरजनेनेव, व्यसनैषिणा दुःखाभिलाषिणा, विधिना दैवेन, पुरः अग्रे, आकृष्यमाणः बलादुपनीयमानः, इमां, भुवं भूमिम्, अवस्था दुर्दशां च प्राप्त [व]। इति इत्थम्, तस्यां पत्रिकायाम्, आवेदयन्त्यामेव कथयन्त्यामेव सत्याम्, उपजातदुःखावेगेव उत्पन्नवेदनातिशयेव, प्रगलिततारका नष्टनक्षत्रा, रजनिः प्रकृतरात्रिः, तनिमानं कार्श्यम् शेषावस्थामित्यर्थः अभजत प्राप्तवती। पुनः गगनतलम् आकाशरूपं कर्तृ, अमरीभूतसुभटनिर्दयाश्लिष्टसुरवधूहारमुक्तमौक्तिकविसरमिव अमरीभूते–युद्धे मृत्वा अमरतामापन्ने, सुभटे–सुयोधे, निर्दयं–गाढं यथा स्यात् तथा, आश्लिष्टानाम्–आलिङ्गितानाम्, सुरवधूनां–देवाङ्गनानाम्, हारेभ्यः–मुक्ताहारेभ्यः,

विसरमिव तुहिनजलबिन्दुनिकरं ववर्ष गगनतलम्, अरुणालोकतरलितानि वेतालवृन्दानीव तिरोबभूवुस्तिमिराणि, रणभूमिशोणितावलोकनत्रस्त इव पाश्चात्यशैलशिखरे स्खलद्विकलपादः पपात तारापतिः, आसक्तबालारुणप्रभाप्रभावपिहितवीर्यः सिंहलेन्द्रसूनुरिव निमिमील नक्षत्रराशिः, उत्सृष्टतरुकुलायकोटराणि प्रशान्तप्रहारभयानीव विरतयोधशरवृष्टिसावकाशे विहायसि व्यचरन्ननाकुलानि पञ्जरथकुलानि, अपवर्गचलितवीरवर्गभिन्नसूर्यमण्डलरुधिरप्रवाह इव पूर्वदिग्भागमरुणीचकार सन्ध्यारागः, भयानकाजिभूमिदर्शनोपजातत्रासा इव सुदूरमपसस्रुराशाः, दिङ्मुखस्रस्ततनुतमिस्रविश्रान्तविरलतारका शोकलम्बितालकलग्नबाष्पजललवा द्रविडराजलक्ष्मीरिव तत्क्षणं रराज रजनिः, व्याजविजितसिंहलेन्द्रसुतपराभवरोषित इव पुरस्तादुल्ललास

---

**टिप्पनकम्—आसक्तबालारुणप्रभाप्रभावपिहितवीर्यः** एकत्र बालारुण–बालादित्यसारथि, अन्यत्र बालारुणम्–मङ्गुलीयकम् [श]।

---

मुक्त–च्युतम्, मौक्तिकविसरमिव–मुक्तामणिसमूहमिव, **तुहिनजलबिन्दुनिकरं** हिमजलबिन्दुसन्दोहम्, **ववर्ष** वर्षयति स्म, पुन **वेतालवृन्दानीव** व्यन्तरविशेषसमूहा इव, **अरुणालोकतरलितानि** अरुणस्य–सूर्यसारथे, आलोकेन–दर्शनेन, तरलितानि–चञ्चलतामापन्नानि, **तिमिराणि** अन्धकारा, **तिरोबभूव** तिरोभवन्ति स्म। पुन **रणभूमिशोणितावलोकनत्रस्त इव** रणभूमौ–समरक्षेत्रे, यानि शोणितानि तेषामवलोकनेन–दर्शनेन, त्रस्त इव–भीत इव, **स्खलद्विकलपादः** स्खलन्त –स्खलनमासादयन्त, विकला –विरला, पादा –किरणा यस्य तादृश **तारापति**ः चन्द्र, **पाश्चात्यशैलशिखरे** पश्चिमपर्वतशृङ्गे, **पपात** पतित, अस्त गत इत्यर्थ ।पुन **सिंहलेन्द्रसूनुरिव** सिंहलेन्द्रस्य–सिंहलद्वीपनृपतेश्चन्द्रकेतो, सूनु –कुमार, समरकेतुरिव, **आसक्तबालारुणप्रभाप्रभावपिहितवीर्यः** आसक्ता–सम्पृक्ता, या बालारुणस्य–उदयकालिकसूर्यस्य, पक्षे तत्सञ्ज्ञकाङ्गुलीयकस्य, प्रभा–द्युति तस्या प्रभावेनतेजसा पिहितं, वीर्यं–सामर्थ्यं यस्य तादृश, **नक्षत्रराशिः** तारागण, **निमिमिल** सङ्कुचित, तिरोबभूव इत्यर्थ । पुन **उत्सृष्टतरुकुलायकोटराणि** उत्सृष्टानि–प्रभातवेलायामुज्झितानि, तरुकुलायकोटराणि–वृक्षसम्बन्धीनि नीडात्मकगह्वराणि यैस्तादृशानि, **पञ्जरथकुलानि** पक्षिवृन्दानि, **प्रशान्तप्रहारभयानीव** प्रशान्तं–निवृत्तम्, प्रहारेभ्य –अस्त्राघातेभ्यो भयं येषा तादृशानीव, अत एव **अनाकुलानि** प्रशान्तचित्तानि सन्ति, **विरतयोधशरवृष्टिसावकाशे** विरताभि –निवृत्ताभि, योधाना–भटानाम्, शरवृष्टिभि –शरवर्षाभि, सावकाशे–अवकाशसहिते, **विहायसि** आकाशे, **व्यचरन्** विचरन्ति स्म ।पुन **अपवर्गचलितवीरवर्गभिन्नसूर्यमण्डलरुधिरप्रवाह इव** अपवर्गचलितेन–युद्धे मृत्वा मोक्षार्थं प्रस्थितेन, वीरवर्गेण–भटगणेन, भिन्न–कृतभेदनम्, यत् सूर्यमण्डल–सूर्यबिम्ब तस्य, रुधिरप्रवाह इव–शोणितप्रवाह इव, **सन्ध्यारागः** प्रात सन्ध्याकालिकाकाशसम्बन्धिरक्तद्युति, **पूर्वदिग्भाग** पूर्वदिगंशम्, **अरुणीचकार** रञ्जयामास, पुन **भयानकाजिभूमिदर्शनोपजातत्रासा इव** भयानिकाया –भयजनिकाया, आजिभूमे –सङ्ग्रामभूमे, दर्शनेन, उपजात –उत्पन्न, त्रास –भय यासा तादृश्य इव, **आशा**ः दिश, **सुदूरम्** अतिदूरम्, **अपसस्रुः** अपसृता, रात्रौ निरन्तरान्धकारव्याप्ततया दिश समीपस्था प्रतिभान्ति, दिवा त्वन्धकारसम्बन्धाभावाद् दूरवर्तिन्य इति वस्तुस्थिति । पुन **दिङ्मुखस्रस्ततनुतमिस्रविश्रान्तविरलतारका** दिङ्मुखेभ्य –दिगग्रभागेभ्य, स्रस्तानि–पतितानि, अपसृतानीति यावत्, तनूनि–कृशानि, यानि तमिस्राणि–अन्धकारा, तेषु विश्रान्ता –कृतावस्थाना, विरला –कतिपया, सान्तरा इत्यर्थ, तारका –नक्षत्राणि यस्या तादृशी, **रजनिः** रात्रि, **तत्क्षणं** तत्कालम्, **शोकलम्बितालकलग्नबाष्पजललवा** शोकेन–रिपुकृतपराजयखेदेन, लम्बितेषु–स्रस्तेषु, अलकेषु–केशेषु, लग्ना –स्थिता, बाष्पजललवा –अश्रुजलकणा यस्यास्तादृशी, **द्रविडराजलक्ष्मीरिव** द्रविडस्य–तदाख्यया विख्यात दाक्षिणात्यदेशविशेषस्य, यो राजा तल्लक्ष्मीरिव, **रराज** प्रतिभाति स्म। पुन **व्याजविजितसिंहलेन्द्रसुतपराभवरोषित इव** व्याजेन–छलेन, विजितस्य–पराजितस्य, सिंहलेन्द्रसुतस्य–सिंहलद्वीपनृपकुमारस्य, पराभवेन–दुःखेन, रोषित इव–क्रोधित इव, **लोहितायमानवपुः** रक्तीभूतशरीर, **उष्णदीधितिः** सूर्य, **पुरस्तात्** अग्रे, **उल्ललास** उल्लसति स्म, उदित

लोहितायमानप्रपुरुण्णदीधितिः [श]। एवं च प्रवृत्ते प्रत्यूषसि विपक्षविजयाभिलाष इव विलीने तमसि, प्रसरति दिगन्तरेषु देवस्य प्रताप इव पातङ्गे महसि सहसैव प्रत्यबोधि सकलमपि तद्विरोधिसैन्यम्। आसावपि कुमारः प्रनष्टनिद्राविकारो 'वज्रायुध! मा विषादं व्रज, विश्रब्धमेहि, न तावत् प्रहरामि यावच्च त्वया न प्रहृतम्' इत्यविशदाक्षरं पूर्ववासनावशेन व्याहरन् सुचिरनिद्राविमर्दजडपुटोदरमुदमीलयदीक्षण-युगलम्। अवलोक्य च पुरः परिवेष्टितरथमरातिलोकमात्मानं च तदवस्थमुपजातगुरुविषादो लज्जया पुनर्मोहान्धकारमविक्षत् [प]।

सेनापतिरपि तेन तस्यातर्कितेनासंभावनीयेनादृष्टपूर्वेण प्रत्युज्जीवनेन जनितविस्मयः प्रहर्षमन्दतार-केणानन्दजलबिन्दुसेकादिव विकसता नयनारविन्दद्वयेनोद्भासमानस्तत्कालमासादितमहालाभमिव प्राप्तसकल-कल्याणमिव समृद्धाखिलकाममिव फलिताशेषगुरुजनाशिषमिव कृतार्थमात्मानं मन्यमानो मुहूर्तं स्थित्वा तस्मिन् क्षणे भयतरलेक्षणस्य विपक्षकक्षीकृतस्वामिदर्शनविषण्णबुद्धेरन्धीभूतसकलदिशः कान्दिशीकस्य शत्रुलोक-

---

टिप्पनकम्—कान्दिशीक-भयद्रुत [स]।

---

इत्यर्थ [श]। एवं च अनेन प्रकारेण च, प्रत्यूषसि प्रभाते, प्रवृत्ते प्रारब्धे, विपक्षविजयाभिलाष इव रिपु-पराजयमनोरथ इव, तमसि अन्धकारे, विलीने नष्टे सति। पुन देवस्य भवत, प्रताप इव प्रभाव इव, पातङ्गे पतङ्ग-सूर्य, तत्सम्बन्धिनि, महसि तेजसि, दिगन्तरेषु दिङ्मध्येषु, प्रसरति विस्तारमासादयति सति, सहसैव शीघ्रमेव, तद्विरोधिसैन्यं तद्विपक्षसैन्यम्, प्रत्यबोधि अजागरीत्। असौ प्रकृत, कुमारोऽपि नृपात्मजोऽपि, प्रनष्टनिद्राविकारः क्षीणनिद्रादोष सन्, जागरित सन्निति यावत्, वज्रायुध! तत्सञ्ज्ञकसेनापते!, विषादं खेदम्, मा व्रज न प्राप्नुहि। विश्रब्धं सविश्वास यथा स्यात् तथा, एहि आगच्छ। तावत् तावत्कालपर्यन्तम्, न प्रहरामि बाणप्रहारं करोमि, त्वया, यावत् याव कालपर्यन्तम्, न प्रहृतं प्रहार कृत, इति इत्थम्, अविशदाक्षरम् अवि-शदानि—अव्यक्तानि, अक्षराणि यस्मिंस्तादृश यथा स्यात् तथा, पूर्ववासनावशेन मूर्च्छाप्राक्कालिकसंस्कारवशेन, व्याहरन् कथयन, सुचिरनिद्राविमर्दजडपुटोदर सुचिरनिद्राया—चिरकालिकनिद्राया, विमर्देन व्याप्त्या, जड—निष्पन्दम्, पुटयो—नेत्रपुटयो, उदरं—मध्य यस्य तादृशम्, ईक्षणयुगलं नेत्रद्वयम्, उदमीलयत् उन्मीलितवान्। च पुन, पुरः अग्रे, परिवेष्टितरथं परिवेष्टित—आक्रान्तो रथो येन, पक्षे यस्य तादृशम्, अरातिलोक शत्रुजनम्, आत्मानं च स्व च, तदवस्थं शत्रुमध्यपतितम्, अवलोक्य दृष्ट्वा, उपजातगुरुविषादः उत्पन्नमहाविषाद, लज्जया लज्जावशेन, पुन मोहान्धकारं मूर्च्छारूपान्धकारम्, अविक्षत् प्रविष्टवान्, प्राप्तवानित्यर्थं [प]॥

सेनापतिरपि वज्रायुधोऽपि, मुहूर्तं क्षणम्, स्थित्वा स्थिरो भूत्वा, तस्मिन् दुर्घटनामये, क्षणे, समन्तात् सर्वत, अभयप्रदानपटह शत्रुसैनिकभयाभावद्योतकवाद्यविशेषम्, शत्रुलोकस्य शत्रुजनस्य, आश्वसनार्थम् आश्वा-सनफलकम्, अदापयत् दापितवान्, वादितवानित्यर्थ। कीदृश? तस्य नृपकुमारस्य, तेन अनुपदमुपवर्णितेन, अतर्कितेन आकस्मिकेन, असम्भावनीयेन सम्भावयितुमप्यशक्येन, अदृष्टपूर्वेण पूर्वं क्वचिददृष्टेन, प्रत्युज्जीवनेन पुनरु-ज्जीवनेन, जनितविस्मय उत्पन्नाश्चर्य, पुन प्रहर्षमन्दतारकेण प्रहर्षेण—अतिहर्षेण, मन्दे तारके—कनीनिके यस्मिंस्तादृशेन, तथा आनन्दजलबिन्दुसेकादिव आनन्दजलबिन्दुभि सेचनादिव, विकसता विकासमासादयता, नयनारविन्दद्वयेन नयनरूपकमलद्वयेन, उद्भासमान प्रकाशमान, पुन तत्काल तत्क्षणम्, आसादितमहालाभमिव प्राप्तमहालाभमिव, पुन प्राप्तसकलकल्याणमिव आसादिताशेषशुभमिव, पुन समृद्धाखिलकाममिव सम्पन्नसमस्ताभिलाषमिव पुन फलिताशेषगुरुजनाशिषमिव फलिता—सफलता गता, अशेषा—समस्ता, गुरुजनानां—श्रेष्ठलोकानाम्, आशिषः शुभकामना यस्मिंस्तादृशमिव, आत्मान स्व, कृतार्थं सिद्धार्थं मन्यमान। कीदृशस्य शत्रुलोकस्य? भयतरलेक्षणस्य भयचञ्चलनेत्रस्य, पुन विपक्षकक्षीकृतस्वामिदर्शनविषण्णबुद्धेः विपक्षेन—हरिवाहनसैन्यजनेन कक्षीकृतस्य—बद्धस्य, स्वामिनो दर्शनात् विषण्णा—विषादग्रस्ता बुद्धिर्यस्य तादृशस्य, पुन अन्धीभूतसकलदिशः अन्धीभूता—अन्धकारव्याप्ता,

स्वाश्वासनार्थं समन्तादभयप्रदानपटहमदापयत् [ स ]। तदीयसारग्रहणोद्यतं चात्मसैनिकलोकं न्यवारयत्। आसन्नसरिति निर्वर्तितस्नानक्रियश्च दत्त्वा संगरसमाप्तप्राणेभ्यो बान्धवेभ्यः प्रणयिभ्यश्च शोकदीर्घश्वासतरलिततिलोदकं निवापाञ्जलिम्, आदिश्य चायुधप्रहारक्षतमर्मणामरातियोधानामौषधकर्मण्याप्तजनम्, अधिरुह्य च ससंभ्रमाधोरणोपनीतं प्रधानजयवारणम्, आरोप्य पुरः प्रत्यग्रयशःसुधाधवलवपुषमभ्युदयमङ्गलकलशमिव सिंहलाधिपसुतम्, आरब्धयुद्धकथालापवाचालेन प्रणयिना राजपुत्रलोकेनानुगम्यमानः शनैः शनैः शिबिरमागमत् [ ह ]। क्रमेण चासाद्य निजभवनमुपपादितसमस्ततत्कालोचितकरणीयो निर्वर्तितप्रत्यवसानादिकर्मणः समरकेतोरभ्यन्तर एव स्थितिमकल्पयत्। अधिशयिततल्पस्य च परिचारक इव स्वयं व्रणपट्टबन्धनादिक्रियामन्वतिष्ठत्। आप्तचिकित्सितप्रारब्धोपचारं च तमनतिचिरेणैव प्रगुणीभूतवपुषं प्रशस्तेऽहनि स्नातमुपनिमन्त्र्य सादरममात्यैर्बन्धुभिः सुहृद्भिरपरैश्च प्रधानपुरुषैः सहितमात्मगृहमानयत् [ क्ष ]। कृतभोजनोपचारं च तं

---

सकला दिशो यस्य तादृशस्य, पुन कान्दिशीकस्य का दिशं गच्छामीत्याहेति कान्दिशीकस्तस्य, भयपलायितस्येत्यर्थं [ स ]। च पुन, तदीयसारग्रहणोद्यतं तदीयानां-तत्सम्बन्धिनाम्, साराणां-प्रधानवस्तूनाम्, ग्रहणाय, उद्यतम्-उत्सुकम्, आत्मसैनिकलोकं स्वसैनिकजनम्, न्यवारयत् तद्ग्रहणान्निवारितवान्। च पुन, आसन्नसरिति निकटनद्याम्, निर्वर्तितस्नानक्रियः सम्पादितस्नानात्मकक्रिय, संगरसमाप्तप्राणेभ्य संगरे-समरे, समाप्ता -नष्टा, प्राणा येषां तादृशेभ्य, बान्धवेभ्यः बन्धुजनेभ्य, च पुन, प्रणयिभ्यः प्रियजनेभ्य, शोकदीर्घश्वासतरलिततिलोदकं शोकेन-विश्लेषदुःखेन, दीर्घो य श्वास -मुखनासावायु, तेन तरलित-चञ्चलितम्, तिलोदकं-तिलमिश्रितजल यत्र तादृशम्, निवापाञ्जलिं मृतोद्देशेन निर्मिताञ्जलिम्, दत्त्वा। च पुन, आयुधप्रहारक्षतमर्मणाम् आयुधप्रहारेण-बाणाघातेन, क्षतानि-व्रणितानि, मर्माणि-मर्मस्थलानि येषां तादृशानाम्, अरातियोधानां शत्रुभटानाम्, औषधकर्मणि चिकित्साकार्ये, आप्तजनं विश्वस्तजनं शिष्टजनं वा, आदिश्य नियुज्य। च पुन, ससंभ्रमाधोरणोपनीतं ससम्भ्रमेण-सत्वरेण, आधोरणेन हस्तिपकेन, उपनीतम्-उपस्थापितम्, प्रधानजयवारणं प्रधानभूतं जयोपकरणहस्तिनं जयोत्तरमारोहणीयगजं वा, आरुह्य। च पुन, अभ्युदयमङ्गलकलशमिव अभ्युदयाय-उन्नतये, यो मङ्गलकलश -मङ्गलार्थघट, तमिव-त यथा पुर स्थापयति तथेत्यर्थं, प्रत्यग्रयशःसुधाधवलवपुषं प्रत्यग्रम्-अभिनवं यद् यश, तद्रूपाभि -सुधाभि -अमृतै, धवल-स्वच्छम्, वपु -शरीरं यस्य तादृशम्, सिंहलाधिपसुतं सिंहलद्वीपनृपकुमारम्, पुरः अग्रे, आरोप्य स्थापयित्वा, उपवेश्येत्यर्थं। आरब्धयुद्धकथालापवाचालेन आरब्धा-प्रारब्धा, या युद्धकथा-युद्धवार्ता, तदालापवाचालेन-तदाभाषणमुखरेण, प्रणयिना स्नेहास्पदेन, राजपुत्रलोकेन राजकुमारजनेन, अनुगम्यमानः अनुस्रियमाण, शनैः शनैः मन्दं मन्दम्, शिबिरं सैन्यसन्निवेशस्थानम्, आगमत् आगतवान्। [ ह ]। च पुन, क्रमेण क्रमिकगत्या, निजभवनं स्वप्रासादम्, आसाद्य प्राप्य, उपपादितसमस्ततत्कालोचितकरणीयः उपपादितानि-सम्पादितानि, समस्तानि-सर्वाणि, तत्कालोचितानि-तत्कालयोग्यानि, करणीयानि-कर्तव्यानि येन तादृश सन्, निर्वर्तितप्रत्यवसानादिकर्मणः कृतभोजनादिकार्यस्य, समरकेतोः तन्नामकस्य नृपकुमारस्य, अभ्यन्तर एव पार्श्व एव, स्थितिम् अवस्थानम्, अकल्पयत् अकरोत्। च पुन, अधिशयिततल्पस्य अधिशयितं-शयनार्थमधिष्ठितम्, तल्पं-शय्या येन तादृशस्य, तस्य नृपकुमारस्य, स्वयं स्वयमेव, परिचारक इव सेवक इव, व्रणपट्टबन्धनादिक्रियां व्रणानाम्-अस्त्राघातजन्यशरीरक्षतानाम्, पट्टबन्धनादिक्रिया-वस्त्रविशेषवेष्टनादिकार्यम्, अन्वतिष्ठत् अनुष्ठितवान्। च पुन, आप्तचिकित्सितप्रारब्धोपचारम् आप्तेन-विश्वस्तेन शिष्टेन वा, यत् चिकित्सित-चिकित्सनम्, तेन प्रारब्ध, उपचार -परिचर्या यस्य तादृशम्, अत एव अनतिचिरेणैव अचिरादेव, प्रगुणीभूतवपुषं प्रगुणीभूतशरीरम्, प्रशस्ते शुभावहे, अहनि दिने, स्नातं कृतस्नानम्, तं नृपकुमारम्, उपनिमन्त्र्य ससम्मानमाहूय, अमात्यैः मन्त्रिभि, बन्धुभिः भ्रात्रादिभि, सुहृद्भिः मित्रै, अपरैः अन्यैश्च, प्रधानपुरुषैः प्रधानजनै, सहितम्, सादरम् आदरपूर्वकम्, आत्मगृहं स्वगृहम्, आनयत् आनीतवान् [ क्ष ]। च पुन, कृतभोजनोपचारं कृत, भोजनस्य उपचार -सेवा यस्य तादृशम्, तं नृपकुमारम्, वितीर्ण-

वितीर्णकुसुमविलेपनवसनालङ्कारमुपनीतविविधवस्त्रवाहनं प्रत्यर्पिताहवगृहीतनिःशेषकरितुरङ्गस्यन्दनं च विधाय विनोद्य च मुहूर्तमरतिच्छेदकारिभिः कथालापैरभिमुखो भूत्वा कृताञ्जलिरवादीत्—'कुमार ! सकलजगदेकवीरस्य करदीकृताशेषसागरान्तरद्वीपभूपतेर्विपक्षव्यसनसङ्कटगतैर्महद्भिरपि भूमिपालैरपेक्षणीयसाहाय्यकस्य चतुरुदधिविख्यातपार्थिवप्रथमसूनोः कथञ्चिद् विधिवशाद् गृहायातस्य परेण परिकल्पितात्पवृत्तिरस्मद्विधो जनः किं ते प्रियं करोतु, केन वा कृतेनोपचारेण प्रीतिमधिगच्छतु । तथापि यद्यनुग्रहबुद्धिरस्मासु तदेतदङ्गीकुरु सततमादेशकारिणा समीपदेशस्थितेन मया प्रतिपन्नसकलपृथ्वीव्यापारभरनिराकुलो मदीयमाधिपत्यपदम्, अथ तुच्छमिति मन्दाभिलाषस्तदा स परिजन इतो गत्वा तदेव पित्रा प्रतिपादितमतिप्राज्यवैभवमध्यास्स्व निजमेव यौवराज्यम्, मा च मन्येथा यथाहमेतेन निर्जित्य विहितानुग्रहः कथमिदं करोमि, कोऽहं तव पराजये, धृताधिज्यधन्वानमन्योऽपि किमस्ति जगति यस्त्वा समरकर्मणा करोति विमुखम् । यत्तु मुख्यै-

---

**कुसुमविलेपनवसनालङ्कार** वितीर्णानि–समर्पितानि, कुसुमानि–पुष्पाणि, विलेपनानि–चन्दनादिद्रव्याणि, वसनानि–वस्त्राणि, अलङ्कारा –आभूषणानि च यस्मै तादृशम्, पुन **उपनीतविविधवस्त्रवाहनम्** उपनीतानि–उपस्थापितानि–दत्तानीत्यर्थ, विविधानि–अनेकप्रकाराणि, वस्त्राणि वाहनानि च यस्मै तादृशम्, पुन **प्रत्यर्पिताहवगृहीतनिःशेषकरितुरङ्गस्यन्दनं** प्रत्यर्पिता –प्रत्यावर्तिता, आहवे–रणे, गृहीता आयत्तीकृता, करिण –हस्तिन, तुरङ्गा –अश्वा, स्यन्दना –रथा यस्मै तादृशम्, **विधाय** कृत्वा, **च** पुन, **मुहूर्तं** क्षणम्, **अरतिच्छेदकारिभिः** पराजयग्लानिविनाशिभि, **कथालापैः** वार्तालापै, **विनोद्य** विनोदमनुभाव्य, **अभिमुखः** सम्मुखो भूत्वा, **कृताञ्जलिः** रचिताञ्जलि, **अवादीत्** उक्तवान्, सर्वत्र सेनापतिरिति शेष । किमित्याह—**कुमार !** समरकेतो !, **परेण** अन्येन, **परिकल्पितात्पवृत्तिः** परिकल्पिता–सम्पादिता, अल्पा–परिमिता, वृत्ति –जीविका यस्य तादृश, **अस्मद्विधः** अस्मादृशो जन, **ते** तव, **किं प्रियम्** अभीष्टम्, **करोतु** सम्पादयतु, न किमपि कर्तुमर्हतीत्यर्थ । कीदृशस्य ते ? **सकलजगदेकवीरस्य** सकले–समस्ते, जगति एकवीरस्य–अद्वितीयवीरस्य, पुन **करदीकृताशेषसागरान्तरद्वीपभूपतेः** करदीकृता –करदायकत्वमापादिता, अधिकृता इति यावत्, अशेषा –समग्रा, सागरान्तरद्वीपाना–समुद्रमध्यवर्तिद्वीपानाम्, भूपतय –नृपतयो येन तादृशस्य, पुन **विपक्षव्यसनसङ्कटगतैः** विपक्षव्यसने –शत्रुकृतदु खे, यत् सङ्कट–दु खस्थिति, तद्गतै –तत्प्राप्तै, **महद्भिरपि** श्रेष्ठैरपि समृद्धैरपीत्यर्थ, **भूमिपालैः** नृपै, **अपेक्षणीयसाहाय्यकस्य** अपेक्षणीयम् आश्रयणीयम्, साहाय्यम्–उपकारो यस्य तादृशस्य, पुन **चतुरुदधिविख्यातपार्थिवप्रथमसूनोः** चतुर्णाम् उदधीना–समुद्राणा समाहार चतुरुदधि, तत्र–तत्परिच्छिन्नभूमण्डल इत्यर्थ, विख्यात –प्रसिद्धो य पार्थिव –चन्द्रकेतु, तस्य प्रथमसूनो –ज्येष्ठपुत्रस्य, पुन **विधिवशाद्** दैवयोगात्, **कथञ्चित्** येनापि प्रकारेण महता कष्टेनेत्यर्थ, **गृहायातस्य** मद्गृहातिथितामापन्नस्य । **वा** अथवा, **कृतेन** विहितेन, **केन उपचारेण** सेवया, **प्रीतिं** प्रसादम्, **अधिगच्छतु** प्राप्नोतु । **तथापि** भवत्प्रियकरणासम्भवेऽपि, **अस्मासु** अस्मद्विषये, यदि **अनुग्रहबुद्धिः** दयादृष्टि, अस्तीति शेष, तत् तर्हि, **सततं** सर्वदा, **आदेशकारिणा** आज्ञाकारिणा, **समीपदेशस्थितेन** पार्श्वस्थितेन, **मया** वज्रायुधेन, **प्रतिपन्नसकलपृथ्वीव्यापारभरनिराकुलः** प्रतिपन्न –स्वीकृतो य, सकलाया –समग्राया, पृथ्व्या, व्यापारभर –शासनकार्यजातम्, तेन निराकुल –स्वस्थ सन्, **एतत्** इदम्, **मदीयं** मत्सम्बन्धि, **आधिपत्यपदं** चतुरङ्गसेनाध्यक्षपदम्, **अङ्गीकुरु** स्वीकुरु । **अथ** यदि, **तुच्छं** तत् पद न्यूनमिति हेतो, **मन्दाभिलाषः** मन्द –शिथिल, अभिलाष –तत्कामना यस्य तादृश, त्वमसीति शेष, **तदा** तर्हि, **सपरिजनः** सपरिवार, **इतः** अस्मात् स्थानात्, गत्वा, **पित्रा** चन्द्रकेतुना, **प्रतिपादितं** दत्तम्, **अतिप्राज्यवैभवम्** अतिप्राज्यम्–अत्यधिकम्, वैभवं–धनसम्पत्तिर्यस्मिंस्तादृशम्, **निजं** स्वीयम्, **यौवराज्यमेव** युवराजत्वपदमेव, **अध्यास्स्व** अधितिष्ठ । **च** पुन, **मा मन्यथा** न मन्यस्व, **यथा** यत्, **एतेन** अनेन, **निर्जित्य** पराजित्य, **विहितानुग्रहः** कृतानुग्रह, अह **कथं** केन प्रकारेण, **इद** यौवराज्यकार्यम्, **करोमि** सम्पादयामि । **तव** रणवीरस्य, **पराजये** पराजयकार्ये, अहं क अकिञ्चित्करत्वात् कोऽपीत्यर्थ । **जगति** लोके, **अन्योऽपि** मदन्योऽपि,

नृपतिभिः समं समकालमेव नीत्वा वश्यतामिहानीतोऽसि, स तु प्रभावोऽन्यस्य कस्यचित्, अथवा किमनेन दूरस्थोऽपि दृष्टमात्रेण येन प्रनष्टसकलचेष्टस्तदा समिति संजातोऽसि तदेव ते प्रकटमुपदर्शयामि' इत्युदीर्य तत्कालमादिष्टनिकटराजलोकढौकितमनेकमहाप्रभावमाणिक्यखचितमुद्रमङ्गुलीयकरत्नमग्रतो दर्शयन् 'कुतः प्राप्तमेतत्' इति पृष्टश्च देवस्य शक्रावतारगमनात् प्रभृति पूर्ववृत्तं ज्वलनप्रभदेववृत्तान्तमखिलमपि राजलक्ष्मीस्वस्थानगमनपर्यवसानं यथाश्रुतमकथयत् [ ञ्च ]।

सोऽपि तच्छ्रुत्वा किंचिदुपशान्तचिन्तासंज्वरः शत्रुभुजबलोत्कर्षसंभावनाकृतामवज्ञाबुद्धिमात्मनि श्लथामकरोत्। अब्रवीच्च—'दण्डाधिप! बाढमावर्जितोऽहममुना दूरविनिवारिताहङ्कारप्रवेशपेशलेन त्वदीयसौजन्येन। सदृशनिन्दाप्रशंसो मुनिरपि क ईदृशमात्मगुणापलापबद्धकक्षमरातिपक्षोत्कर्षवर्णनामुखरमखिलराजलोकसमक्षमुल्लपति, यादृक् त्वया सकलदिगन्तविश्रुतपराक्रमेण दक्षिणापथचक्रवर्तिना गदितम्। न केवलमव्याहतप्रसरया बाणसंहत्या महत्त्वयापि ते तिरस्कृतं भुवनमेतत्। कथमिव न प्रशस्यते स राजा देवराज-

---

अस्ति किम्? नास्ति कोऽपीत्यर्थः, यः समरकर्मणा संग्रामक्रियया, धृताधिज्यधन्वानं धृताकृष्टधन्वानम्, त्वां विमुखं पराङ्मुखम्, करोति कुर्यात्। यत् तु यत् पुनः, मुख्यैः प्रधानैः, नृपतिभिः राजभिः, समं सह, समकालमेव एककालमेव, इह अत्र, वश्यतां पराधीनताम्, आनीतोऽसि प्रापितोऽसि, स तु अन्यस्य मदतिरिक्तस्य, कस्यचित् वस्तुनः, प्रभावः महिमा। अथवा अनेन केवलतत्प्रभावप्रतिपादनेन, किम् अलम्, दूरस्थोऽपि दूरे विद्यमानोऽपि, त्वमिति शेषः, दृष्टमात्रेण केवलमवलोकनेन, येन वस्तुना, तदा तस्मिन् काले, समिति युद्धे, प्रनष्टसकलचेष्टः विलीनाखिलचेष्टाशक्तिकः, मूर्च्छित इत्यर्थः, संजातोऽसि सवृत्तोऽसि, तदेव वस्तु, ते तुभ्यम्, प्रकटं स्फुटम्, उपदर्शयामि दृष्टिगोचरतामापादयामि। इत्युदीर्य इत्युक्त्वा, तत्कालं तत्क्षणम्, आदिष्टनिकटराजलोकढौकितम् आदिष्टेन-आज्ञप्तेन, निकटराजलोकेन-पार्श्ववर्तिनृपजनेन, ढौकितम्-आनीतम्, अनेकमहाप्रभावमाणिक्यखचितमुद्रम् अनेकानि यानि महाप्रभावाणि-परमप्रभावशालीनि, माणिक्यानि-रत्नविशेषाः, तैः खचिता-व्याप्ता, मुद्रा-आकृतिविशेषो यस्य तादृशम्, अङ्गुलीयकरत्नम् अङ्गुल्यलङ्करणरत्नम्, अग्रतः अग्रे, अदर्शयत् दर्शितवान्। च पुनः, एतत् पुरोवर्ति अङ्गुलीयकरत्नम्, कुतः कस्मात्, प्राप्तं लब्धमिति पृष्टः जिज्ञासा ज्ञापितः, देवस्य भवतः, शक्रावतारगमनात् प्रभृति तदाख्यतीर्थगमनादारभ्य, राजलक्ष्मीस्वस्थानगमनपर्यवसानं राजलक्ष्म्या यत् स्वस्थानगमनं तत्पर्यन्तम्, पूर्ववृत्तं पूर्वनिष्पन्नम्, अखिलमपि अशेषमपि, ज्वलनप्रभदेववृत्तान्तं ज्वलनप्रभसंज्ञकदेवसमाचारम्, यथाश्रुतं श्रुतमनतिक्रम्य, अकथयत् कथितवान् [ ञ्च ]। सोऽपि नृपकुमारोऽपि, तद् उक्तरूपम्, श्रुत्वा, किञ्चिदुपशान्तचिन्तासंज्वरः किञ्चिदुपशान्त-शिथिलीभूतः, चिन्तारूपः संज्वरः-सन्तापो यस्य तादृशः, शत्रुभुजबलोत्कर्षसम्भावनाकृतां शत्रूणां-वैरिणाम्, भुजबलस्य-बाहुविक्रमस्य, य उत्कर्षः-प्रकर्षः, तत्सम्भावनाजनिताम्, आत्मनि स्वविषये, अवज्ञाबुद्धिम् तिरस्कारदृष्टिम्, श्लथां शिथिलाम्, अकरोत् कृतवान्। च पुनः, अब्रवीत् उक्तवान्, किमित्याह-दण्डाधिप! चतुरङ्गसेनाध्यक्ष! अहम्, दूरनिवारिताहङ्कारप्रवेशपेशलेन दूरनिवारितेन, अहङ्कारप्रवेशेन-अभिमानोदयेन, यत् पेशलं-मनोहरं तादृशेन, अमुना, त्वदीयसौजन्येन त्वत्सुजनतया, बाढम् अत्यन्तम्, आवर्जितः आनमितः। सदृशनिन्दाप्रशंसः सदृशौ-तुल्ये, निन्दा-प्रशंसे यस्य तादृशः, मुनिरपि कः, ईदृशम् एवंविधम्, आत्मगुणापलापबद्धकक्षम् आत्मगुणानां-स्वगुणानाम्, अपलापे-अपह्नवे, बद्धा-कक्षा अन्तरीयपश्चाद्भागो यस्मिंस्तादृशम्, पुनः अरातिपक्षोत्कर्षवर्णनामुखरम् अरातिपक्षस्य-शत्रुपक्षस्य, य उत्कर्षः-प्रकर्षः, तद्वर्णनया, मुखरं-वाचालं, यथा स्यात् तथेति सर्वं क्रियाविशेषणम्, अखिलराजलोकसमक्षं सकलनृपजनसमक्षम्, उल्लपति आलपति, न कोऽपीत्यर्थः, यादृक् यथा, सकलदिगन्तविश्रुतपराक्रमेण अखिलदिगन्तप्रसिद्धपराक्रमशालिना, पुनः दक्षिणापथचक्रवर्तिना दक्षिणदेशसम्राजा, त्वया, गदितम् उक्तम्। एतद् इदम्, भुवनं जगत्, केवलम्, अव्याहतप्रसरया अप्रतिहतप्रचारया, ते तव, बाणसंहत्या बाणसमूहेन, न तिरस्कृतम् अभिभूतम्, किन्तु तादृशा महत्त्व-

दायमप्रयच्छतां विक्षेपविसर्जनेपु कालक्षेपकारिणामाह्वानेपु बह्वनागमनकारणव्याहारिणामुत्सवेष्वहृष्टानामापत्सु सविलासचेष्टानामुक्त्या प्रीतिमुपदर्शयतां युक्त्या प्रतिलोमं व्यवहरतां सुवेलशैलोपकण्ठवासिनां दुष्टसामन्तानां प्रतिक्षेपाय दक्षिणापथयायि नौसैन्यमादिक्षत। प्रस्थितस्य च तस्य रिपुविनाशाय यथाशक्तिकृतशास्त्रपरिचयमधीतनीतिविद्यमभ्यस्तनिरवद्यधनुर्वेदमसिगदाचक्रकुन्तप्रासादिपु प्रहरणविशेषेपु कृतश्रममचिरारूढयौवनमभिषिच्य यौवराज्ये मामेव नायकमकल्पयत्। अर्पितानल्पपदातिसैन्यं च पुण्येऽहनि प्रधानैरवनिपतिभिरमात्यैः सामन्तैश्च कृत्वा ससहायं प्राहिणोत् [ ढ ]।

अथाहं प्रातरेव स्नातो निर्वर्तिताभिमतदेवताविशेषपूजः संपूज्य वस्त्रावतिसर्जनेन द्विजातिलोकं प्रतिकलावलोकितशङ्कुच्छायैर्ज्योतिर्गणितविद्भिः साधिते लग्ने सितदुकूलवासाः सितकुसुमदामग्रथितशेखरः शरच्चन्द्रातपेनेव कौमुदीमहोत्सवभ्रमणलग्नेन स्पर्शाह्लादिना चन्दनाङ्गरागेण सर्वाङ्गीणेन शोभमानः स्थूलस्वच्छमुक्ताफलग्रथितां

---

सम्भृतः–कृतः, अवलेपः–गर्वो यैस्तादृशानाम्; पुनः **प्रपन्नमपि** स्वयमङ्गीकृतमपि, **पूर्वदायं** पूर्वदेयकरम्, **अप्रयच्छताम्** अप्रददताम्; पुनः **विक्षेपविसर्जनेपु** दण्डद्रव्यदानेषु, **कालक्षेपकारिणां** कालातिक्रमकारिणाम्; पुनः **आह्वानेपु** स्वसविधाहूतिपु सतीपु, **बह्वनागमनकारणव्याहारिणां** बहूनि यानि अनागमनकारणानि–आगमनाभावहेतवः, तद्व्याहारिणां–तत्प्रतिपादिनाम्; **उत्सवेपु** मङ्गलावसरेषु, **अहृष्टानाम्** अमुदितानाम्; पुनः **आपत्सु** आपत्त्यवसरेषु, **सविलासचेष्टानां** विलासेन–मुखप्रसादादिविभ्रमेण, सहिता चेष्टा–शारीरिकक्रिया येषां तादृशानाम्; पुनः **उक्त्या** वचनेन, **प्रीतिं** प्रेमाणम्, **उपदर्शयतां** प्रकटयताम्; पुनः **युक्त्या** उपायेन, **प्रतिलोमं** प्रतिकूलं यथा स्यात् तथा, **व्यवहरताम्** आचरताम्; पुनः **सुवेलशैलोपकण्ठवासिनां** सुवेलशैलस्य–सुवेलपर्वतस्य, उपकण्ठे–निकटे, वास्तव्यानाम्। **च** पुनः, **रिपुविनाशाय** शत्रुविनाशाय, **प्रस्थितस्य** प्रयातस्य, तस्य सैन्यस्य, **नायकं** पतिम्, मामेव, **अकल्पयत्** कृतवान्, किं कृत्वा? **यौवराज्ये** युवराजपदे, **अभिषिच्य** अभिषेकं कृत्वा, कीदृशं माम्? **यथाशक्तिकृतशास्त्रपरिचयं** स्वशक्त्यनुसारविहितशास्त्रानुशीलनम्; पुनः **अधीतनीतिविद्यम्** पठितनीतिशास्त्रम्; पुनः **अभ्यस्तनिरवद्यधनुर्वेदम्** अभ्यस्तः–क्षुपितः, निरवद्यः–प्रशस्यः, धनुर्वेदः–धनुर्विद्या येन तादृशम्; पुनः **असि-गदा-चक्र-कुन्त-प्रासादिपु** तत्तदस्त्रविशेषप्रभृतिषु, **प्रहरणविशेषेपु** अस्त्रविशेषेषु, **कृतश्रमं** कृतशिक्षणायासम्; पुनः **अचिरारूढयौवनम्** अभिनवोद्भूततारुण्यम्। **च** पुनः, **अर्पितानल्पपदातिसैन्यम्** अर्पितं–दत्तम्, अनल्पं–प्रचुरम्, पदातिसैन्यं–पदगामि सैन्यं यस्मै तादृशम्, मामिति शेषः, **प्रधानैः** मुख्यैः, **अवनिपतिभिः** नृपतिभिः, **अमात्यैः** सचिवैः, **सामन्तैः** अधीननृपैश्च, **ससहायं** सहायसहितम्, कृत्वा, **पुण्ये** प्रशस्ते, **अहनि** दिने, **प्राहिणोत्** प्रेषितवान् [ ढ ]।

**अथ** अनन्तरम्, **प्रातरेव** प्रातःकाल एव, **स्नातः** कृतस्नानः, **सभामण्डपं** सभागृहम्, **अगच्छम्** गतवान्; कीदृशः? **निर्वर्तिताभिमतदेवताविशेषपूजः** निर्वर्तिता–सम्पादिता, अभिमतदेवताविशेषस्य–इष्टदेवविशेषस्य, पूजा येन, यद्वा अभिमतदेवताया विशेषपूजा येन तादृशः; किं कृत्वा? **वस्त्रावतिसर्जनेन** वस्त्रवितरणेन, **द्विजातिलोकं** द्विजजनम्, **सम्पूज्य** सम्यक् पूजयित्वा; कदा? **प्रतिकलावलोकितशङ्कुच्छायैः** कला नाम–राशेः षष्टितमोंऽशः, कलां कलां प्रति–प्रतिकलम्, अवलोकिता–दृष्टा, शङ्कोः–आरोपितद्वादशाङ्गुलदण्डस्य, छाया यैस्तादृशैः, तच्छायावलोकननिर्णीतेष्टकालैरित्यर्थः, **ज्योतिर्गणितविद्भिः** ज्योतिर्नाम–नक्षत्रम्, तत्प्रधानकं शास्त्रमिति यावत्, तत्सम्बन्धि यद् गणितं–गणना, तद्विद्भिः–तदभिज्ञैः, दैवविद्भिरित्यर्थः, **साधिते** निरूपिते, **लग्ने** राश्युदये; पुनः कीदृशः? **सितदुकूलवासाः** सितं–शुभ्रम्, दुकूलं–पट्टम्, वासः–वस्त्रं यस्य तादृशः; पुनः **सितकुसुमदामग्रथितशेखरः** सितानि–श्वेतानि, यानि कुसुमानि–पुष्पाणि, तेषां दाम्ना–मालया, ग्रथितः–कल्पितः, शेखरः–शिरोभूषणं येन तादृशः; पुनः **कौमुदीमहोत्सवभ्रमणलग्नेन** कौमुद्याः चन्द्रिकायाः, यो महोत्सवः–महानुत्सवः, तत्र यद् भ्रमणं–विहरणम्, तेन लग्नेन शरीरसम्पृक्तेन, **शरच्चन्द्रातपेन इव** शरच्चन्द्रकिरणेनेव कुङ्कुमेन, **स्पर्शाह्लादिना** स्पर्शसुखप्रदेन, **सर्वाङ्गीणेन** सर्वाङ्गव्यापकेन, **चन्दनाङ्गरागेण**

तत्क्षणप्रमुदिताया वक्षःस्थलभाजो राजलक्ष्या लोचनद्वयादानन्दाश्रुपद्धतिमिव द्विधाप्रवृत्तां नाभिचक्रचुम्बिनीमेकावलीं दधानो बद्धचन्दनप्रवालवन्दनमालातरङ्गिततोरणमुद्दामगन्धोदकच्छटाविच्छर्दविरजीकृताजिरमागृहीतोज्ज्वलवेपसविशेषचारुसंचरद्वारवनिताजनमवहितप्रतीहारनिर्धार्यमाणानिबद्धभापिबाह्यपरिजनं सभामण्डपमगच्छम् [ ण ]।

तत्र च पवित्रमणिवेदिकापृष्ठनिहिते महति हेमासने प्राङ्मुखोपविष्टस्तत्कालमभिमुखीभूताभिः साक्षादिव जयश्रीभिरूरुसंदंशदष्टनिवसनाग्रपल्लवस्पष्टीकृतनितम्बपरिणाहाभिरीपदवनमितपूर्वकायतया मिलद्वलित्रयत्र्यस्रीभूतनाभिमण्डलाभोगाभिः कनकवलयावलीवाचालभुजलतोत्क्षेपलक्ष्यमाणपीनोद्धुरपयोधराभिरुज्झितस्तनोत्सङ्गनिःसङ्गलम्ब्यमानप्रलम्बमौक्तिकप्रालम्बाभिः पुरोनिहितदधिकुसुमदूर्वाङ्कुरसनाथाक्षतपूर्णकनकपात्राभिरन्तःपुर-

---

चन्दनसम्बन्धिशरीरलेपनद्रवेण, **शोभमानः** दीप्यमानः; पुनः **स्थूलस्वच्छमुक्ताफलग्रथितां** स्थूलानि, स्वच्छानि-शुभ्राणि च, यानि मुक्ताफलानि-मौक्तिकानि, तैः, ग्रथितां-गुम्फिताम्, **द्विधाप्रवृत्तां** द्विधाऽवस्थिताम्, भागद्वयेनावस्थितामित्यर्थः, पुनः **नाभिचक्रचुम्बिनीम्** नाभिमण्डलव्यापिनीम्, **एकावलीम्** एकपङ्क्त्यात्मिकाम्, मालां **दधानः** धारयन्, **कामिव ?** **तत्क्षणप्रमुदितायाः** तत्कालप्रहृष्टायाः, पुनः **वक्षःस्थलभाजः** वक्षःस्थलस्थितायाः, **राजलक्ष्म्याः** राजसम्बन्धिन्या लक्ष्म्याः, **लोचनद्वयात्** नेत्रद्वयात्, निर्गतामिति शेषः, द्विधाप्रवृत्ताम्, **आनन्दाश्रुपद्धतिमिव** आनन्दजन्यनेत्रजलप्रवाहमिवेत्युत्प्रेक्षा; कीदृशं सभामण्डपम् ? **बद्धचन्दनप्रवालवन्दनमालातरङ्गिततोरणम्** बद्धाभिः, चन्दनप्रवालानां-चन्दनपल्लवानाम्, वन्दनमालाभिः-तोरणमालाभिः, तरङ्गितं-व्याप्तम्, तोरणं-बहिर्द्वारं यस्य तादृशम्; पुनः **उद्दामगन्धोदकच्छटाविच्छर्दविरजीकृताजिरम्** उद्दाम्नाम्-अप्रतिहतानाम्, गन्धोदकच्छटानां-गन्धान्वितजलधाराणाम्, विच्छर्देन-विक्षेपेण, विरजीकृतः-निर्धूलीकृतः, अजिरः-प्राङ्गणं यस्य तादृशम्, पुनः **आगृहीतोज्ज्वलवेपसविशेषचारुसञ्चरद्वारवनिताजनम्** आ-समन्तात्, गृहीतेन, उज्ज्वलवेपेण, सविशेषचारवः-अत्यन्तमनोहराः, सञ्चरन्तः-प्रचरन्तः, वारवनिताजनाः-वेश्याजना यस्मिंस्तादृशम्, पुनः **अवहितप्रतीहारनिर्धार्यमाणानिबद्धभापिबाह्यपरिजनम्** अवहितप्रतीहारैः-सावधानद्वारपालैः, निर्धार्यमाणाः-पृथक्क्रियमाणाः, निरुध्यमाना इति यावत्, अनिबद्धभापिणः-असम्बद्धभापिणः, बाह्यपरिजनाः-बाह्यपरिवारा यस्मिंस्तादृशम् [ ण ]।

च पुनः, तत्र सभामण्डपे, **पवित्रमणिवेदिकापृष्ठनिहिते** निर्मलमणिमयवेदिकोपरिधृते, **महति** विशाले, **हेमासने** सुवर्णमयासने, **प्राङ्मुखोपविष्टः** पूर्वाभिमुखकृतोपवेशनः सन्, **राजकुलात्** राजधानीतः, **निरगच्छम्** निर्गतवानित्यग्रेणान्वेति; कीदृशः ? **अन्तःपुरविलासिनीभिः** अन्तःपुरवधूभिः, **सम्पादितसकलयात्रामङ्गलः** सम्पादितानि-निष्पादितानि, सकलानि-समस्तानि, यात्रामङ्गलानि-यात्राकालिकमङ्गलोपचारा यस्य तादृशः; कीदृशीभिः ? **तत्कालं** तत्क्षणम्, **अभिमुखीभूताभिः** सम्मुखीभूताभिः, साक्षात्, **जयश्रीभिरिव** रिपुविजयलक्ष्मीभिरिवेत्युत्प्रेक्षा, पुनः **ऊरुसन्दंशदष्टनिवसनाग्रपल्लवस्पष्टीकृतनितम्बपरिणाहाभिः** ऊरुरूपः-जानूपरितनभागरूपो यः, सन्दंशः-वस्तुनियन्त्रणोपकरणविशेषः, तेन दष्टेन-नियन्त्रितेन, आकृष्टेनेत्यर्थः, निवसनस्य-सूक्ष्मवस्त्रस्य, अग्रपल्लवेन-प्रान्तकोमलाग्रभागेन, स्पष्टीकृतः-स्फुटीकृतः, नितम्बस्य-कटिपश्चाद्भागस्य, परिणाहः-विस्तारो यासां तादृशीभिः, पुनः **ईपदवनमितपूर्वकायतया** किञ्चिदवनमितशरीरपूर्वार्धतया हेतुना, **मिलद्वलित्रयत्र्यस्रीभूतनाभिमण्डलाभोगाभिः** मिलता सङ्घटमानेन, वलित्रयेण-नाभिमण्डलाधस्तनरेखात्रयेण, त्र्यस्रीभूतः-त्रीणि अस्राणि-कोणा यस्य तादृशीभूतः, नाभिमण्डलस्य, आभोगः-विस्तारो यासां तादृशीभिः, पुनः **कनकवलयावलीवाचालभुजलतोत्क्षेपलक्ष्यमाणपीनोद्धुरपयोधराभिः** कनकवलयानां-सुवर्णमयप्रकोष्ठाभरणानाम्, आवल्या-पङ्क्त्या, वाचालायाः-मुखरायाः, भुजलतायाः-बाहुलतायाः, उत्क्षेपेण-उद्वेलनेन, लक्ष्यमाणौ-दृश्यमानौ, उद्धुरौ-उन्नतौ, पीनौ-स्थूलौ च, पयोधरौ-स्तनौ यासां तादृशीभिः, पुनः **उज्झितस्तनोत्सङ्गनिःसङ्गलम्ब्यमानप्रलम्बमौक्तिकप्रालम्बाभिः** उज्झितः-त्यक्तः, स्तनोत्सङ्गः-स्तनमध्यभागो येन तादृशम्, अत एव निःसङ्गं-तत्सम्पर्करहितं यथा स्यात् तथा, लम्बमानम्-अधोनतम्, प्रलम्बं-दीर्घम्, मौक्तिकानां-मुक्तामणीनाम्, प्रालम्बं-ऋजुलम्बिमाल्यं यासां तादृशीभिः, पुनः **पुरोनिहितदधिकुसुमदूर्वाङ्कुरसनाथाक्षतपूर्णकनकपात्राभिः** पुरः-अग्रे,

तत्क्षणप्रमुदिताया वक्षःस्थलभाजो राजलक्ष्म्या लोचनद्वयादानन्दाश्रुपद्धतिमिव द्विधाप्रवृत्ता नाभिचक्रचुम्बिनीमेकावलीं दधानो बद्धचन्दनप्रवालवन्दनमालातरङ्गिततोरणमुद्दामगन्धोदकच्छटाविच्छर्दविरजीकृताजिरमागृहीतोज्ज्वलवेषसविशेषचारुसंचरद्वारवनिताजनमवहितप्रतीहारनिर्धार्यमाणानिबद्धभाषिबाह्यपरिजन सभामण्डपमगच्छम् [ फ ] ।

तत्र च पवित्रमणिवेदिकापृष्ठनिहिते महति हेमासने प्राङ्मुखोपविष्टस्तत्कालमभिमुखीभूताभिः साक्षादिव जयश्रीभिरूरुसंदंशदष्टनिवसनाग्रपल्लवस्पष्टीकृतनितम्बपरिणाहाभिरीषदवनमितपूर्वकायतया मिलद्वलित्रयत्र्यस्रीभूतनाभिमण्डलाभोगाभिः कनकवलयावलीवाचालभुजलतोत्क्षेपलक्ष्यमाणपीनोद्धुरपयोधराभिरुज्झितस्तनोत्सङ्गनिःसङ्गलम्बमानप्रलम्बमौक्तिकप्रालम्बाभिः पुरोनिहितदधिकुसुमदूर्वाङ्कुरसनाथाक्षतपूर्णकनकपात्राभिरन्तःपुर-

---

चन्दनसम्बन्धिशरीरलेपनद्रवेण, **शोभमान** दीप्यमान, पुन **स्थूलस्वच्छमुक्ताफलग्रथितां** स्थूलानि, स्वच्छानि-शुभ्राणि च, यानि मुक्ताफलानि मौक्तिकानि, तै, ग्रथिता-गुम्फिताम्, **द्विधाप्रवृत्ता** द्विधाऽवस्थिताम्, भागद्वयेनावस्थिता मित्यथ, पुन **नाभिचक्रचुम्बिनीम्** नाभिमण्डलव्यापिनीम्, **एकावलीम्** एकपङ्क्त्यात्मिकाम्, माला **दधान** धारयन्, कामिव ? **तत्क्षणप्रमुदिताया** तत्कालप्रहृष्टाया, पुन **वक्ष स्थलभाज** वक्ष स्थलस्थिताया, **राजलक्ष्म्याः** राजसम्बन्धिन्या लक्ष्म्या, **लोचनद्वयात्** नेत्रद्वयात्, निर्गतामिति शेष, द्विधाप्रवृत्ताम्, **आनन्दाश्रुपद्धतिमिव** आनन्दजन्यनेत्रजलप्रवाहमिवेत्युत्प्रेक्षा, कीदृश सभामण्डपम् ? **बद्धचन्दनप्रवालवन्दनमालातरङ्गिततोरणम्** बद्धाभि, चन्दनप्रवालाना-चन्दनपल्लवानाम्, वन्दनमालाभि-तोरणमालाभि, तरङ्गित-व्याप्तम्, तोरण-बहिर्द्वारं यस्य तादृशम्, पुन **उद्दामगन्धोदकच्छटाविच्छर्दविरजीकृताजिरम्** उद्दामाम्-अप्रतिहतानाम्, गन्धोदकच्छटाना-गन्धान्वितजलधाराणाम्, विच्छर्देन-विक्षेपेण, विरजीकृत-निर्धूलीकृत, अजिर-प्राङ्गण यस्य तादृशम्, पुन **आगृहीतोज्ज्वलवेषसविशेषचारुसञ्चरद्वारवनिताजनम्** आ-समन्तात्, गृहीतेन, उज्ज्वलवेषेण, सविशेषचारव-अत्यन्तमनोहरा, सञ्चरन्त-प्रचरन्त, वारवनिताजना-वेश्याजना यस्मिंस्तादृशम्, पुन **अवहितप्रतीहारनिर्धार्यमाणानिबद्धभाषिबाह्यपरिजनम्** अवहितप्रतीहारै-सावधानद्वारपालै, निर्धार्यमाणा-पृथक्क्रियमाणा, निरुध्यमाना इति यावत्, अनिबद्धभाषिण-असम्बद्धभाषिण, बाह्यपरिजना-बाह्यपरिवारा यस्मिंस्तादृशम् [ फ ] ।

च पुन, तत्र सभामण्डपे, **पवित्रमणिवेदिकापृष्ठनिहिते** निर्मलमणिमयवेदिकोपरिस्थिते, **महति** विशाले, **हेमासने** सुवर्णमयासने, **प्राङ्मुखोपविष्ट** पूर्वाभिमुखकृतोपवेशन सन्, **राजकुलात्** राजधानीत, **निरगच्छम्** निर्गत वानित्यग्रेणान्वेति, कीदृश ? **अन्त.पुरविलासिनीभि** अन्त पुरवधूभि, **सम्पादितसकलयात्रामङ्गल** सम्पादितानि-निष्पादितानि, सकलानि-समस्तानि, यात्रामङ्गलानि-यात्राकालिकमङ्गलोपचारा यस्य तादृश, कीदृशीभि ? **तत्काल** तत्क्षणम्, **अभिमुखीभूताभि** सम्मुखीभूताभि, साक्षात्, **जयश्रीभिरिव** रिपुविजयलक्ष्मीभिरिवेत्युत्प्रेक्षा, पुन **ऊरुसन्दंशदष्टनिवसनाग्रपल्लवस्पष्टीकृतनितम्बपरिणाहाभि** ऊरुरूप-जानूपरितनभागरूपो य, सन्दंश-वस्तुनियन्त्रणोपकरणविशेष, तेन दष्टेन-नियन्त्रितेन, आकुञ्चितेनेत्यर्थ, निवसनस्य-सूक्ष्मवस्त्रस्य, अग्रपल्लवेन-पल्लवकोमलाग्रभागेन, स्पष्टीकृत-स्फुटीकृत, नितम्बस्य-कटिपश्चाद्भागस्य, परिणाह-विस्तारो यासा तादृशीभि, पुन **ईषदवनमितपूर्वकायतया** किञ्चिदधोनमितशरीरपूर्वार्धतया हेतुना, **मिलद्वलित्रयत्र्यस्रीभूतनाभिमण्डलाभोगाभिः** मिलता सङ्घटमानेन, वलित्रयेण-नाभिमण्डलाधस्तनरेखात्रयेण, त्र्यस्रीभूत-त्रय अस्रा-कोणा यस्य तादृशीभूत, नाभिमण्डलस्य, आभोग-विस्तारो यासा तादृशीभि, पुन **कनकवलयावलीवाचालभुजलतोत्क्षेपलक्ष्यमाणपीनोद्धुरपयोधराभि** कनकवलयाना-सुवर्णमयप्रकोष्ठाभरणानाम्, आवल्या-पङ्क्त्या, वाचालाया-मुखराया, भुजलताया-बाहुलताया, उत्क्षेपेण उद्वेलनेन, लक्ष्यमाणौ दृश्यमानौ, उद्धुरौ-उन्नतौ, पीनौ-स्थूलौ च, पयोधरौ-स्तनौ यासा तादृशीभि, पुन **उज्झितस्तनोत्सङ्गनि सङ्गलम्बमानप्रलम्बमौक्तिकप्रालम्बाभि** उज्झित-त्यक्त, स्तनोत्सङ्ग-स्तनमध्यभागो येन तादृशम्, अत एव नि सङ्ग-तत्सम्पर्करहित यथा स्यात् तथा, लम्बमानम् अधोनतम्, प्रलम्ब-दीर्घम्, मौक्तिकाना-मुक्तामणीनाम्, प्रालम्ब-ऋजुलम्बिमाल्य यासां तादृशीभि, पुन **पुरोनिहितदधिकुसुमदूर्वाङ्कुरसनाथाक्षतपूर्णकनकपात्राभिः** पुर-अग्रे,

विलासिनीभिः संपादितसकलयात्रामङ्गलः [त], प्रत्यग्रसप्तच्छदप्रवालदत्तसान्द्रमुखमुद्रमभिवन्द्य पुरःस्थापित राजतपूर्णकुम्भमप्रतिरथाध्ययनध्वनिमुखरेण पुरःसरपुरोधसा द्विजातिवृन्देनानुगम्यमानश्चरणाभ्यामेव गत्वा प्रथमकक्षान्तरद्वारभूमिमग्रतः ससम्भ्रमव्यापारिताङ्कुशेन वज्राङ्कुशनाम्ना महामात्रेण प्राङ्मुखीकृत्य विधृत सितपिष्टपङ्कपाण्डुरितगात्रमक्षुद्रमणिचित्रनक्षत्रमालापरिक्षिप्तसिन्दूरपाटलविकटकुम्भभागमारोपितानेकनिशित-शस्त्रप्रभाशारशातकुम्भशारीपरिकरितपृष्ठपीठमश्रान्तमदवारिधारादुर्दिनान्धकारितकरटकूटं त्रिकूटपर्वतमिव परित्यक्तस्थावरावस्थममरवल्लभाभिधानं गन्धगजमधिरूढो [थ], दृढावनद्धतारतूणीरबन्धुरोभयस्कन्धशिखरः कनकपत्रभङ्गचित्रमध्यभागभाजा शरासनेन सनाथवामहस्तः सलीलमुद्धूयमानबालव्यजनकलापः सदर्पसर्प-

---

टिप्पनकम्—अप्रतिरथ –प्रस्थानमन्त्र । शार –कर्बुर [थ] ।

---

निहित–स्थापितम्, दध्ना, कुसुमै –पुष्पै, दूर्वाङ्कुरै –दूर्वाख्यतृणविशेषाङ्कुरै, सनाथ–सहितम्, अक्षतपूर्णम्–आर्द्रतण्डुलपूर्णम्। कनकपात्र–सुवर्णपात्र याभिस्ताहशीभि [त]। पुन प्रत्यग्रसप्तच्छदप्रवालदत्तसान्द्रमुखमुद्रम् प्रत्यग्रै –अभिनवै, सप्तच्छदस्य–सप्तसप्तपत्रविशिष्टवृन्तकवृक्षविशेषस्य, प्रवालै –पल्लवै, दत्ता–सम्पादिता, सान्द्रा–निबिडा, मुखमुद्रा–मुखावरण यस्य तादृशम्, पुर. अग्रे, स्थापित धृतम्, राजतपूर्णकुम्भ रजतनिर्मितपूर्णकलशम्, अभिवन्द्य नमस्कृत्य, अप्रतिरथाध्ययनध्वनिमुखरेण अप्रतिरथस्य–प्रस्थानमन्त्रस्य, य, अध्ययनध्वनि –पठननाद, तेन, मुखरेण–वाचालेन, पुन पुरस्सरपुरोधसा पुर सर –अग्रेसर, पुरोधा पुरोहितो यस्य तादृशेन, द्विजातिवृन्देन द्विजगणेन, अनुगम्यमान. अनुस्रियमाण, पुरस्सरपुरोध इति पाठे तु पुरस्सर –पुरोधा यस्मिंस्तादृशम् यथा स्यात् तथेति क्रियाविशेषणविधया व्याख्येयम्, पुन. प्रथमकक्षान्तरितद्वारभूमिम् प्रथमकक्षाया–प्रथमप्रतोलिकाया, अन्तरद्वारभूमिं–बाह्यद्वारप्रदेशम्, चरणाभ्यामेव पद्भ्यामेव, गत्वा, अग्रत अग्रे, ससम्भ्रमव्यापारिताङ्कुशेन ससम्भ्रम–सत्वरं यथा स्यात् तथा, व्यापारित –प्रयुक्त, प्रेरित इति यावत्, अङ्कुशो येन तादृशेन, वज्राङ्कुशनाम्ना अन्वर्थतदाख्येन, महामात्रेण हस्तिपकेन, प्राङ्मुखीकृत्य पूर्वमभिमुखीकृत्य, विधृत स्थापितम्, पुन सितपिष्टपङ्कपाण्डुरितगात्रम् सित–शुभ्रम्, यत् पिष्ट–चूर्णम्, पिष्टातक इत्यर्थ, तस्य पङ्केन–कर्दमेन, पाण्डुरित–किञ्चित्पीतरक्तीकृतम्, गात्र–शरीरं यस्य तादृशम्, पुन अक्षुद्रमणिचित्रनक्षत्रमालापरिक्षिप्तम् अक्षुद्रा –महार्घा, ये मणय, तद्रूपाणां चित्राणाम्–अनेकवर्णानाम्, नक्षत्राणा–ताराणाम्, मालया–समूहेन, सप्तविंशतिमौक्तिकनिर्मितहारेण वा, परिक्षिप्त–व्याप्तम्, पुन सिन्दूरपाटलविकटकुम्भभागम् सिन्दूरेण–रक्तचूर्णेन, पाटल–रक्त, विकट –विशाल, कुम्भभाग –घटाकारमस्तकभागो यस्य तादृशम्, पुन अनेकनिशितशस्त्रप्रभाशारशातकुम्भशारीपरिकरितपृष्ठपीठम् अनेकेषा–बहूनाम्, निशिताना–तीक्ष्णानाम्, शस्त्राणा प्रभाभि –द्युतिभि, शारा–चित्रवर्णा, या शातकुम्भशार्य –सुवर्णमयपर्याणानि, ताभि परिकरित परिवेष्टित, पृष्ठपीठ–पृष्ठरूपमासन यस्य तादृशम्, पुन अश्रान्तमदवारिधारादुर्दिनान्धकारितकरटकूटम् अश्रान्ताभि –अविच्छिन्नाभि, मदवारिधाराभि –मदजलधाराभि, यद्दुर्दिन–मेघाच्छन्नदिनम्, तेन अन्धकारित –अन्धकारावृत, करटकूट –गण्डस्थलशिखरं यस्य तादृशम्, अत एव परित्यक्तस्थावरावस्थम् परित्यक्ता स्थावरावस्था–स्थावरत्वरूपावस्था येन तादृशम्, गृहीतजङ्गमावस्थमित्यर्थ, त्रिकूटपर्वतमिव त्रिकूटाख्यपर्वतविशेषमिवेत्युत्प्रेक्षा, अमरवल्लभाभिधानम् अमराणा–देवानाम्, वल्लभ –प्रिय, इत्यन्वर्थतदाख्यम्, गन्धगजम् यस्य गन्धेनान्ये हस्तिन पलायन्ते तादृश मदगन्धवद्धस्तिनम्, अधिरूढः आरूढ [थ], पुन दृढावनद्धतारतूणीरबन्धुरोभयस्कन्धशिखर दृढ यथा स्यात् तथा, अवनद्धेन–आबद्धेन, ताराणा–विशुद्धमौक्तिकानाम्, तूणीरेण–इषुधिना, बाणाधारपात्रेणेति यावत्, बन्धुरम्–उन्नतानतम्, उभयस्कन्धशिखरं–स्कन्धद्वयोपरिभागो यस्य तादृश, पुन कनकपत्रभङ्गचित्रमध्यभागभाजा कनकपत्रभङ्गै –सुवर्णपत्ररचनाभि, चित्र –चित्रवर्णो यो मध्यभागस्तद्वता, शरासनेन धनुषा, सनाथवामहस्त. सनाथ –सहित, वामहस्तो यस्य तादृश, पुन सलील सक्रीड यथा स्यात् तथा, उद्धूयमानबालव्यजनकलाप. उद्धूयमान –उत्क्षिप्यमाण, बालव्यजनस्य–चामरस्य, कलाप –समूहो यस्मिंस्तादृश,

स्पदातिनिर्दयपादपातप्रवर्तिताकाण्डमेदिनीकम्पः प्रहर्षोत्तालवैतालिकव्राततारतरोद्घुष्यमाणजयजयध्वनिर्ध्वनद्विजयमङ्गलाभिधानतूर्यनिर्घोषवधिरिताखिलब्रह्मस्तम्बः पुरस्तात् सलीलचलितकरिघटारूढकिङ्करपुरुषपातितविरलघनघातानामुत्पातनिर्घातघोरघोषोद्गारमतितारमारसन्तीनां ढक्कानां ध्वनितेन मुखरयन्नखिलान्यपि दिशां मुखानि [ द ], शिखरविस्फुरत्पद्मरागस्थूलकलशस्य दोलायमानावचूलमुक्ताफलदाम्नश्चित्ररत्नखण्डखचितचामीकरदण्डस्य पुरः प्रसर्पतः श्वेतातपत्रखण्डस्य पर्यन्तयायिनामनिलभरितरन्ध्रवर्त्मव्यक्तरूपाणामिभवराहशरभशार्दूलमकरमत्स्याद्याकारधारिणामनेकपार्थिवसमरसंगृहीतानां चिह्नकानामपह्नुतार्करोचिषा चक्रवालेन जटिलीकृतदिगन्तरालो राजकुलान्निरगच्छम् [ ध ]। अनुपदं च प्रणामपरितुष्टाभिर्विजयाशिषाभिनन्द्यमानो द्विजातिपरिषद्भिर्विनयविरचिताञ्जलिपुटाभिः प्रणम्यमानः पौरजनताभिरुत्सृष्टलाजवृष्टिभिरुद्घुष्यमाणमनोरथसिद्धिर्नगर-

---

पुनः **सदर्पसर्पत्पदातिनिर्दयपादपातप्रवर्तिताकाण्डमेदिनीकम्पः** सदर्पं-सगर्वं यथा स्यात् तथा, सर्पतां-गच्छताम्, पदातीनां-पादगामिसैन्यानाम्, निर्दयं निष्ठुरं यथा स्यात् तथा, पादपातेन-पादविक्षेपेण, पादाघातेनेत्यर्थः, प्रवर्तितः-प्रारब्धः, अकाण्डे-अनवसरे, मेदिनीकम्पः-भूकम्पो येन तादृशः, पुनः **प्रहर्षोत्तालवैतालिकव्राततारतरोद्घुष्यमाणजयजयध्वनिः** प्रहर्षेण-प्रमोदेन, उत्तालः-उद्धतः, यो वैतालिकानां-वन्दिपुरुषाणाम्, व्रातः-समूहः, तेन तारतरम्-उच्चतरं यथा स्यात् तथा, उद्घुष्यमाणः असकृदुच्चार्यमाणः, जयजयध्वनिः-जयजयकारो यस्य तादृशः, पुनः **ध्वनद्विजयमङ्गलाभिधानतूर्यनिर्घोषवधिरिताखिलब्रह्मस्तम्बः** ध्वनतः-शब्दायमानस्य, विजयमङ्गलाभिधानस्य-विजयमङ्गलाख्यस्य, तूर्यस्य-वाद्यविशेषस्य, निर्घोषैः-नादैः, बधिरितः-बधिरीकृतः, अखिलब्रह्मस्तम्बः-समस्तब्रह्माण्डो येन तादृशः, पुनः **ढक्कानां** यश:-पटहानाम्, **ध्वनितेन** ध्वनिना, **अखिलान्यपि** सर्वाण्यपि, दिशाम्, **मुखानि** अग्रभागान्, **मुखरयन्** ध्वनयन्, कीदृशीनाम्? **पुरस्तात्** अग्रे, **सलीलचलितकरिघटारूढकिङ्करपुरुषपातितविरलघनघातानाम्** सलीलं-सखेलम्, चलिता-प्रयाताम्, करिघटा-हस्तियूथम्, आरूढैः-कृतारोहणैः, किङ्करपुरुषैः-भृत्यभूतपुरुषैः, पातितः-सहर्षविश्लेषितः, विरलघनः-कदाचिद् विरलः, कदाचिद् घनः घातः-अभिघातो यासां तादृशीनाम्, पुनः **उत्पातनिर्घातघोरघोषोद्गारम्** उत्पातरूपः-शुभाशुभसूचकभूतविकारभूतः, यः निर्घातः-ध्वनिः, तद्वद् घोरः-भयङ्करः, घोषोद्गारः-नादोद्रेको यस्मिंस्तादृशं यथा स्यात् तथा, **अतितारम्** अत्युच्चैः, **आरसन्तीनाम्** आ समन्ताद् ध्वनन्तीनाम्, [ द ]। पुनः **शिखरविस्फुरत्पद्मरागस्थूलकलशस्य** शिखरे-ऊर्ध्वभागे, विस्फुरन्-प्रकाशमानः, पद्मरागस्य-तदाख्यरक्तमणेः, तन्मणिमय इत्यर्थः, स्थूलः-कलशो यस्य तादृशस्य, पुनः **दोलायमानावचूलमुक्ताफलदाम्नः** दोलायमानम्, अवचूलानां-वर्तुलानाम्, मुक्ताफलानां-मुक्तामणीनाम्, दाम-पङ्क्तिर्यस्मिंस्तादृशस्य, पुनः **चित्ररत्नखण्डखचितचामीकरदण्डस्य** चित्रैः-नानावर्णैः, रत्नखण्डैः, खचितः-व्याप्तः, चामीकरदण्डः-सुवर्णमयदण्डो यस्य तादृशस्य, पुनः **पुरः** अग्रे, **प्रसर्पतः** उद्वेलतः, **श्वेतातपत्रस्य** श्वेतच्छत्रस्य, **पर्यन्तपातिनाम्** प्रान्तवर्तिनाम्, **अनिलभरितरन्ध्रवर्त्मव्यक्तरूपाणाम्** अनिलभरितेन-वायुपूर्णेन, रन्ध्रवर्त्मना-छिद्रमार्गेण, व्यक्त-प्रकटितम्, रूपं-स्वरूपं येषां तादृशानाम्, **इभ वराह शरभ शार्दूल मकर मत्स्याद्याकारधारिणाम्** इभः-हस्ती, वराहः-शूकरः, शरभः-मृगविशेषः, शार्दूलः-व्याघ्रः, मकरः-जलजन्तुविशेषः, तदादीनां तत्प्रभृतीनाम्, यः आकारः-प्रतिकृतिः, तद्धारिणाम्, **अनेकपार्थिवसमरसंगृहीतानाम्** अनेकपार्थिवैः-नानानृपैः सह, समरे-सङ्ग्रामे, संगृहीतानाम्-सञ्चितानाम्, **अपह्नुतार्करोचिषाम्** अपह्नुतम् अपलपितम्, अर्कस्य-सूर्यस्य, रोचिः-प्रकाशो यैस्तादृशानाम्, **चिह्नकानां** ध्वजानाम्, **चक्रवालेन** मण्डलेन, **जटिलीकृतदिगन्तरालः** व्याप्तदिङ्मध्य [ ध ]।

**च** पुनः, **अनुपदं** प्रतिपदम्, **प्रणामपरितुष्टाभिः** अभिवादनसन्तुष्टाभिः, **द्विजातिपरिषद्भिः** द्विजमण्डलीभिः, **विजयाशिषा** विजयशुभैषणया, **अभिनन्द्यमानः** अभिवर्ध्यमानः, पुनः **विनयविरचिताञ्जलिपुटाभिः** विनयेन-नम्रभावेन, विरचितः-निर्मितः, अञ्जलिपुटो याभिस्तादृशीभिः, **पौरजनताभिः** पुरवासिजनसमूहैः, **प्रणम्यमानः** अभिवाद्यमानः, पुनः **उत्सृष्टलाजवृष्टिभिः** उत्सृष्टा-विमुक्ता, लाजवृष्टयः-भृष्टधान्यवृष्टयो याभिस्तादृशीभिः, **नगरवृद्धाभिः** नगरवास्तव्यवृद्धाभिः, **उद्घुष्यमाणमनोरथसिद्धिः** उद्घुष्यमाणा-असकृदुच्चार्यमाणा, मनोरथसिद्धिः-अभिलषितार्थ

वृद्धाभिः प्रीतिनिर्भरदृष्टिपातकुवलयितदिग्वलयाभिरवलोक्यमानो नागरिकाभिर्नगरान्निरगमम् [ न ]। क्रमेण च शरत्समयपरिचयप्रपञ्चितशोभाम्, आभोगिनीम्, उदारकलमकेदारपरिमलामोदितवनानिलाम्, उन्मदकुररकादम्बसारसारावमुखरितसरसीरनीराम्, कीरचञ्चुसंपुटच्युतार्धजग्धप्रियङ्गुमञ्जरीपिञ्जरजरद्रुमतलाम् [ प ], अक्षुद्रपादपालानितैरनवरतवेल्लत्कर्णपल्लवतरलितेन प्रतिवेलमुड्डीयमानेन निलीयमानेन च झङ्कारकारिणा मधुकरमण्डलेन पीयमानोद्दामदाननिर्झरैरप्रमत्तरक्षकपदातिवार्यमाणासंस्तुतजनप्रत्यासत्तिभिः पर्यन्तरचिततृणकुटीरकेण प्रतिक्षणमाधोरणगणेन क्रियमाणविविधोपचारैरनवलोकितपरस्परैः प्रसिद्धाभिधानैर्जगति प्रधानवारणैरधिष्ठितोद्देशाम् [ फ ], आगृहीतद्वीपान्तरगामिभूरिभाण्डैराभरणपर्याणकादिदूपोपस्करसमारचनसंतत-

---

सिद्धिर्यस्य तादृशः; पुनः **प्रीतिनिर्भरदृष्टिपातकुवलयितदिग्वलयाभिः** प्रीतिनिर्भरदृष्टिपातैः–प्रेमपूर्णकटाक्षपातैः, कुवलयितं–संजातानि कुवलयानि कमलानि यस्मिंस्तादृशम्, दिग्वलयं–दिङ्मण्डलं याभिस्तादृशीभिः, **नागरिकाभिः** नगरतरुणीभिः, **अवलोक्यमानः** दृश्यमानः; **नगरात्** रङ्गशालाख्यनगरात्, **निरगमम्** निर्गतवानहम् [ न ]।

च पुनः, **क्रमेण** क्रमिकगत्या, **नगरसीमाम्** उक्तनगरपरावधिम्, **अलङ्घयम्** अतिक्रान्तवानहम्; कीदृशीम्? **शरत्समयपरिचयप्रपञ्चितशोभाम्** शरत्समयेन–आश्विनकार्तिकमासात्मकशरत्कालेन, यः परिचयः–सङ्गमः, तेन प्रपञ्चिता–विस्तारिता, शोभा यस्यास्तादृशीम्; पुनः **आभोगिनीं** विस्तारवतीम्; पुनः **उदारकलमकेदारपरिमलामोदितवनानिलाम्** उदाराः–महान्तः, समृद्धा इति यावत्, कलमाः–शालयो येषु तादृशानाम्, केदाराणां ये परिमलाः–सौरभाणि तैः आमोदिताः–सुरभिताः, वनानिलाः–वनपवना यस्यां तादृशीम्; पुनः **उन्मदकुररकादम्बसारसारावमुखरितसरसीरनीराम्**, उन्मदानाम्–उन्मत्तानां कुरर-कादम्ब-सारसानाम्, कुरराः–उत्क्रोशपक्षिणः, कादम्बाः–कलहंसाः, सारसाः–स्वनामख्याताः पक्षिणः, तेषाम्, आरावैः–शब्दैः, मुखरितानि–प्रतिध्वनितानि, सरसीरनीराणि–कासारतटस्थितजलानि यस्यां तादृशीम्; पुनः **कीरचञ्चुसम्पुटच्युतार्धजग्धप्रियङ्गुमञ्जरीपिञ्जरजरद्रुमतलाम्** कीराणां–शुकानाम्, चञ्चुसम्पुटात्–सम्पुटितचञ्चुसकाशात्, च्युताभिः–स्खलिताभिः, अर्धजग्धाभिः–अर्धभुक्ताभिः, प्रियङ्गुमञ्जरीभिः–प्रियङ्गुलतामञ्जरीभिः, पिञ्जराणि–पीतानि, जरतां जीर्णानाम्, द्रुमाणां–वृक्षाणाम्, तलानि–अधःस्थलानि यस्यां तादृशीम् [ प ]; पुनः **प्रधानवारणैः** प्रधानहस्तिभिः, **अधिष्ठितोद्देशाम्** अधिष्ठितः–आक्रान्तः, उद्देशः–उच्चप्रदेशो यस्यां तादृशीम्; कीदृशैः? **अक्षुद्रपादपालानितैः** विशालवृक्षरूपस्तम्भबद्धैः, पुनः **मधुकरमण्डलेन** भ्रमरपुञ्जेन, **पीयमानोद्दामदाननिर्झरैः** पीयमानः–पानकर्मीक्रियमाणः, उद्दामा–उद्धतः, अप्रतिहत इत्यर्थः; दाननिर्झरः–मदजलप्रवाहो येषां तादृशैः, कीदृशेन? **अनवरतवेल्लत्कर्णपल्लवतरलितेन** अनवरतं–निरन्तरम्, वेल्लद्भ्याम्–चञ्चलद्भ्याम्, कर्णपल्लवाभ्यां–कर्णरूपपल्लवाभ्याम्, तरलितेन–चञ्चलितेन, उत्क्षिप्तेनेति यावत्, अत एव **प्रतिवेलम्** प्रतिकालम्, **उड्डीयमानेन** उपरि भ्रमता, च पुनः, **निलीयमानेन** मदजलनिर्झरे तिरोभवता; पुनः **झङ्कारकारिणा** कोलाहलकारिणा, पुनः **अप्रमत्तरक्षकपदातिवार्यमाणासंस्तुतजनप्रत्यासत्तिभिः** अप्रमत्तैः–अवहितैः, रक्षकैश्च, पदातिभिः–पादगामिजनैः, वार्यमाणा–अवरुध्यमाना, असंस्तुतानां–अपरिचितानाम्, जनानां प्रत्यासत्तिः–सान्निध्यं येषां तादृशैः, **पर्यन्तरचिततृणकुटीरकेण** पर्यन्ते–निकटे, रचितः–निर्मितः, तृणकुटीरः–तृणमयह्रस्वकुटी येन तादृशेन, **आधोरणगणेन** हस्तिपकसमूहेन, **प्रतिक्षणं** प्रतिपलम्, **क्रियमाणविविधोपचारैः** क्रियमाणाः–विधीयमानाः, विविधाः–अनेकप्रकाराः, उपचाराः–सेवा येषां तादृशैः, पुनः **अनवलोकितपरस्परैः** कलहभिया परस्परदृष्टिपथमगमितैः, पुनः **जगति** भुवने, **प्रसिद्धाभिधानैः** विश्रुतनामधेयैः [ फ ]; पुनः कीदृशीम्? **आढ्यनैगमानाम्** धनाढ्यवणिजाम्, **सार्थैः** समूहैः, **स्थानस्थानेषु** प्रतिस्थानम् **कृतावस्थानाम्** कृतम्, अवस्थानम्–अवस्थितिर्यस्यां तादृशीम्, कीदृशैः? **आगृहीतद्वीपान्तरगामिभूरिभाण्डैः** आ–समन्तात्, गृहीतानि, द्वीपान्तरगामीनि–अन्यद्वीपगन्तृणि, भूरिभाण्डानि–बहुभाण्डानि यैस्तादृशैः, पुनः **आभरणपर्याणकादिदूपोपस्करसमारचनसन्ततव्यापृतभृतकैः** आभरणम्–अलङ्कार-

व्यापृतभृतकैरभिनवस्यूतताम्रपटकुटीरकोणावस्थापितस्थूलद्रविणकण्ठालैः प्राङ्गणोपरचितगोणीगणाट्टालकसूचितैः प्रस्थाननिर्गतानामाढ्यनैगमानामनेकतुरगाश्वतरसंकुलैः सार्थैः स्थानस्थानेषु कृतावस्थानाम् [ चं ], अच्छशीतलस्वादुसलिलाभिः सुधाधवलवरण्डिकावलयाकुण्डलितकूलाभिर्द्वारभित्तिगर्भप्रतिष्ठितानेकदेवताप्रतिमाभिस्तृष्णातुरावतरदनन्तपथिकपातभयादिव पुरःप्रसारितोभयाग्रहस्तेन भेककुटुम्बिनीकदम्बकेन कृतकलकलेनावलम्बितसोपानमालामूलदेशाभिरतिसुश्लिष्टलोहेष्टकचिताभिर्मार्गवापीभिः स्थपुटितमहावटद्रुमोपान्तस्थलाम् [ भ ], अन्तराऽन्तरा च प्रावृषेण्यसलिलपूरक्षालनापनीतसकलपङ्कमलाभिरासन्नग्रामवासिना वणिग्जनेन तत इतः प्रकटितौदनाज्यदधिभाण्डखण्डमोदकप्रायपण्यप्रसारकाभिस्तटस्थपथिकबालिकाविलोक्यमानभुक्तोज्झिताम्नलवकवलना-

---

णम्, पर्याणक-पृष्ठास्तरणम्, तदादिः-तत्प्रभृतिः, यः, वृषाणां-बलीवर्दानाम्, उपस्करः-वेषः, तत्समारचने-तद्विन्यासे, सन्ततम्-अनवरतम्, व्यापृताः-संलग्नाः, भृतकाः-किङ्करा येषां तादृशैः, पुनः **अभिनवस्यूतताम्रपटकुटीरकोणावस्थापितस्थूलद्रविणकण्ठालैः** अभिनवस्यूता-अचिरप्रोताः, ये ताम्रपटाः-रक्तवस्त्राणि, तत्कुटीरस्य-तन्निर्मितह्रस्वकुट्याः कोणे, अवस्थापिताः-धृताः, स्थूलाः-बृहदाकाराः, द्रविणकण्ठालाः-धनभाण्डविशेषा यैस्तादृशैः, पुनः **प्राङ्गणोपरचितगोणीगणाट्टालकसूचितैः** प्राङ्गणे, उपरचितैः-सन्निवेशितैः, गोणीनाम्-आवपनानाम्, गणैः-समूहरूपैः, अट्टालकैः-प्रासादोपरितनगृहैः, सूचितैः-उपलक्षितैः, पुनः **अनेकतुरगाश्वतरसङ्कुलैः** अनेकैः-बहुभिः, तुरगैः-अश्वैः, अश्वतरैः-खचरैश्च सङ्कुलैः-व्याप्तैः [ च ]; पुनः **मार्गवापीभिः** मार्गदीर्घिकाभिः, **स्थपुटितमहावटद्रुमोपान्तस्थलाम्** स्थपुटितम्-उन्नतानतीकृतम्, महावटद्रुमाणां-विशालवटवृक्षाणाम्, उपान्तस्थलं-निकटस्थानं यस्यास्तादृशीम्, कीदृशीभिः? **अच्छशीतलस्वादुसलिलाभिः** अच्छं-निर्मलम्, शीतलं, स्वादु-मधुरं च, सलिलं-जलं यासां तादृशीभिः, पुनः **सुधाधवलवरण्डिकावलयाकुण्डलितकूलाभिः** सुधाधवलानां-चूर्णोपलेपशुभ्राणाम्, वरण्डिकानाम्-लघुप्राकारभूतभित्तिविशेषाणाम्, वलयेन-मण्डलेन, आकुण्डलितानि-आवेष्टितानि, कूलानि-तटा यासां तादृशीभिः; पुनः **द्वारभित्तिगर्भप्रतिष्ठितानेकदेवताप्रतिमाभिः** द्वारभित्तिगर्भे-द्वारस्थकुड्यमध्ये, प्रतिष्ठिता-स्थापिता, अनेकासां, देवतानाम् प्रतिमा-प्रतिकृतिर्यासां तादृशीभिः, पुनः **भेककुटुम्बिनीकदम्बेन** भेकानां-मण्डूकानाम्, याः कुटुम्बिन्यः-स्त्रियः, तासां कदम्बकेन-समूहेन, **अवलम्बितसोपानमालामूलदेशाभिः** अवलम्बितः-आश्रितः, सोपानमालानाम्-अधिरोहणीपङ्क्तीनाम्, मूलदेशः-मूलस्थानं यासां तादृशीभिः, कस्मादिव? **तृष्णातुरावतरदनन्तपथिकपातभयादिव** तृष्णातुराणां-पिपासापीडितानाम्, अवतरताम्-अवरोहताम्, अधस्तादागच्छतामित्यर्थः, अनन्तानां-बहूनाम्, पथिकानां-मार्गगामिनाम्, यः पातः-निपतनम्, तद्भयादिवेति हेतूत्प्रेक्षा, कीदृशेन? **पुरःप्रसारितोभयाग्रहस्तेन** पुरः-अग्रे, प्रसारितौ-तत्पातनिवारणाय विस्तारितौ, उभयाग्रहस्तौ उभयहस्ताग्रभागौ येन तादृशेन, पुनः **कृतकलकलेन** तदातङ्कवशाद् विहितकोलाहलेन, पुनः **अतिसुश्लिष्टलोहेष्टकचिताभिः** अतिसुश्लिष्टम्-अतिशयेन परस्परसम्पृक्तम्, लोहेष्टकानां-लोहमयेष्टकानाम्, चितं-समूहो यासु तादृशीभिः [ भ ]; च पुनः, **अन्तरा अन्तरा** मध्ये मध्ये, **वनस्रोतोवहाभिः** वननदीभिः, **सीमन्तिताम्** सञ्जातकेशवेशाम्, **प्रावृषेण्यसलिलपूरक्षालनापनीतपङ्कमलाभिः** प्रावृषेण्येन, सलिलपूरेण-जलप्रवाहेण, यत् क्षालनं-मार्जनम्, तेन, अपनीताः-दूरीकृताः, पङ्करूपाः-कर्दमरूपाः, मला यासां तादृशीभिः; पुनः **आसन्नग्रामवासिना** निकटग्रामवास्तव्येन, **वणिग्जनेन** वणिग्लोकेन, **तत इतः** अत्र तत्र, **प्रकटितौदनाज्यदधिभाण्डखण्डमोदकप्रायपण्यप्रसारकाभिः** प्रकटित-प्रकाशित, ओदनः-भक्तम्, आज्यं-घृतम्, दधि-दुग्धघनीभावावस्थाविशेषः, तेषां भाण्डखण्डानां-भाजनप्रभेदानाम्, यद्वा भाण्डानां-भाजनानाम्, खण्डं च-इक्षुविकारः, तस्य, यद्वा खण्डमोदकप्रायाणां-खण्डनिर्मितमिष्टान्नप्रचुराणाम्, पण्यानां-विक्रेतव्यवस्तूनां च, प्रसारो यासु तादृशीभिः; पुनः **तटस्थपथिकबालिकाविलोक्यमानभुक्तोज्झिताम्नलवकवलनाकुलशकुनकुलाभिः** तटस्थाभिः-तीरस्थिताभिः, पथिकबालिकाभिः-पथिककन्याभिः, अवलोक्यमानं-दृश्यमानम्, भुक्तोज्झितानां-भोजनावशिष्टानाम्, अन्नलवानाम्-अन्नलेशानाम्, कवलने-

कुलशकुलकुलाभिर्दूरनिर्गतजलार्द्रमार्गपिशुनितपशुपरम्परोत्ताराभिरनवरतलोकविश्रामक्षामितोपान्तवेतसवनाभि-
र्वनस्रोतोवहाभिः सीमन्तिताम् [म], ईषदुपजातशोषकरीषसुखसंचारविशिखैः सपर्णवल्लतानिवेशजटालवेश्म-
पटलैरजिरमण्डपच्छायानिविष्टगोरसपरिपुष्टमहाकायपुष्टकौलेयकैः सकलकलोच्छलदाज्यपरिमलव्यञ्जित-
तप्ताज्यतक्रबिन्दुक्षेपैरुत्कर्णतर्णकाकर्णितमथ्यमानमथितमन्थनीमन्थरनिर्घोषैः सतोषघोषाधिपसमाहूयमानपर्यट-
त्पायसार्थिपथिकपेटकैः क्रमागतैकैकठरद्विजातिवचननिर्विचारप्रवर्तितशयनासनस्नानदानादिसर्वक्रियैः प्रात-
रेव प्रचारनिर्गताभिस्तत्कालमधिगताधिकबलोपचयबृंहितेन स्वाभाविकभव्यतागुणेन द्विगुणाकृष्टलोकदृष्टिभिः
पीनपरिमण्डलापीनभारविकटमन्थरगमनाभिरनणुमणिघण्टिकाघोषरमणीयमितस्ततो विचरन्तीभिः सततानु-

---

भक्षणे, आकुलं-व्यग्रम्, शकुलकुलं-मत्स्यविशेषगणो यासां तादृशीभिः, पुनः **दूरनिर्गतजलार्द्रमार्गपिशुनितपशुपरम्परोत्ताराभिः** दूरनिर्गतेन-दूरनिष्क्रान्तेन, जलार्द्रमार्गेण-जलाप्लुतवर्त्मना, पिशुनितः-सूचितः, पशुपरम्पराणां-पशुसमूहानाम्, उत्तारः-उपरिनिर्गमनं याभ्यस्तादृशीभिः, पुनः **अनवरतलोकविश्रामक्षमितोपान्तवेतसवनाभिः** अनवरतं-निरन्तरम्, लोकानां-जनानाम्, विश्रामे-खेदापनयने, क्षमितानि-क्षमतामापादितानि, **क्षामिते**ति पाठे तेषां विश्रामेण क्षामितानि-क्षीणतां गमितानीत्यर्थः, उपान्तानि-निकटानि, वेतसवनानि-वञ्जुलवनानि याभिस्तादृशीभिः [म]; पुनः **गोकुलैः** गोष्ठैः, गवां स्थानैरित्यर्थः, **अधिष्ठितकक्षोपकण्ठाम्** अधिष्ठितः-व्याप्तः, कक्षस्य-वनस्य, उपकण्ठः-समीपप्रदेशो यस्याः तादृशीम्, यद्वा अधिष्ठितस्य कक्षस्य-वनस्य, उपकण्ठाम्-समीपाम्, कीदृशैः ? **ईषदुपजातशोषकरीषसुखसञ्चारविशिखैः** ईषत्-किञ्चित्, उपजातः-उत्पन्नः, शोषः-शुष्कता येषां तादृशैः, करीषैः-गोमयैः, सुखसञ्चारा-सुकरगमना, विशिखा-रथ्या, येषां तादृशैः, पुनः **सपर्णतरुलतानिवेशजटालवेश्मपटलैः** सपर्णानां-पत्रपूर्णानाम्, तरुलतानां-तरूणां-वृक्षाणाम्, तदाश्रितलतानां च, निवेशेन-सगावेशेन, जटालं-सम्बद्धम्, वेश्मपटलं-गृहसमूहो येषां तादृशैः, पुनः **अजिरमण्डपच्छायानिविष्टगोरसपरिपुष्टमहाकायपुष्टकौलेयकैः** अजिरमण्डपस्य-प्राङ्गणवर्तिगृहविशेषस्य, छायायां निविष्टः-अवस्थितः, तथा गोरसेन-पयोदधिघृतादिना, परिपुष्टः-अतिपुष्टः, महाकायः-विशालशरीरं यस्य तादृशः, तथा पुष्टः-प्रवृद्धः, एवंविधः कौलेयकः-कुलागतः कुक्कुरो येषां तादृशैः, पुनः **सकलकलोच्छलदाज्यपरिमलव्यञ्जिततप्ताज्यतक्रबिन्दुक्षेपैः** सकलकलम्-कलकलेन-शब्दविशेषेण सहितं यथा स्यात् तथा, उच्छलन्तः-उद्गच्छन्तः, आज्यपरिमलेन-प्रचुरसौरभेण, व्यञ्जिताः-सूचिताः, तप्तघृतसुगन्धख्यापिता इत्यर्थः, एवंविधाश्च ये, तक्रस्य, आज्यस्य-घृतस्य, तक्रबिन्दवः, तप्यमाननवनीतात्स्थागत-घृतस्यतक्रस्य बिन्दव इत्यर्थः, तेषां क्षेपाः-विक्षेपः-दूरीभवनं येषु तादृशैः, पुनः **उत्कर्णतर्णकाकर्णितमथ्यमानमथितमन्थनीमन्थरनिर्घोषैः** उत्-ऊर्ध्वौ, कर्णौ येषां तादृशैस्तर्णकैः-वत्सैः, आकर्णितः-श्रुतः, मथ्यमानस्य-आलोड्यमानस्य, मथितस्य-तक्रस्य, या मन्थनी-मथनदण्डः, तस्या मन्थरः-मन्दः, निर्घोषो येषां तादृशैः, पुनः **सतोषघोषाधिपसमाहूयमानपर्यटत्पायसार्थिपथिकपेटकैः** सतोषं-परितोषेण सहितं यथा स्यात् तथा, घोषाधिपेन-आभीरग्रामाधिपेन, समाहूयमानं-सम्यगाहूयमानम्, पर्यटतां-परिभ्रमताम्, पायसार्थिनां-क्षीरान्नाभिलाषिणाम्, पथिकानां-मार्गगामिनाम्, पेटकं-समूहो येषु तादृशैः, पुनः **क्रमागतैकैकठरद्विजातिवचननिर्विचारप्रवर्तितशयनासनस्नानदानादिसर्वक्रियैः** क्रमेण आगतस्य एकैकस्य कठरस्य-मूर्खस्य, द्विजातेः-द्विजस्य, वचनेन-वाक्येन, निर्विचारं-सविचारं विनैव, प्रवर्तिता-गोपैः प्रारब्धा, शयनम्, आसनम्, स्नानम्, दानम्, तदादिः-तत्प्रभृतिः, सर्वा-सकला, क्रिया येषु तादृशैः, पुनः **गोभिः** धेनुभिः, **अशून्यपर्यन्तैः** व्याप्तनिकटैः, कीदृशीभिः ? **प्रातरेव** प्रातःकाल एव, **प्रचारनिर्गताभिः** प्रचाराय-विचरणाय, यद्वा तृणभक्षणाय, गृहान्निष्क्रान्ताभिः, पुनः **तत्कालं** प्रचारकालमेव, **अधिगताधिकबलोपचयबृंहितेन** अधिगतः-प्राप्तः, योऽधिकबलोपचयः-अधिकबलवृद्धिः, तेन बृंहितेन-वर्धितेन, **स्वाभाविकभव्यतागुणेन** स्वाभाविकसौन्दर्यगुणेन, **द्विगुणाकृष्टलोकदृष्टिभिः** द्विगुणं यथा स्यात् तथा, आकृष्टाः-कृताकर्षणाः, लोकाना-जनानाम्, दृष्टयो याभिस्तादृशीभिः, पुनः **पीनपरिमण्डलापीनभारविकटमन्थरगमनाभिः** पीनानि-स्थूलानि, परिमण्डलानि-वर्तुलाकाराणि च, यानि आपीनानि-ऊधांसि, स्तना इत्यर्थः, तेषां भारेण-गुरुतया, विकटं-प्रकटम्, मन्थरं-मन्दम्, गमनं यासां तादृशीभिः, पुनः **अनणुमणिघण्टिकाघोषरमणीयम्** अनणुमणिघण्टिकानाम्-स्थूलमणिमयग्रीवास्थकिङ्किणीनाम्, घोषेण-ध्वनिना, रमणीयं-मनोहरं यथा स्यात् तथा, **इतस्ततः** अत्र तत्र, **विचरन्तीभिः** विहरन्तीभिः, पुनः **सततानुचरचाटुकारसैरसौरमेयीभिः**

चत्चाटुकारस्वैरसौरभेयाभिरचिरजातप्रसवाभिरद्यश्वीनाभिश्च गोभिश्शून्यपर्यन्तैस्तुहिनपातशीनहैयंगवीनवर्णतनुलतालावण्याभिः क्षीरधवलचलत्कटाक्षच्छटाप्रतिक्षणक्षालितदिङ्मुखाभिर्नवनीतपिण्डपाण्डुवल्गत्कठिनपरिमण्डलस्तनकलशयुगलाभिर्गोरसश्रीभिरिव शरीरिणीभिः सविभ्रमैरङ्गवलनैः स्नेहनिर्भराणि दधीनि वल्लभहृदयानि च निर्दयमामथ्नतीभिर्गोपललनाभिः सर्वतः समाकुलैर्गोकुलैरधिष्ठितकक्षोपकण्ठा नगसीमामलङ्घयम् [य]।

अथाग्रेसराश्ववारदर्शनक्षुभितैः 'कटकमागच्छति' इति जनरवादुपलभ्योपलभ्य सर्वतः प्रधावितैः परित्यक्तनिजनिजव्यापारैरवकरकूटेष्वधिरूढैस्तडागपालीषु पुञ्जितैर्देवकुलवरण्डकेषु कृतावस्थानैः पादपस्कन्धेषु बद्धासनैरूर्ध्वैश्चोपविष्टैश्च लम्बितोभयभुजैश्च जघनपार्श्वविन्यस्तहस्तयुगलैश्च शीर्णपट्टिकागाढग्रथितासिधेनुकैश्च धौतशाटककृतशिरोवेष्टनैश्च वेणुयष्टिषु कृतावष्टम्भैश्च स्कन्धाधिरोपितदयितडिम्भैश्च सर्वत्र सकुतूहलैरपि सविशेषं

---

टिप्पनकम्—विशिखा-रथ्या । आपीनम्-ऊधः । अद्यश्वीना अद्य श्वो वा प्रसूता । स्नेहनिर्भराणि घृतभरितानि प्रेमपूरितानि च दधीनि वल्लभहृदयानि च । निर्दयमामथ्नतीभिः निष्करुणम्, मथ्नतीभिः-मदयन्तीभिः पीडयन्तीभिश्च [य]।

---

सततम्-अनवरतम्, अनुचरस्य-भृत्यस्य, यः, चाटुकारः-प्रियवाक्यप्रयोगः, तत्र स्वैरा-स्वतन्त्रा, सौरभेया-वृषभा यासां तादृशीभिः, पुनः अचिरजातप्रसवाभिः अभिनवप्रसूताभिः, च पुनः, अद्यश्वीनाभिः अद्य श्वो वा प्रसविष्यमाणाभिः, अत्यासन्नप्रसवाभिरित्यर्थः । पुनः कीदृशैः ? गोपाललनाभिः गोपवधूभिः, सर्वतः सर्वभागेषु, समाकुलैः व्याप्तैः, कीदृशीभिः ? तुहिनपातशीनहैयङ्गवीनवर्णतनुलतालावण्याभिः तुहिनपातेन-हिमपातेन, शीनम्-घनीभूतम्, यद् हैयङ्गवीनम्-नवनीतम्, तस्येव वर्णः रूपं यस्य तादृशम्, तनुलतायाः-शरीरलतायाः, लावण्यम्-कान्तिर्यासां तादृशीभिः, पुनः क्षीरधवलचलत्कटाक्षच्छटाप्रतिक्षणक्षालितदिङ्मुखाभिः क्षीरवत्-दुग्धवत्, धवलानां शुभ्राणाम्, चलतां च, कटाक्षाणाम्-अपाङ्गानाम्, छटाभिः-धाराभिः, प्रतिक्षणं प्रतिपलम्, क्षालितानि-धौतानि, दिङ्मुखानि-दिगग्रभागा याभिस्तादृशीभिः, पुनः नवनीतपिण्डपाण्डुवल्गत्कठिनपरिमण्डलस्तनकलशयुगलाभिः नवनीतपिण्डवत्, पाण्डु-किञ्चित्पीतश्वेतवर्णम्, वल्गत्-चलत्, कठिनं कठोरम्, परिमण्डलं-वर्तुलं च, स्तनकलशयुगलं कलशाकारस्तनद्वयं यासां तादृशीभिः, पुनः शरीरिणीभिः शरीरवतीभिः, गोरसश्रीभिरिव गवाम्, रसः-पयोदध्यादि, तदीयशोभाभिरिवेत्युत्प्रेक्षा, पुनः सविभ्रमैः विलाससहितैः, अङ्गवलनैः अङ्गसञ्चलनैः, स्नेहनिर्भराणि स्नेहेन दध्यादिगुणविशेषेण, पक्षे प्रीत्या, निर्भराणि पूर्णानि, दधीनि, च पुनः, वल्लभहृदयानि पतिहृदयानि, वल्लवहृदयानि इति पाठे तु गोपहृदयानीत्यर्थः, निर्दयम् अस्य तम्, आमथ्नतीभिः आलोडयन्तीभिः [य]।

अथ अनन्तरम्, भगवन्तम् ऐश्वर्यशालिनम्, अम्भोनिधिं समुद्रम्, अपश्यम् दृष्टवानहम् इत्यग्रेणान्वेति। कीदृशः ? ग्रामेयकैः ग्रामवासिभिः, अवलोक्यमानबलसन्ततिः दृश्यमानसैनिकसङ्घः, कीदृशैः ? अग्रेसराश्ववारदर्शनक्षुभितैः अग्रेसराणाम्-अग्रगामिनाम्, अश्ववाराणाम्-अश्ववाहनानाम्, दर्शनेन, क्षुभितैः-सञ्चलितैः, कटकः सैन्यम्, आगच्छतीति, जनरवात् लोकोक्तशब्दात्, उपलभ्योपलभ्य ज्ञात्वा ज्ञात्वा, सर्वतः सर्वदिग्भ्यः, प्रधावितैः कृतसत्वरगमनैः, पुनः परित्यक्तनिजनिजव्यापारैः त्यक्तस्वस्वकार्यैः, पुनः अवकरकूटेषु अवकीर्यते मार्जन्या विक्षिप्यते इत्यवकरः, धूल्यादिराशिः, तत्कूटेषु-तदुपरिभागेषु, अधिरूढैः आरूढैः, पुनः तडागपालिषु तडागकोणेषु, तडागसेतुषु वा, पुञ्जितैः सङ्घीभूतैः, पुनः देवकुलवरण्डकेषु देवकुलस्य देवमन्दिरस्य, वरण्डकेषु प्राकारस्थानीयभित्तिषु, कृतावस्थानैः अवस्थितैः, पुनः पादपस्कन्धेषु वृक्षस्कन्धेषु बद्धासनैः कल्पितासनैः, च पुनः, ऊर्ध्वैः उत्थितैः, च पुनः, उपविष्टैः कृतोपवेशनैः, च पुनः, लम्बितोभयभुजैः नमितोभयबाहुभिः, च पुनः, जघनपार्श्वविन्यस्तहस्तयुगलैः कटिपुरोभागनिवेशितहस्तद्वयैः, च पुनः, शीर्णपट्टिकागाढग्रथितासिधेनुकैः शीर्णपट्टिकया-शीर्णवस्त्रपटखण्डेन, गाढं-दृढं यथा स्यात् तथा, ग्रथिता-बद्धा, असिधेनुः-छुरिका यैस्तादृशैः, च पुनः, धौतशाटककृतशिरोवेष्टनैः धौतेन-क्षालितेन, शाटकेन-वस्त्रेण, कृतं शिरोवेष्टनं-मस्तकावरणं यैस्तादृशैः, च पुनः, वेणुयष्टिषु वंशदण्डेषु, कृतावष्टम्भैः कृता

करिषु कपिषु क्रमेलकेषु च प्रहितदृष्टिभिः प्रमाणरूपबलोपचयशालिना प्रत्येकमनडुहां मूल्यमानमुद्घट्टयद्भिः [र] 'कथय, क एष राजपुत्रः, केयं राज्ञी, किमभिधानोऽयं द्विरदः' इत्यनवरतप्रयुक्तया प्रश्नपरम्परया कदर्थितसकृद्दृष्टकटकग्रामलाकुटिकैः करेणुकाधिरूढं क्षुद्रगणिकागणमप्यन्तःपुरमिति धृतोष्णवारणं चारणमपि महाराजपुत्र इति कनककनिष्कावृतकन्धरं वणिजमपि राजप्रसादचिन्तक इति चिन्तयद्भिः पृष्टैरपि प्रतिवचनमप्रयच्छद्भिराहूतैरप्यन्यतो गच्छद्भिः पश्यतोऽप्यभिमुखमङ्गुलीभिर्दर्शयद्भिः शृण्वतामपि चेष्टितमशङ्कितैरुच्चस्वनेन सूचयद्भिर्विषमावतारसंमर्देषु दुर्दान्तकरभवाजिवृषभोत्प्लवनेषु व्यालदन्तिवेगोपसर्पणेषु च स्खलतः पततः पलायमानानवलोक्यावलोक्य समकालकृतकलकलैः सतालशब्दमुच्चैस्तरां हसद्भिः [ल], कैश्चिन्मार्गनिहितनिश्चलदृष्टिभिः पश्चादेष्यतां दिगन्तविख्यातयशसामुर्वीभृतां कुमाराणां राजपत्नीनां प्रधानगणिकानां पट्टहस्तिनां च दर्शनाशया क्षुत्पिपासापरिगतैरूर्ध्वशोषं शुष्यद्भिः, कैश्चित् पृष्ठसङ्गिस्वैरिपामरीपीवरस्तनस्पर्शलुब्धैः पीडितैरपि

---

वलम्बने, च पुनः, स्कन्धाधिरोपितदयितडिम्भैः स्कन्धे, आरोपित-धृत, दयित-प्रिय, डिम्भ-शिशुर्यैस्तादृशैः, पुनः सर्वत्र सर्वविषयेषु, सकुतूहलैरपि कौतुकान्वितैरपि, करिषु हस्तिषु, कपिषु मर्कटेषु, च पुनः, क्रमेलकेषु उष्ट्रेषु, सविशेष विशेषेण, प्रहितदृष्टिभिः प्रेरितलोचनैः, पुनः प्रमाणरूपबलोपचयशालिनाम् प्रमाणं-दैर्घ्यम्, रूप-सुन्दराकृतिः, बलोपचय-बलवृद्धिः, तैः, शोभावताम्, अनडुहां वृषभाणाम्, प्रत्येकम् एकैकस्य, मूल्यमानम् मूल्यप्रमाणम्, उद्घट्टयद्भिः कथयद्भिः [र] कथय ब्रूहि, एषः अयम्, राजपुत्रः नृपकुमारः, कः किंनामा?, इयं पुरोवर्तिनी, राज्ञी राजपत्नी, का किंनाम्नी?, अयं पुरोवर्ती, द्विरदः हस्ती, किमभिधानः किंनामा?, इति इत्थम्, अनवरतप्रयुक्तया निरन्तरकृतया, प्रश्नपरम्परया प्रश्नसमूहेन, कदर्थितसकृद्दृष्टकटकग्रामलाकुटिकैः कदर्थिता-क्लेशिता, सकृत्-एकवारम्, दृष्ट-दृष्टिगोचरीकृतम्, कटक-सेना यैस्तादृशाः, ग्रामलाकुटिका-ग्रामवासिदण्डिजना यैस्तादृशैः, करेणुकाधिरूढं हस्तिनीमारूढम्, क्षुद्रगणिकागणमपि साधारणवेश्यावृन्दमपि, अन्तःपुरम् अन्तःपुराङ्गनागणम्, इति चिन्तयद्भिः मन्यमानैः, पुनः धृतोष्णवारणं गृहीतच्छत्रम्, चारणमपि मल्लमपि, महाराजपुत्र इति महाराजकुमार इति, चिन्तयद्भिः, पुनः कनककनिष्कावृतकन्धरं कनकस्य-सुवर्णस्य, निष्केण-अष्टोत्तरशतेन, आवृता-व्याप्ता, कन्धरा-ग्रीवा यस्य तादृशम्, वणिजमपि आपणिकमपि, राजप्रसादचिन्तकः राजप्रीतिप्रार्थी, इति चिन्तयद्भिः, पुनः पृष्टैरपि कृतप्रश्नैरपि, प्रतिवचनम् उत्तरम्, अप्रयच्छद्भिः अप्रददद्भिः, पुनः आहूतैरपि कृताह्वानैरपि, अन्यतः अन्यत्र, गच्छद्भिः, पुनः अभिमुखं सम्मुखम्, पश्यतोऽपि अवलोकयमानानपि, लोकान्, अङ्गुलीभिः, दर्शयद्भिः सङ्केतयद्भिः, पुनः चेष्टितं शरीरचेष्टाविशेषं शृण्वतामपि श्रुतिगोचरीभूतध्वनिना जानतामपि, अशङ्कितैः तच्छ्रवणशङ्कयापि रहितैः, उच्चस्वनेन उच्चशब्देन, सूचयद्भिः बोधयद्भिः, पुनः विषमावतारसंमर्देषु निम्नोन्नतस्थलावतरणार्थजनसम्मेलनेषु, स्खलतः विचलतः, पुनः दुर्दान्तकरभवाजिवृषभोत्प्लवनेषु दुर्दान्त-उद्धतो यः करभ-हस्तिशिशुः, वाजी-अश्वः, वृषभ-वृषः, तेषाम्, उत्प्लवनेषु-उत्कूर्दनेषु, पततः, च पुनः, व्यालदन्तिवेगोपसर्पणेषु व्यालदन्तिनां-दुष्टहस्तिनाम्, "व्यालो दुष्टगजे सर्पे शठे श्वापदसिंहयोः" इति हैमः, वेगेन त्वरया, यद् उपसर्पणं-समीपागमनं तेषु, पलायमानान् भयादिना स्थानत्यागेनान्यस्थानं गच्छतो जनान्, अवलोक्य अवलोक्य दृष्ट्वा दृष्ट्वा, समकालकृतकलकलैः समकाल-एककालम्, कृत कलकल-कोलाहलो यैस्तादृशैः, पुनः सतालशब्दं सकलहस्तध्वनिपूर्वकम्, उच्चैस्तराम् अत्युच्चैः, हसद्भिः हासं कुर्वद्भिः [ल], कैश्चित् कैरपि जनैः, मार्गनिश्चलनिहितदृष्टिभिः मार्गे-पथि, निश्चल-निःस्पन्दं यथा स्यात् तथा, निहिते-निवेशिते, दृष्टी लोचने यैस्तादृशैः, पुनः पश्चात् पृष्ठदेशात्, एष्यताम् आगमिष्यताम्, दिगन्तविख्यातयशसाम् आदिगन्तप्रसिद्धयशस्कानाम्, उर्वीभृतां नृपाणाम्, कुमाराणां राजपुत्राणाम्, राजपत्नीनां राज्ञीनाम्, प्रधानगणिकानां मुख्यवेश्यानाम्, च पुनः, पट्टहस्तिनां प्रधानगजानाम्, दर्शनाशया दर्शनाभिलाषेण, क्षुत्पिपासापरिगतैः बुभुक्षापिपासाव्याप्तैः, अत एव ऊर्ध्वशोषं शुष्यद्भिः ऊर्ध्वं कण्ठनाल्यादिप्रदेशावच्छेदेन शोषणमनुभवद्भिः, पुनः कैश्चित् कैरपि, पृष्ठसङ्गिस्वैरिपामरीपीवरस्तनस्पर्शलुब्धैः

समन्ततः प्रेक्षकजनेन स्थानमत्यजद्भिः, कैश्चिन्मनोरथशतासादितग्रामपतिसुतासंनिधानैर्लब्धमहानिधानैरिव खलधानतः साधनिकलोकेन निखिलमपि नीयमानं बुसं बुसाय मत्वाऽवधीरयद्भिः [व], कैश्चिद् गृह्यमाणयवसरक्षणव्यग्रैरर्थलोभादभिलषितलञ्चानां लञ्चया लाकुटिकानां क्लेशमनुभवद्भिः [श], कैश्चिदाक्रुष्टहस्तिपकचोदितद्विरदपुरस्कृतैः प्रपलाय्य दूरीकृतात्महननैरात्मनोऽविडम्बनाय ब्राह्मण्यमाविष्कुर्वद्भिः, कैश्चिदनिबद्धलोकलुण्ट्यमानशाकशाकटैरघटितप्रयोजनामवनिपाज्ञां सावज्ञमुपहसद्भिः [ष], कैश्चिदानन्दगद्गदिकागृहीतकण्ठैर्निगृहीतलुण्टाकव्रातवार्तया लुण्टितेक्षुवाटदुःखदुर्बलं कृषीवललोकमपशोकं कुर्वद्भिः, कैश्चिज्जवप्राप्तपरिपालकव्यूहरक्षितसुजातव्रैहेयैरनेकधा नरेन्द्रमभिनन्दयद्भिः [स], केश्चिदलब्धावकाशठक्कुरहठनिराकृतैराश्रयाय प्रतिगृहं गृहीतभाण्डैराहिण्डयद्भिः, कैश्चित् कलहनिष्कासितशालीनकुलपुत्रकवर्गैः सगर्वममतो ग्रामपोटानां

---

टिप्पनकम्—लञ्चया नीवीभज(ज)नेन [श]। शाकशाकटं-शाकक्षेत्रम् [ष]। [व्रैहेयम्-] व्रीहिक्षेत्रम् [स]।

---

पृष्ठसङ्गिनीनां-पृष्ठसंसर्गिणीनां, स्वैरिणीनां-स्वेच्छाचारिणीनाम्, पामरीणां-नीचाङ्गनानाम्, पीवरस्तनयोः-स्थूलस्तनयोः, स्पर्शे लुब्धैः-सजातलोभैः, अत एव प्रेक्षकजनेन दर्शकजनेन, समन्ततः सर्वभागेषु, पीडितैरपि मर्दितैरपि, स्थानं स्वाधिष्ठितप्रदेशम्, अत्यजद्भिः अमुञ्चद्भिः; पुनः कैश्चित् कैरपि जनैः, मनोरथशतासादितग्रामपतिसुतासन्निधानैः मनोरथशतेन-अभिलाषशतेन, आसादितं-प्राप्तं, ग्रामपतिसुतायाः सन्निधानं-सान्निध्यं यैस्तादृशैः, अत एव लब्धमहानिधानैरिव लब्धं-प्राप्तं महानिधानं-महानिधिर्यैस्तादृशैरिव, खलधानतः धान्यविमर्दनस्थानतः, "खलधानं पुनः खलम्" इति हैमः, साधनिकलोकेन सैनिकलोकेन, नीयमानं ह्रियमाणं, निखिलमपि सर्वमपि, बुसं यवादिधान्यम्, बुसाय मत्वा तृणमिति मत्वा, अवधीरयद्भिः अनाद्रियमाणैः [व]; पुनः कैश्चित् कैरपि, गृह्यमाणयवसरक्षणव्यग्रैः गृह्यमाणस्य-बलादादीयमानस्य, यवसस्य-घासस्य, रक्षणे-रक्षाकार्ये, व्यग्रैः-व्याकुलैः, अर्थलोभात् धनलिप्सावशात्, अभिलषितलञ्चानाम् अभिलषिता-अभिप्रेता, लञ्चा-लायते प्रच्छन्नं गृह्यत इति लञ्चा, यैस्तादृशानाम्, लाकुटिकानां वेत्रधारिणां रक्षकाणाम्, लञ्चया लञ्चासमर्पणेन, क्लेशं दुःखम्, अनुभवद्भिः प्राप्नुवद्भिः [श]; पुनः कैश्चित् कैरपि, आक्रुष्टहस्तिपकचोदितद्विरदपुरस्कृतैः आक्रुष्टाः-कृतशब्दा ये हस्तिपकाः-हस्तिवाहकाः, तैः चोदितैः-प्रेरितैः, द्विरदैः-हस्तिभिः, पुरस्कृतैः-अग्रतः कृतैः, प्रपलाय्य अतिशयेन पलायनं कृत्वा, दूरीकृतात्महननैः दूरीकृतम् आत्मनः-स्वस्य, हननं-हत्या यैस्तादृशैः, आत्मनः स्वस्य, अविडम्बनाय अतिरस्काराय स्वरक्षणायेत्यर्थः, ब्राह्मण्यं ब्राह्मणत्वम्, आविष्कुर्वद्भिः प्रकटयद्भिः; पुनः कैश्चित् कैरपि, अनिबद्धलोकलुण्ट्यमानशाकशाकटैः अनिबद्धैः-निरङ्कुशैः, लोकैः-राजपुरुषादिजनैः, लुण्ट्यमानानि-बलादाच्छिद्यमानानि, शाकशाकटानि मार्गवर्तिशाकक्षेत्राणि येषां तादृशैः, अघटितप्रयोजनाम् असम्पादितफलाम्, अवनिपाज्ञां सैन्येन कस्यापि कष्टं न कार्यमित्यादिराजाज्ञाम्, सावज्ञं सतिरस्कारम्, उपहसद्भिः [ष]; पुनः कैश्चित् कैरपि, आनन्दगद्गदिकागृहीतकण्ठैः आनन्देन या गद्गदिका-अव्यक्तशब्दता, तया गृहीतः-आश्रितः कण्ठो येषां तादृशैः, पुनः लुण्टितेक्षुवाटदुःखदुर्बलं लुण्टितेन-बलादाच्छिन्नेन, इक्षुवाटेन-इक्षुक्षेत्रेण यद् दुःखं तेन दुर्बलम्, कृषीवललोकं कर्षकजनम्, निगृहीतलुण्टाकव्रातवार्तया निगृहीतस्य-दण्डितस्य, लुण्टाकानां-बलादपहारकाणां, व्रातस्य-समूहस्य, वार्तया-वृत्तान्तेन, अपशोकं शोकरहितम्, कुर्वद्भिः सम्पादयद्भिः; पुनः कैश्चित् कैरपि, जवप्राप्तपरिपालकव्यूहरक्षितसुजातव्रैहेयैः जवेन-शीघ्रतया, प्राप्तेन-लब्धेन, परिपालकव्यूहेन-परिरक्षकसमूहेन, रक्षितानि, सुजातानि-मनोहराणि, व्रैहेयाणि-व्रीहिक्षेत्राणि येषां तादृशैः, अनेकधा अनेकप्रकारैः, नरेन्द्रं राजानम्, अभिनन्दयद्भिः स्तुवद्भिः [स]। पुनः कैश्चित् कैरपि, अलब्धावकाशठक्कुरहठनिराकृतैः अलब्धः-अदृष्टः, अवकाशः-स्थानं येन, तादृशेन ठक्कुरेण-ऐश्वर्यशालिना गृहपतिना, हठेन-बलात्कारेण, निराकृतैः-निष्कासितैः, अत एव गृहीतभाण्डैः उद्धृतभाण्डैः, प्रतिगृहं गृहं गृहम्, आश्रयाय अवस्थानाय, आहिण्डयद्भिः भ्राम्यद्भिः, पुनः कैश्चित् कैरपि, कलहनिष्कासितशालीनकुलपुत्रकवर्गैः कलहेन निष्कासितः-बहिष्कृतः,

प्रौढिमात्मनः प्रकटयद्भिः [ह], अन्यैस्तु दूरोदस्तकण्ठैः पृष्ठलग्नहृष्टबालकवृन्दकलकलसूचितान् ग्राममध्ये विचरतः स्वच्छन्दचारिणो महामात्रतन्त्रेण परिवृतान् वारणपतीनवलोक्य जातसंक्षोभैर्झटिति कोष्ठकद्वारेषु संग्रहकान् पातयद्भिः पश्चाद्वाटकेषु गोमयपिण्डकूटानि गोपयद्भिर्भग्नवृतिषु निष्कुटेषु त्रपुसकर्कारुकारवेल्लकादिवल्लीफलान्यादायादाय वेश्मनि प्रवेशयद्भिर्गृहधनं च कांस्यपात्रिकासूत्रकम्बलप्रायं बलाधिकृतधामन्यबलाजनस्य न्यासीकुर्वद्भिरनेकवृत्तान्तैर्ग्रामेयकैरवलोक्यमानबलसंहतिः [क्ष] प्रतिमार्गमुत्तम्भिताभिनवतोरणान् स्थानस्थानोपसर्पत्कुसुमफलहस्तवास्तव्यवित्ताढ्यलोकानूर्ध्वीकृतासु तत्क्षणं वेणुयष्टिषु कुड्मलीकृत्य योजितैर्माञ्जिष्ठैश्च माहारजनैश्च कर्पटैः जटालीकृतशीर्णगृहपटलानतिक्रम्य कतिचिद् वेलावनग्रामकानग्रतो दत्तदृष्टिः [ज्ञ] पिधानमिव पातालस्य, मणिकुट्टिममिव त्रिभुवनचतुःशालस्य, जन्मपल्वलमिवाकाशकुवलयस्य, प्रभापटलमिव

---

**टिप्पनकम्**—कोष्ठक -वरण्डक , संग्रहका -पलिहका , निष्कुट -गृहवाटिका [क्ष] । माहारजनानि-कौसुम्भानि [ज्ञ] ॥

---

शालीन -अधृष्टो लज्जायुक , कुलपुत्रकाणा-कुलप्रसूतानुकम्पितपुत्राणाम्, वर्गं -समूहो यैस्तादृशैः , **ग्रामपोटाना** ग्रामस्थाना पुलक्षणाना स्त्रीणाम्, **अग्रतः** अग्रे, **सगर्वं** साभिमानम्, **आत्मनः** स्वस्य, **प्रौढिं** प्रगल्भताम्, **प्रकटयद्भिः** प्रदर्शयद्भिः [ह], पुन **अन्यैस्तु** अन्यव्यक्तिभिस्तु, **दूरोदस्तकण्ठैः** दूरम्, उदस्त -उरिक्षप्त , कण्ठ -कण्ठव्यापारो यैस्तादृशैः , अतिशुष्ककण्ठैरित्यर्थ , **पृष्ठलग्नहृष्टबालकवृन्दकलकलसूचितान्** पृष्ठलग्नस्य-पृष्ठसम्बद्धस्य, हृष्टबालकवृन्दस्य-प्रसन्नशिशुसमूहस्य, कलकलेन-कोलाहलेन, सूचितान्-बोधितान्, **ग्राममध्ये विचरतः** भ्रमत , **स्वच्छन्दचारिणः** स्वेच्छाचारिण , **महामात्रतन्त्रेण** हस्तिपकप्रधानेन, **परिवृतान्** परिवेष्टितान्, **वारणपतीन्** गजेन्द्रान्, **अवलोक्य** दृष्ट्वा, **जातसंक्षोभैः** उत्पन्नसम्भ्रमै , **कोष्ठकद्वारेषु** वरण्डकद्वारेषु, **संग्रहकान्** परिधकान्, पातयद्भि , पुन **पश्चाद्वाटकेषु** वृतीनां पश्चाद्भागेषु, **गोमयपिण्डकूटानि** गोमयपिण्डसमूहान्, **गोपयद्भिः** रक्षद्भिः, पुन **भग्नवृतिषु** भग्ना -भञ्ज प्राप्ता , वृतय -प्राकारा येषा तादृशेषु, **निष्कुटेषु** गृहवाटिकासु, **त्रपुस कर्कारु कारवेल्लकादिवल्लीफलानि** त्रपुस नाम-फलविशेषलता, कर्कारु -कूष्माण्डलता, कारवेल्लक 'करेला' प्रसिद्धफलविशेषलता, तदादीना-तत्प्रभृतीनां, वल्लीना-लताना फलानि, **आदाय आदाय** गृहीत्वा गृहीत्वा, **वेश्मनि** गृहे, **प्रवेशयद्भिः** प्रवेश्य गोपयद्भिः, **च** पुन , **कांस्यपात्रिकासूत्रकम्बलप्राय** कांस्यपात्रिका-कांस्यस्य-धातुविशेषस्य भाजनम्, सूत्र-तन्तु , कम्बल -ऊर्णातन्तुमय पट , तत्प्राय-तत्प्रचुरम्, **गृहधन** गृहवित्तम्, **अबलाजनस्य** स्त्रीजनस्य, **बलाधिकृतधामनि** बलेन-स्वसामर्थ्येन बलात्कारेणेत्यर्थः , अधिकृते रक्षिताधिकारे, धामनि-गृहे, **न्यासीकुर्वद्भिः** निक्षिपद्भि , पुन **अनेकवृत्तान्तैः** विविधवार्ताकैः , बहुविधप्रवृत्तिकैरिति यावत [ क्ष ] । पुन कीदृशोऽद्य समरकेतु ? **कतिचित्** कतिपयान्, **वेलावनग्रामकान्** वेलाया -जलधितीरस्य यद् वन तन्मध्यवर्तिनो लघुग्रामान्, **अतिक्रम्य** उल्लङ्घ्य, **अग्रत** तदग्रे, **दत्तदृष्टिः** क्षिप्तलोचन , कीदृशान् ? **प्रतिमार्गं** मार्गे मार्गे, **उत्तम्भिताभिनवतोरणान्** उत्तम्भितानि, उद्बद्धानि, अभिनवानि-नवीनानि, तोरणानि-द्वाराग्रे स्तम्भोपरि निबद्धानि बहिर्द्वाराणि येषु तादृशान्, पुन **स्थानस्थानोपसर्पत्कुसुमफलहस्तवास्तव्यवित्ताढ्यलोकान्** स्थाने स्थाने उपसर्पन्त -उपगच्छन्त , कुसुमफलहस्ता -पुष्पफलरूपोपहारहस्ता , वास्तव्या -तद्ग्रामवासिन , वित्ताढ्या -धनाढ्या , लोका -जना येषु तादृशान्, पुन **तत्क्षण** तत्कालमेव, **ऊर्ध्वीकृतासु** उन्नमितासु, **वेणुयष्टिषु** वंशदण्डेषु **कुड्मलीकृत्य** आकुञ्च्य, **योजितैः** उत्क्षिप्तै , **माञ्जिष्ठैः** मञ्जिष्ठाख्यरागविशेषरक्तै , **च** पुन , **माहारजनैः** माहारजनेन-कुसुम्भाख्यरागविशेषेण रक्तै , **कर्पटैः** पटखण्डै , **जटालीकृतशीर्णगृहपटलान्** जटालीकृत-व्याप्त, शीर्णाना-भग्नाना, गृहाणां पटल-समूहो येषु तादृशान् [ ज्ञ ] । कीदृशमम्भोनिधिम् ? **पातालस्य** अधोलोकस्य, **पिधानमिव** आवरणमिव, पुन **त्रिभुवनचतुःशालस्य** त्रिभुवनरूपस्य चतुःशालस्य-चतसृणा शालाना समाहारस्य, अन्योऽन्याभिमुखगृहचतुष्टयस्य, **मणिकुट्टिममिव** मणिखचित मध्यवर्ति संस्कृतभूमितलमिव, पुन **आकाशकुवलयस्य** आकाशरूपस्य कमलस्य,

दिग्मण्डलेन्द्रनीलवलयस्य, छायाचक्रमिव ब्रह्मस्तम्बतरुगहनस्य, प्रच्छदपटमिव महीतलमहाशयनस्य, अदृष्टपर्यन्ततया दृष्टान्तमिव संसारस्य, मूर्ततापरिणाममिव कालस्य, रूपान्तरग्रहणमिव शब्दराशेः, उदाहरणमिव निःश्रेयससुखानाम्, अनुकारमिव महाकविप्रज्ञाऽऽलोकस्य [अ], सर्वतश्चान्धकारितदिगन्तराभिरन्धकारातिकन्धराकान्तिकालीभिः पातालतिमिरेभ्य इव जृम्भिताभिरितस्ततः सर्पदहिकुलप्रभाभिरिव संतर्पिताभिरसुरलोकादिव लब्धनिर्गमाभिरवगाहावतीर्णदिङ्नागमदक्षालनादिव क्षुभिताभिरन्तःप्रसुप्ताच्युतशरीरद्युत्येव दत्तसंस्काराभिरनिलविलुलितैरौर्वज्वलनधूमैरिवानुरञ्जिताभिरन्तःकरणवासिवैवस्वतानुजादेहलावण्येनेव लिप्ताभिस्तटतमालकाननच्छायानिर्गमैरिव निरर्गलीकृतप्रसराभिरुल्लसन्तीभिरम्भसः प्रभावर्तिभिरत्यन्तधीराणामपि मनसि साध्वसमादधानम् [आ], मुद्रितमुखरहंसनूपुरस्वनाभिः त्वरितगतिवशोत्कम्पमानपृथुपयोधरतटाभिर्मुक्ताचालक्षौमक्षौमालामेखलानि पुलिनजघनस्थलानि बिभ्रतीभिरितस्ततो वलितविलोलतारशफरलोचनाभिर्बहलशैवलप्रवालकस्तूरिकास्तवककलङ्कितानि पङ्कमलिनेन नवनीरवाससा सुदूरमावृण्वतीभिर्मुखानि विजृम्भिताभिर्नव-

---

टिप्पनकम्—वैवस्वतानुजा—यमानुजा [आ]। सुघटितकाष्ठस्य गगनारघट्टस्य काष्ठा—दिशः, काष्ठानि—दारूणि च [इ]।

---

जन्मपल्वलमिव जन्मस्थानभूतजलाशयमिव, पुनः दिङ्मण्डलेन्द्रनीलवलयस्य दिङ्मण्डलरूपस्य इन्द्रनीलमणिनिर्मितकङ्कणस्य, प्रभापटलमिव द्युतिसमूहमिव, पुनः ब्रह्मस्तम्बतरुगहनस्य ब्रह्माण्डरूपस्य वृक्षसमूहस्य, छायाचक्रमिव छायामण्डलमिव, पुनः महीतलमहाशयनस्य भूमण्डलरूपमहाशय्यायाः, प्रच्छदपटमिव आस्तरणवस्त्रमिव, पुनः अदृष्टपर्यन्ततया अदृष्टान्तिमावधिकतया, संसारस्य जगतः, दृष्टान्तमिव उपमानमिव, आदर्शभूतमिवेति यावत्, पुनः कालस्य कालाख्यामूर्तद्रव्यस्य, मूर्ततापरिणाममिव मूर्ततया क्रियादिवद्द्रव्यभावेन विकारभूतमिव, पुनः शब्दराशेः शब्दसमूहस्य, रूपान्तरग्रहणमिव रूपान्तरापत्तिमिव, पुनः निःश्रेयससुखानां मोक्षसुखानाम्, उदाहरणमिव निरवसानतायाः दृष्टान्तमिव, पुनः महाकविप्रज्ञाऽऽलोकस्य महाकविप्रतिभाप्रकाशस्य, अनुकारमिव अनुकरणमिव [अ], पुनः अम्भसः जलस्य, प्रभावर्तिभिः प्रभाल्याङ्कलेखैः, अत्यन्तधीराणामपि परमधैर्यशालिनामपि, मनसि हृदये, साध्वसं भयम्, आदधानं जनयन्तम्, कीदृशीभिः? सर्वतः सर्वभागेषु, अन्धकारितदिगन्तराभिः अन्धीकृतदिङ्मध्याभिः, पुनः अन्धकारातिकन्धराकान्तिकालीभिः अन्धकस्य—तदाख्यराक्षसस्य, अरातिः—शत्रुः शिवः, तस्य या कन्धरा—ग्रीवा, तस्या या कान्तिः—कृष्णवर्णः, तद्वत् कालीभिः—कृष्णवर्णाभिः, पातालतिमिरेभ्य इव पातालस्थान्धकारेभ्य इव, जृम्भिताभिः जृम्भया प्रकाशिताभिः, पुनः इतस्ततः अत्र तत्र, सर्पदहिकुलप्रभाभिः सर्पताम्—उद्वेल्लताम्, अहिकुलानां—सर्पगणानां, प्रभाभिः—कान्तिभिः, सन्तर्पिताभिरिव परिपोषिताभिरिव, पुनः असुरलोकात् दैत्यलोकात्, लब्धनिर्गमाभिरिव प्राप्तनिस्सरणाभिरिव, पुनः अवगाहावतीर्णदिङ्नागमदक्षालनात् अवगाहाय—सलिलान्तःप्रवेशाय, अवतीर्णैः—आगतैः, दिङ्नागैः—दिग्गजैः, मदानां—दानवारीणां, क्षालनात्—मार्जनात्, क्षुभिताभिरिव कलुषिताभिरिव, पुनः अन्तःप्रसुप्ताच्युतशरीरद्युत्या अन्तः—मध्ये, प्रसुप्तस्य—शयितस्य, अच्युतस्य—विष्णोः, शरीरद्युत्या—शरीरकान्त्या, दत्तसंस्काराभिरिव कृतसंस्काराभिरिव, पुनः अनिलविलुलितैः पवनोद्धूतैः, और्वज्वलनधूमैः और्वज्वलनः—वाडवाग्निः, तस्य धूमैः, अनुरञ्जिताभिरिव मलिनिताभिरिव, पुनः अन्तःकरणवासिवैवस्वतानुजादेहलावण्येन अन्तःकरणवासिन्याः—हृदयवासिन्याः, वैवस्वतानुजायाः—यमानुजायाः यमुनायाः इत्यर्थः, देहलावण्येन—शरीरकान्त्या, लिप्ताभिरिव मिश्रिताभिरिव, पुनः तटतमालकाननच्छायानिर्गमैः तटेषु यानि तमालकाननानि—तमालाख्यतरुवनानि, तेषां छायानां निर्गमैः—निःसरणैः, निरर्गलीकृतप्रसराभिः निरर्गलीकृतः—अप्रतिहतीकृतः प्रसरः—प्रसरणं यासां तादृशीभिरिव, उल्लसन्तीभिः उद्दीप्यमानाभिः [आ]। पुनः कीदृशम्? विजृम्भिताभिः नवमेघदुर्दिनेषु विजृम्भितेन—उद्धूतेन, अभिनवेन—सद्यः सम्भृतसलिलेन, मेघेन, दुर्दिनेषु—अन्धकारावृतेषु, दिनेषु वासरेषु,

तस्य जलकेतोः सुता सुतारवृत्तमौक्तिककल्पितं हारमादाय पितुराज्ञया गता तद्गृहम् [ध] । दृष्टश्च स तया प्रथमदर्शन एव रूपातिशयदर्शनारूढदृढतरानुरागया, सस्पृहमुपनीतोपायना च स्थित्वा कञ्चित् कालं कृतप्रत्युपचारा तेन पुनर्गता स्वसदनम्, अनुरागप्रेरिता च तद्दर्शनाशया तैस्तैर्व्यपदेशैरागन्तुमारब्धा प्रतिदिनम् [न] ।

एकदा तु तदीयसौधशिखरशालायां सख्या सह क्रीडन्त्याः कथञ्चित् सविधमागतोऽसौ, तद्दर्शनोपारूढसाध्वसा च सत्वरं व्रजन्ती वेपथुविशृङ्खलैः पदैः परिस्खलिता कुट्टिमतले, पतन्त्याश्च तस्याः सोपानपथसन्निधौ सत्वरमुपेत्य तेनावलम्बितः प्रवाल इव वालवनलतायाः करिकलभकेन स्निग्धसुकुमारसरलारुणाङ्गुलिर्दक्षिणः पाणिः, प्रयुक्तपाणिना च मधुरमभिहिता स्मितमुखेन—'सुमुखि ! किमिदं समेऽपि स्खलनम्, अलममुना संभ्रमेण, संवृणु क्षोभविगलितस्तनांशुकमस्थान एव विसंस्थुलीभूतमात्मानं, गच्छ गेहम्' इति [प] । सा तु तत्करग्रहणसमकालमेवोत्थितेन सरभसाकृष्टधनुषा कुसुमसायकेन कृतसाहायकेनेव दूरमपसारितसाध्वसा

---

**निकामकमनीयदर्शना** अत्यन्तप्रियदर्शना, **प्रियदर्शना** तदन्वर्थसंज्ञिका, **तस्य जलकेतोः** तदाख्यकर्णधारस्य, **सुता** कन्यका, **सुतारवृत्तमौक्तिककल्पितं** सुतारे-विशुद्धे, वृत्ते-वर्तुलाकारे च, मौक्तिके-मुक्तामणिभिः कल्पितं-निर्मितं, **हारं** माल्यम्, **आदाय** गृहीत्वा, **पितुः** जलकेतोः, **आज्ञया** आदेशेन, **तद्गृहं** तस्य-तारकाख्यकुमारस्य, गृहं, **गता** गतवती [ध] । **च** पुनः, **प्रथमदर्शन एव** प्रथमावलोकनकाले एव, **रूपातिशयदर्शनारूढदृढतरानुरागया** रूपातिशयस्य रूपोत्कर्षस्य, दर्शनेन आरूढः-उत्पन्नः, दृढतरः-अतिदृढः, अनुरागः-प्रीतिर्यस्यास्तादृश्या, **तया** प्रियदर्शनया, **सः** तारकः, **दृष्टः** दृष्टिगोचरीकृतः । **च** पुनः, **सस्पृहं** सानुरागम्, **उपनीतोपायना** उपाहृतोपहारा, **कञ्चित्** कियन्तं कालं **स्थित्वा**, **तेन** कुमारेण, **कृतप्रत्युपचारा** विहितप्रतिसत्कारा सती, पुनः **स्वसदनं** स्वगृहं गता, **च** पुनः, **अनुरागप्रेरिता** तत्प्रीतिप्रवर्तिता सती, **तद्दर्शनाशया** तदवलोकनाकाङ्क्षया, **तैस्तैः व्यपदेशैः** व्यवहारैः छलैर्निमित्तैर्वा, **प्रतिदिनम्**, **आगन्तुं** तद्गृहमुपस्थातुम्, **आरब्धा** प्रवृत्ता [न] ।

**एकदा तु** एकस्मिन् काले तु, **तदीयसौधशिखरशालायां** तारकीयप्रासादशिखरवर्तिभवने, **सख्या** स्ववयस्यया **सह**, **क्रीडन्त्याः** खेलन्त्याः, प्रियदर्शनाया इति शेषः, **सविधं** समीपम्, **असौ** तारकः, **कथञ्चित्** केनापि प्रकारेण, **आगतः** उपस्थितः । **तद्दर्शनोपारूढसाध्वसा** तद्दर्शनेन-तारकावलोकनेन, आरूढम्-उत्पन्नं, साध्वसं-भयं यस्यास्तादृशी सती, **सत्वरं** शीघ्रं, **व्रजन्ती** अपसरन्ती, **वेपथुविशृङ्खलैः** कम्पनविघटितैः, **पदैः** चरणैः, तद्विक्षेपैरित्यर्थः, **कुट्टिमतले** मणिबद्धभूतले, **परिस्खलिता** निपतितुं प्रवृत्ता । **पतन्त्याः** स्खलन्त्याः, **तस्याः** प्रियदर्शनायाः, **दक्षिणः** वामेतरः, **पाणिः** हस्तः, **तेन** तारकेण **अवलम्बितः** गृहीतः । कीदृशः ? **स्निग्धसुकुमारसरलारुणाङ्गुलिः** स्निग्धाः-सरसाः, न तु रूक्षा इत्यर्थः, सुकुमाराः-कोमलाः, सरलाः-ऋजवः, अरुणाः-रक्तवर्णाश्च, अङ्गुलयो यस्मिंस्तादृशः, किं कृत्वा ? **सोपानपथसन्निधौ** सोपानमार्गसमीपे, **सत्वरं** शीघ्रम्, **उपेत्य** आगत्य, केन क इव ? **करिकलभकेन** हस्तिशिशुना, **वालवनलतायाः** वनस्थबाललतायाः, **प्रवाल इव** पल्लव इव । **च** पुनः, **प्रयुक्तपाणिना** प्रयुक्तः-अवलम्बनाय प्रहितः, पाणिः-करो येन तादृशेन, तारकेणेति शेषः, **स्मितमुखेन** मन्दहासान्वितमुखेन, **मधुरं** यथा स्यात् तथा, **अभिहिता** उक्ता, प्रियदर्शनेति शेषः, किमित्याह **सुमुखि !** सुन्दरवदने !, **समेऽपि** अविषमस्थलेऽपि, **इदं** प्रत्यक्षभूतं, **स्खलनं** पतनम्, **किं ?** किंहेतुकम् ?, **अमुना** तत्कारणभूतेन, **सम्भ्रमेण** भयजन्यसंक्षोभेण, **अलं** व्यर्थम्, **क्षोभविगलितस्तनांशुकं** क्षोभेण-सम्भ्रमेण, विगलितं-स्खलितं, स्तनांशुकं-स्तनावरणभूतवस्त्रं यस्य तादृशम्, पुनः **अस्थान एव** अनवसर एव, **विसंस्थुलीभूतं**—विक्षिप्तं, विह्वलीभूतमित्यर्थः, **आत्मानं** स्वम्, **संवृणु** उपसंहर, प्रकृतिस्थं कुरु इत्यर्थः, **गेहं** स्वगृहं, **गच्छ** याहि, इति [प] । **सा तु** प्रियदर्शना तु, **तत्करग्रहणसमकालमेव** तारककरग्रहणसमकालमेव, **उत्थितेन** उद्गतेन, **सरभसाकृष्टधनुषा** सरभसं-सत्वरम्, आकृष्टम्-आततं, धनुर्येन तादृशेन, पुनः **कृतसाहायकेन** कृतसहायतारेण, **कुसुमसायकेनेव** कामदेवेनेव यद्वा कुसुमसायकेन कृतं यत् साहायकं-साहाय्यं तेनेव, **दूरं** दूरतरम्,

सविभ्रमोल्लासितैकभ्रुवा गुरुणेव नवानुरागेण कारितप्रगल्भकलालापपरिचया चिरकाललब्धावसरया विदग्धसख्येव तत्समागमतृष्णया स्थापिता स्वयं दूतीव्रतविधौ निसर्गमुग्धापि प्रौढवनितेव किञ्चिद् विहस्य वचनमिदमुदीरितवती [ फ ] । 'कुमार! त्वया गृहीतपाणिः कथमहं विसंस्थूलीभूतमात्मानं संवृणोमि, कथं च गेहादितो गृहान्तरं गच्छामि, सांप्रतमिदमेव मे त्वदीयं सदनमाश्रयः संवृत्तः' इत्युक्त्वा त्रपावनतवदना पुरःप्रसृतधवलनखमयूखोद्द्योतया तदीयवक्रालापश्रवणजातहासयेव वामचरणाङ्गुष्ठलेखया मन्दमन्दमलिखत् कुट्टिमम् [ ब ] । असावपि युवा तेन तस्याः स्मरविकारदर्शनेन, तेन तत्कालमतिशयस्पृहणीयतां गतेन रूपलावण्यादिगुणकलापेन, तेनामृतस्यन्दशीतलेन करतलस्पर्शेन, तेन च प्रकटितानुरागेण, निपुणया वचनभङ्ग्या कृतेनात्मसमर्पणेन परमरंस्त [ भ ] ।

सहासवदनश्च मन्दमाश्लिष्य तामानन्दमुकुलायमानलोचनोत्पलां परिघट्य च कपोलोदरे कपोलेन 'सुन्दरि! यदि न यातव्यं गृहान्तरमिति निश्चयस्ते, ततः किम्? एकेन गृहेण, द्रविणसंग्रहो रत्नानि

---

अपसारितसाध्वसा निष्कासितभया, पुनः गुरुणेव शिक्षकेणेव, सविभ्रमोल्लासितैकभ्रुवा सविभ्रमं-सविलासं यथा स्यात् तथा, उल्लासिता-उन्नमिता, एका भ्रूः-नेत्रोर्ध्वरोमराजिर्येन तादृशेन, नवानुरागेण नूतनप्रणयेन, कारितप्रगल्भकलालापपरिचया कारितः-जनितः, प्रगल्भकलालापानां-प्रतिभान्वितमधुरालापानाम्, परिचयो यस्यास्तादृशी सती, पुनः विदग्धसख्येव निपुणवयस्ययेव, चिरकाललब्धावसरया दीर्घकालप्राप्तावसरया, तत्समागमतृष्णया तारकसमागमनेच्छया, स्वयम् आत्मनैव, दूतीव्रतविधौ दूतीनियमानुष्ठाने, स्थापिता नियुक्ता, निसर्गमुग्धाऽपि प्रकृत्याऽप्रगल्भापि, प्रौढवनितेव प्रगल्भनायिकेव, किञ्चित् ईषत्, विहस्य हासं कृत्वा, इदम् अनुपदमनूद्यमानं वचनम्, उदीरितवती उक्तवती [ फ ], किमित्याह—कुमार! तारक! त्वया भवता, गृहीतपाणिः कृतपाणिग्रहणा, अहम्, विसंस्थूलीभूतं विक्षिप्तम्, आत्मानं स्वं, कथं केन प्रकारेण, संवृणोमि उपसंहरामि, च पुनः, इतः अस्मात्, भावत्कादित्यर्थः, गेहात् गृहात्, गेहान्तरं गृहान्तरं, कथं केन प्रकारेण, गच्छामि उपसरामि, त्वदीयं भवदीयम्, इदमेव प्रत्यक्षभूतमेव, सदनं गृहम्, साम्प्रतम् अधुना, आश्रयः मम शरणं, संवृत्तः सम्पन्नः, इत्युक्त्वा इति कथयित्वा, त्रपावनतवदना लज्जयाऽधोमुखी सती, तदीयवक्रालापश्रवणजातहासयेव प्रियदर्शनावक्रोक्तिश्रवणोत्पन्नहासयेव, पुरःप्रसृतधवलनखमयूखोद्द्योतया पुरः-अग्रे, प्रसृतः-प्रकीर्णः, धवलनखानां-शुभ्रनखानां, मयूखरूपः-किरणरूपः, उद्द्योतः-प्रकाशो यस्यास्तादृश्या, वामचरणाङ्गुष्ठलेखया वामपादाङ्गुष्ठलेखया, कुट्टिमं मणिबद्धभूमिम्, अलिखत् लिखितवती [ ब ] । असावपि सोऽपि, तारकोऽपीत्यर्थः, युवा तरुणपुरुषः, तेन तदानीन्तनेन, तस्याः प्रियदर्शनायाः, स्मरविकारदर्शनेन कामविकारानुभवेन, पुनः तत्कालं तत्क्षणम्, अतिशयस्पृहणीयताम् अत्यन्तकमनीयताम्, गतेन प्राप्तेन, तेन अनुभूतेन, रूपलावण्यादिगुणकलापेन रूपसौन्दर्यादिगुणगणेन, पुनः अमृतस्यन्दशीतलेन स्यन्दमानामृतवत्सुशीतलेन, तेन अनुभूतेन, करतलस्पर्शेन हस्ततलाश्लेषेण, च पुनः, प्रकटितानुरागेण प्रकटितः-अभिव्यक्तः, अनुराग-प्रीतिर्येन तादृशेन, निपुणया प्रागल्भ्यपूर्णया, वचनभङ्ग्या वचनरचनाविशेषेण, कृतेन, तेन अनुभूतेन, आत्मसमर्पणेन आत्मनः-स्वस्य, अर्धानीकरणेन, परम् अत्यन्तम्, अरंस्त अप्रीयत [ भ ] ।

च पुनः, सहासवदनः हसितमुखः सन्, आनन्दमुकुलायमानलोचनोत्पलाम् आनन्देन मुकुलायमाने-सङ्कुचन्ती, लोचनोत्पले-नयनकमले यस्यास्तादृशीम्, तां प्रियदर्शनाम्, मन्दं किञ्चित्, आश्लिष्य आलिङ्ग्य, च पुनः, कपोलोदरे गण्डस्थलमध्यभागे, कपोलेन गण्डस्थलेन, परिघट्य संस्पृश्य, सुन्दरि! मनोहारिणि!, यदि ते तव, गृहान्तरम् अन्यगृहम्, न यातव्यं गन्तव्यम्, इति निश्चयः सङ्कल्पः, अस्तीति शेषः, ततः तर्हि, एकेन एतावता, गृहेण सदनमात्रवस्तुना, किं न किमपि साध्यमित्यर्थः, किन्तु द्रविणसंग्रहः धान्यादिराशिः, रत्नानि मणिरत्नादीनि, पाहनानि

वाहनानि परिजनः शरीरं हृदयमिन्द्रियाणि प्राणाः सर्वमेव त्वदीयम्, एतदारोपय स्वेनाङ्गीकारेण गौरवम्' इत्युदीर्य "दुष्कुलादपि ग्राह्यमङ्गनारत्नम्" इत्याचार्यवचनं मनसि कृत्वा स्वजातिनिरपेक्षस्तत्रैव क्षणे ज्वलन्तमन्तर्मदनानलं साक्षीकृत्य भूयो गृहीतपाणिस्तां चकितमृगशावलोचनामत्यन्तमनुरागान्धां योजनगन्धामिव पाराशरः प्रणयिनीमकृत [ म ]। तस्माच्च पाणिग्रहणदिवसादारभ्य निर्भरानुरागस्तया सर्वाङ्गसुन्दर्या सह विवर्धमानविविधविदग्धपरिहासमश्रान्तचित्रचाटुक्रममप्रकटितस्वस्वामिभावमल्पक्षणोपजायमानानेककोपप्रसादमस्थानसंपाद्यमानस्पृहणीयनिग्रहानुग्रहमनुदिवसमासेवमानो नवयौवनोपभोगमुपभोगसुखमपरकामिनीसुरतसंभोगानां गृहव्यापारयोगानां च प्रायच्छदुदकाञ्जलिम् [ य ]। जलकेतुना कस्यापि सांयात्रिकस्य तनया वहनभङ्गे सागरादुद्धृत्य परिपालितेयमिति तत्त्ववेदिभिरावेदिततदीयवृत्तान्तोऽपि सहागतैर्वणिग्भिः स्वदेशगमनाय पुनः पुनरभ्यर्थ्यमानोऽपि दर्शनोत्कण्ठितेन ज्ञातिवर्गेण सोपालम्भवचनैः संदेशदानैरुन्मनीक्रियमाणोऽपि त्रपया स्थितोऽत्रैव न गतो निजस्थानम्, आस्थानभूमौ उपगतश्च द्रष्टुमाकृतिगुणाकृष्टचेतसा देवेन

---

गजाश्वादीनि, **परिजनः** परिवारः, **शरीरं** मदीयगात्रम्, **हृदयम्** अन्तःकरणम्, **इन्द्रियाणि** ज्ञान-कर्मसाधनानि नयन-हस्तादीनि, **प्राणाः**-जीवितम्, एतत् सर्वं **त्वदीयं** भवदीयम्, **स्वेन** स्वकीयेन, **अङ्गीकारेण** स्वीकारेण, **गौरवं** महत्त्वम्, **आरोपय** आपादय, **इति** इत्थम्, **उदीर्य** उक्त्वा, अङ्गनारत्नं, दुष्कुलादपि-नीचकुलादपि, ग्राह्यं-गृहीतव्यम्, इति **आचार्यवचनं** नीतिमार्गोपदेशकवाक्यम्, **मनसि** हृदये, **कृत्वा** प्रमाणीकृत्य, **स्वजातिनिरपेक्षः** पाणिग्रहणे स्वसाजात्यनपेक्षः, **तत्रैव** तस्मिन्नेव, **क्षणे**, **अन्तः** अन्तःकरणे, **ज्वलन्तं** दीप्यमानं, **मदनानलं** कामदेवाग्निम्, **साक्षीकृत्य** पाणिग्रहणसाक्षिभावेनाश्रित्य, **भूयः** पुनरपि, **गृहीतपाणिः** गृहीतप्रियदर्शनाहस्तः सन्, **चकितमृगशावलोचनां** चकितः-सम्भ्रान्तो यो मृगशावः-हरिणशिशुः, तस्येव, लोचने-नयने यस्यास्तादृशीम्, पुनः **अनुरागान्धां** प्रणयान्धाम्, **तां** प्रियदर्शनाम्, **पाराशरः** पराशरात्मजो व्यासः, **योजनगन्धामिव** अन्वर्थतदाख्यकैवर्तकन्यकामिव, **प्रणयिनीं** प्रियाम्, स्ववधूमित्यर्थः, **अकृत** कृतवान् [ म ]। **च** पुनः, **तस्मात् पाणिग्रहणदिवसात्** विवाहदिनात्, **आरभ्य**, **निर्भरानुरागः** सान्द्रस्नेहः सन्, **सर्वाङ्गसुन्दर्या** सर्वाङ्गमनोज्ञया, **तया सह** **उपभोगसुखं** सुरतसम्भोगप्रधानकम्, **नवयौवनोपभोगं** नवयौवनसुखम्, **अनुदिनं** प्रतिदिनम्, **आसेवमानः** सम्यगनुभवन्, **अपरकामिनीसुरतसम्भोगानां** तदन्यवनितारतिसुखानाम्, **च** पुनः, **गृहव्यापारयोगानां** गृहकार्यसम्बन्धानां च, **उदकाञ्जलिं** तिलाञ्जलिं, **प्रायच्छत्** प्रदत्तवान्, त्यागं कृतवानित्यर्थः; कीदृशं नवयौवनोपभोगम्? **विवर्धमानविविधविदग्धपरिहासं** विवर्धमानाः-विशेषेण वर्धमानाः, विविधाः-अनेकविधाः, विदग्धाः-चमत्कृतिपूर्णाः, परिहासा यस्मिंस्तादृशम्, पुनः **अश्रान्तचित्रचाटुक्रमम्** अश्रान्तः-अनवरतः, चित्रचाटूनां-विचित्रमधुरवचनानाम्, क्रमः-धारा यस्मिंस्तादृशम्, पुनः **अप्रकटितस्वस्वामिभावम्** अप्रकटितः-अप्रकाशितः, स्वस्वामिभावः-ईशितव्येशितृभावो यस्मिंस्तादृशम्, पुनः **अल्पक्षणोपजायमानानेककोपप्रसादम्** अल्पक्षणं-कतिपयक्षणाभ्यन्तरे, उपजायमानाः-उत्पद्यमानाः, अनेके-विविधाः, कोपाः-प्रणयक्रोधाः, प्रसादाः-प्रसन्नताश्च यस्मिंस्तादृशम्, पुनः **अस्थानसम्पाद्यमानस्पृहणीयनिग्रहानुग्रहम्** अस्थाने-अनवसरे, सम्पाद्यमानौ-क्रियमाणौ, स्पृहणीयौ-किञ्चित्कालिकत्वेन रमणीयौ, निग्रहानुग्रहौ-बन्धमोक्षौ यस्मिंस्तादृशम् [ य ]। **कस्यापि**, **सांयात्रिकस्य** पोतवणिजः, इयं **तनया** कन्या, **वहनभङ्गे** तदीयपोतभग्नतायां सत्याम्, **सागरात्** समुद्रात्, **उद्धृत्य** निष्कास्य, **जलकेतुना** तदाख्यकैवर्तेन, **परिपालिता** रक्षिता इति, **तत्त्ववेदिभिः** यथार्थज्ञातृभिः, **आवेदिततदीयवृत्तान्तोऽपि** विज्ञापितप्रियदर्शनासम्बन्धिवार्ताकोऽपि, पुनः **सहागतैः** आत्मना साकमागतैः, **वणिग्भिः** वाणिज्यवृत्तिकैः, **स्वदेशगमनाय** स्वदेशप्रत्यावर्तनाय, **पुनः पुनः** वारंवारम्, **अभ्यर्थ्यमानोऽपि** प्रार्थ्यमानोऽपि, पुनः **दर्शनोत्कण्ठितेन** तदवलोकनोत्सुकेन, **ज्ञातिवर्गेण** बन्धुवर्गेण, **सोपालम्भवचनैः** साक्षेपवाक्यैः, **सन्देशदानैः** स्वविज्ञप्तिप्रेषणैः, **उन्मनीक्रियमाणोऽपि** गन्तुमुत्सुकीक्रियमाणोऽपि, **त्रपया** लज्जया, **अत्रैव** अस्मिन्नेव स्थाने, **स्थितः**, **निजस्थानं** स्वस्थानम्, **न गतः**, **च** पुनः, **आस्थानभूमौ** राजसभाभूमौ, **द्रष्टुम्** अवलोकितुम्, **उपगतः** उपस्थितः, **आकृतिगुणाकृष्टचेतसा** आकृतिगुणेन-आकार-

चन्द्रकेतुना निर्वर्ण्य सुचिरं परिजनादाकर्णिततदीयपूर्वापरवृत्तान्तेन चापलं प्रति पुनः पुनः सपरिहासमाभाषितो मधुरमारोपितबहुमानश्च जामातृप्रतिपत्त्या दत्त्वा जीवनमतिप्रभूतं कृतः प्रभुरखिलस्यापि नाविकतन्त्रस्य [ ट ]। तत्र च कुर्वताधिपत्यमचिरेणैव शिक्षितानेन सकलापि नौप्रचारविद्या, विदितमखिलमपि कर्णधाराणां कर्म, कृतानि बहुकृत्वः सलिलराशौ गमनागमनानि, दृष्टा दूरविप्रकृष्टा अपि द्वीपान्तरभूमयः, प्रत्यक्षीकृताः क्षुद्रा अपि जलपथाः, लक्षितानि तेषु सम्यक्समविषमस्थानानि, किं बहुना, स्वल्पेनापि कालेन जातः स सकलस्यापि कर्णधारचक्रस्य धौरेयः, स चायमेवावधार्यतां धीरेण [ ठ ]।

अस्य हि किमपि लोकोत्तरं धैर्यम्, असाधारणः सत्त्वावष्टम्भः, दृष्टान्तभूतं पौरुषम्; ईषदपि न स्पृष्ट एष कैवर्तकुलसंपर्कदोषाशङ्किनेव वणिग्जातिसहभुवा भीरुत्वेन; वीर्यमपि शारीरमविचार्यमस्य; जलधिमध्यमग्ननौसमुद्धरणेष्वनेकशः कवलितोऽपि हर्म्यतलप्रणालसलिलपूर इव हेलया निष्क्रामति मकरमुखतः; करामोल्लालितशीकर इव करटभित्तिमाहत्य हरति मदमुदग्रकायानामपि करियादसाम्, मुखान्तरक्षिप्तडुण्डुभ-

टिप्पनकम्—मकरमुखतः जलचरविशेषवक्त्रात्, अन्यत्र मकरमुखप्रणालात्। हरति मदम् एकत्र मदं-मत्तताम्, अन्यत्र दर्पम्। डुण्डुभः-जलसर्पः। प्रकृष्टजाङ्गुलिक इव न मुह्यति विषमोदकविषरसु एकत्र रौद्रजलापत्सु, अन्यत्र विषमिश्रजलाडुकापत्सु, जाङ्गुलिकः-विषवैद्यो गारुडिको वा [ ष ]।

सौष्ठवेन, आकृष्टं चेतो-हृदयं यस्य तादृशेन, देवेन राज्ञा चन्द्रकेतुना, सुचिरं सुदीर्घकालम्, निर्वर्ण्य दृष्ट्वा, परिजनात् परिवारसकाशात्, आकर्णिततदीयपूर्वापरवृत्तान्तेन श्रुततदीयसमस्तवार्तिकेन, चापलं प्रति परिणयनविषयकचापल्यविषये, सपरिहासं परिहासपूर्वकम्, मधुरं प्रियं यथा स्यात् तथा, आभाषितः उक्तः, च पुनः, जामातृप्रतिपत्त्या जामातृबुद्ध्या, आरोपितबहुमानः कृतप्रचुरसम्मानः, अतिप्रभूतम् अत्यधिकम्, जीवनं जीविकाम्, दत्त्वा, अखिलस्यापि समस्तस्यापि, नाविकतन्त्रस्य कर्णधारगणस्य, प्रभुः नायकः, कृतः [ ट ]। च पुनः, तत्र कर्णधारगणे, आधिपत्यं प्रभुत्वम्, कुर्वता स्थापयता, अनेन तारकेण, सकलापि समस्तापि, नौप्रचारविद्या नौवहनकला, शिक्षिता अधिगता, पुनः अखिलमपि समस्तमपि, कर्णधाराणां नाविकानां, कर्म कार्यम्, विदितं परिचितम्, पुनः सलिलराशौ समुद्रे, बहुकृत्वः बहुवारम्, गमनागमनानि कृतानि, पुनः दूरविप्रकृष्टा अपि अतिदूरस्थिता अपि, द्वीपान्तरभूमयः अन्यद्वीपभूमयः, दृष्टाः दृष्टिगोचरीकृताः, पुनः क्षुद्रा अपि लघवोऽपि, जलपथाः जलमार्गाः, प्रत्यक्षीकृताः दृष्टिगोचरीकृताः, पुनः तेषु जलपथेषु, समविषमस्थानानि समानि-अनिम्नोन्नतानि, विषमाणि-निम्नोन्नतानि च, स्थानानि-स्थलानि, सम्यक् अनन्तम्, लक्षितानि परिचितानि, किं बहुना किमधिकेन। स तारकः, स्वल्पेनापि अल्पेनापि, कालेन, सकलस्यापि समस्तस्यापि, कर्णधारचक्रस्य नाविकगणस्य, धौरेयः अग्रणीः, जातः सम्भवः, स च तारकश्च, अयमेव प्रत्यक्षं दृश्यमान एव, धीरेण प्राज्ञेन, अवधार्यतां निर्धार्यताम् [ ठ ]। हि निश्चयेन, अस्य तारकस्य, लोकोत्तरं लोकोत्तरम्, धैर्यं धीरत्वम्, पुनः असाधारणः उत्कृष्टः, सत्त्वावष्टम्भः बलावलम्बः, बलाभिमान इत्यर्थः, यद्वा सत्त्वानां-जन्तूनामाक्रमणम्, पुनः दृष्टान्तभूतम् आदर्शभूतम्, पौरुषं पराक्रमः। पुनः एषः अयम्, भीरुत्वेन भयशीलत्वेन, ईषदपि किञ्चिदपि, न स्पृष्टः कृतस्पर्शः, कीदृशेन ? वणिग्जातिसहभुवा वैश्यजातिसहजेन, कीदृशेनेव ? कैवर्तकुलसम्पर्कदोषाशङ्किनेव कैवर्तकुलसम्पर्कजन्यकलङ्कशङ्कावतेव। अस्य शारीरं शरीरसम्बन्धि, वीर्यं सामर्थ्यमपि, अविचार्यम् अनाकलनीयम्। जलधिमध्यमग्ननौसमुद्धरणेषु जलधिमध्ये-समुद्रमध्ये, मग्नाना नावां, समुद्धरणेषु-उद्धो निष्कासनकार्येषु, कवलितोऽपि ग्रस्तोऽपि, हर्म्यतलप्रणालसलिलपूर इव प्रासादतलस्थितप्रणालिकासलिलप्रवाह इव, मकरमुखतः जलचरविशेषमुखमार्गतः, अन्यत्र मकराकारजलमुखान्निःसरन्, हेलया खेलया, अनायासेनेत्यर्थः, निष्क्रामति निःसरति। पुनः करामोल्लालितशीकर इव करामेण-शुण्डाग्रभागेन, उल्लालितः-उत्क्षिप्तः, शीकर इव जलकण इव, करटभित्तिं गण्डस्थलम्, आहत्य ताडयित्वा, उदग्रकायानाम् उन्नतशरीराणाम्, करियादसां हस्तिरूपाणां जलचराणां, जलहस्तिनामित्यर्थः, मदं गर्वं मत्ततां च, हरति नाशयति, प्रकृष्ट-

मणिरितरनाविक इव निराकुलो वसति दिवसमपि रसातलगम्भीरेऽम्भसि, प्रकृष्टजाङ्गुलिक इव दुरुत्तरास्वपि न मुह्यति विषमोदकविपत्सु, तैस्तैरञ्जनैरञ्जितेक्षणः क्षणदास्वपि समस्तवस्तुजातमुपजातयोगिज्ञान इव विज्ञातनिरवशेषविशेषमावेदयति [ग]। सर्वथा योग्योऽयं युज्यतेऽस्मिन्नवसरे स्वनावः कर्णधारतां नेतुमात्मनश्च प्रणयीकर्तुम्, अनेन हि प्रगल्भवचसा परेङ्गिताकारज्ञेन भक्तिमता प्रक्रमागतव्याहारिणा च सर्वदा प्रतिपन्नसख्यः सुखेन लङ्घयिष्यत्यलघुविस्तारमपि भगवन्तमपारपारं पारावारं कुमारः, साधयिष्यति च यत्नमन्तरेणापराण्यपि कृच्छ्रसाध्यानि प्रयोजनानि प्रायेण' [श] इति जल्पत्येव तस्मिन् स कैवर्तनायकः सविधमुपससर्प, क्षितितलोपसर्पिणा च शिरसा प्रदर्शितादरः कृत्वा प्रणाममतिचिरप्रणयीव स्पष्टवर्णोच्चारया गिरा सप्रगल्भमुवाच—'युवराज! त्वदीयविजयप्रयाणघोषणानुपदमेव सागरोपकण्ठमनुप्राप्तोऽहम्, आगत्य च मया कृतानि सर्वाण्यपि सुसूत्राणि यानपात्राणि, प्रगुणिताः समाहृतसमग्रोपकरणाः पोताः, पुञ्जितं तेष्वतिप्राज्यमशनम्, आपूरितानि स्वादुना सलिलेन कृत्स्नान्युदकपात्राणि, समारोपितमप्रमाणमिन्धनम्, [प]। अपरोऽपि

---

तीत्यर्थः । पुनः **मुखान्तरक्षिप्तदुन्दुभमणिः** मुखान्तरे-मुखमध्ये, क्षिप्त -निहित, दुन्दुभमणि -दुन्दुभस्य-जलसर्पस्य, मणिर्येन तादृशः, **इतरनाविक इव** अन्यकर्णधार इव, **दिवसमपि** सम्पूर्णदिनं व्याप्यापि, **निराकुलः** स्वस्थः सन्, **वसति** तिष्ठति, केत्याह-**रसातलगम्भीरे** पातालावधिनिम्ने, **अम्भसि** जले, **प्रकृष्टजाङ्गुलिक इव** प्रकृष्ट -उत्कृष्टो यो जाङ्गुलिक -जाङ्गुलीं-विषविद्यामधीते वेद वा य स, विषवैद्यो गारुडिको वेत्यर्थः, स इव, **दुरुत्तरास्वपि** दुष्परिणामास्वपि, मृत्युजनिकास्वपीत्यर्थः, **विषमोदकविपत्सु** विषमभूतासु-अनन्यसमासु दारुणासु वा, उदकविपत्सु-जलजन्यविपत्तिषु, पक्षे विषमिश्रिता ये मोदका -मिष्टान्नविशेषाः, तज्जन्यविपत्सु-तज्जन्यव्याधिषु, न **मुह्यति** मोहमनुभवति, किन्तु धीरहृदय एव तिष्ठतीत्यर्थः । पुनः **तैस्तैः** अनेकविधैः, **अञ्जनैः** नयनसंस्कारकजलजन्तुवसादिद्रव्यैः, **अञ्जितेक्षणः** लिप्तलोचनः, **क्षणदास्वपि** रात्रिष्वपि, **उपजातयोगिज्ञान इव** उत्पन्नयोगजदृष्टिरिव, **समस्तवस्तुजातं** निखिलवस्तुगणम्, **विज्ञातनिरवशेषविशेषं** स्वविज्ञातसमस्तभेदं यथा स्यात् तथा, **आवेदयति** बोधयति [च]। **सर्वथा** सर्वप्रकारेण, **योग्यः** निपुणः, **अयम्**, **अस्मिन्नवसरे** समुद्रयात्रावसरे, **स्वनावः** स्वकीयनौकायाः, **कर्णधारतां** वाहकताम्, **नेतुं** प्रापयितुम्, **च** पुनः, **आत्मनः** स्वस्य, **प्रणयीकर्तुं** सख्यमापादयितुं, **युज्यते** उचितः । **हि** यतः, **प्रगल्भवचसा** निर्भीकवादिना, **परेङ्गिताकारज्ञेन** परेषाम्, इङ्गित -चेष्टाविशेषान्वितः, य आकारस्तज्ज्ञेन, तत्परिचयचतुरेण, **भक्तिमता** पूज्यजनप्रीतिमता, **च** पुनः, **प्रक्रमागतव्याहारिणा** प्रासङ्गिकार्थवादिना, **अनेन** तारकेण, **सर्वदा** **प्रतिपन्नसख्यः** अधिगतमैत्रीकः सन्, **कुमारः** समरकेतुः, भवानित्यर्थः, **अलघुविस्तारमपि** अत्यन्तविस्तृतमपि, **भगवन्तम्** ऐश्वर्यवन्तम्, **अपारपारम्** उभयकूलान्वितम्, **पारावारं** समुद्रम्, **सुखेन** अनायासेन, **लङ्घयिष्यति** तरिष्यति, **च** पुनः, **यत्नम्** आयासम्, **अन्तरेणापि** विनापि, **अपराण्यपि** अन्यान्यपि, **कृच्छ्रसाध्यानि** आयाससाध्यानि, **प्रयोजनानि** फलानि, **प्रायेण** बाहुल्येन, **साधयिष्यति** सम्पादयिष्यति [श]। **इति** इत्थं, **तस्मिन्** यक्षपालिते, **जल्पत्येव** कथयति सत्येव, **स** तारकाख्यः, **कैवर्तनायकः** कर्णधाराध्यक्षः, **सविधं** निकटम्, **उपससर्प** उपाजगाम । **च** पुनः, **प्रदर्शितादरः** प्रकटितादरः सन्, **क्षितितलोपसर्पिणा** भूतलावनम्रेण, **शिरसा** मस्तकेन, **प्रणामम्** अभिवादनम्, **कृत्वा**, **अतिचिरप्रणयीव** अतिप्राचीनस्नेहीव, **स्पष्टवर्णोच्चारया** स्फुटवर्णोच्चारणिकया, **गिरा** वाचा, **सप्रगल्भं** सप्रौढिकम्, **उवाच** उक्तवान् । किमित्याह-**युवराज!** भो नृपकुमार!, अहं **त्वदीयविजयप्रयाणघोषणानुपदमेव** त्वदीय-भवदीय, यद् विजयोद्देश्यक, प्रयाण-प्रस्थान, तस्य या घोषणा-सूचना, तदनुपदमेव-तदनन्तरमेव, **सागरोपकण्ठ** समुद्रनिकटम्, **अनुप्राप्तः** आगत, **आगत्य च** उपस्थाय च, **मया** **सर्वाण्यपि** समस्तान्यपि, **यानपात्राणि** प्रवहणानि, **सुसूत्राणि** सुष्ठु सूत्रबद्धानि, **कृतानि** सम्पादितानि, पुनः **समाहृतसर्वोपकरणाः** संगृहीतसमग्रोपकरणाः, **पोताः** लघुप्रवहणानि, **प्रगुणिताः** सज्जिताः, पुनः **तेषु** पोतेषु, **अतिप्राज्यम्** अतिप्रचुरम्, **भोजन** भोजनीयं वस्तु, **पुञ्जित** राशीकृतम्, पुनः **कृत्स्नानि** सकलानि, **उदकपात्राणि** जलपात्राणि, **स्वादुना** मधुरेण, **सलिलेन** जलेन, **आपूरितानि** पूर्णीकृतानि, पुनः **अप्रमाणम्** अपरिच्छिन्नं, प्रचुरतरमित्यर्थः, **इन्धनं** काष्ठम्, समा-

देहस्थितिसाधनमधिकृतैर्यः कश्चिदर्पितः सोऽपि सर्पिस्तैलकम्बलौषधप्रायः प्रायशो विन्यस्तः समस्तोऽपि द्वीपान्तरदुरापो द्रव्याणां कलापः, स्थापिताश्च सर्वतः समारोपितसमर्थनाविकास्तीर्थेषु दृढकाष्ठगुम्फनिष्ठुरा नावः, प्रतिष्ठते अनवरतमारुह्यारुह्य तासु गृहीतनानाविधायुधः शिबिरवीरलोकः, निवर्तते नगरसंमुखमखिलोऽपि तत्तत्कार्यमङ्गीकृत्य प्रवर्तितः प्रस्थानकाले रथाश्ववारणादिर्नौतन्त्रयात्रायामनुपयुक्तः सेनापरिच्छदः, कुमारस्यापि शत्रुविजयाय सज्जीकृता विजययात्राभिधाना नौः, यदि न कश्चित् कार्यविलम्बस्ततः प्रस्थीयतामभ्युदयाय' इति [ स ]। अहं तु तद्वचनानन्तरमेव सत्वरमुपसृत्य मौहूर्तिकेन शंसितप्रस्थानक्षणस्तत्क्षणमेव राजलोकपरिवृतो गत्वा समासन्ननीरमर्णवतीरदेशं, तथैवोर्ध्वस्थितः पुरस्थितानुत्तमाङ्गावर्जनेन विनयाञ्जलिकर्मणा नर्मालापेन स्मितेन स्निग्धावलोकितेन च यथोचितं प्रयुक्तेन कृतानुव्रजनान् स्वाभिजनवृद्धबान्धवान् सुहृदो राजसेवकान् नगरलोकांश्च प्रत्येकं व्यसर्जयम् [ ह ]। अथ ससंभ्रमेण नौर्नौरिति समकालमुच्चैर्व्याहरतः प्रतीहारवृन्दस्य शब्दमाकर्ण्य तूर्णमानीयत तटाभ्यर्णमर्णवस्य नाविकगणेन नौः, तां

---

टिप्पनकम्—स्वाभिजनः-स्वकुलम् [ ह ]।

---

रोपितं निहितम् [ प ]। पुनः अपरोऽपि तदन्योऽपि, देहस्थितिसाधनं शरीरोपकरणभूतः, सर्पिस्तैलकम्बलौषधप्रायः घृततैलादिप्रचुरः, द्वीपान्तरदुरापः अन्यद्वीपदुर्लभः, यः कश्चित् कोऽपि, द्रव्याणां वस्तूनाम्, कलापः समूहः, अधिकृतैः नियुक्तजनैः, अर्पितः दत्तः, सोऽपि असावपि, प्रायशः प्रायेण, समस्तोऽपि, विन्यस्तः निवेशितः। च पुनः, समारोपितसमर्थनाविकाः समारोपिताः–सम्यगारोहिताः, समर्थाः–नौवाहनक्षमाः, नाविकाः–कर्णधारा यासु ताः, पुनः तीर्थेषु तत्तज्जलावतारस्थलेषु, दृढकाष्ठगुम्फनिष्ठुराः प्रबलकाष्ठनिवेशनदृढाः, नावः नौकाः, सर्वतः समन्ततः, स्थापिताः निवेशिताः। गृहीतनानाविधायुधः धृतविविधायुधः सन्, शिबिरवीरलोकः सेनाशूरजनः, तासु नौषु, अनवरतं सततम्, आरुह्य आरुह्य प्रत्येकम् आरुह्य, प्रतिष्ठते प्रस्थानं करोति। नौतन्त्रयात्रायां नौकाप्रधानयात्रायाम्, अनुपयुक्तः अनपेक्षितः, अखिलोऽपि सर्वोऽपि, रथाश्ववारणादिः रथ-तुरग-गजप्रभृतिः, सेनापरिच्छदः सेनापरिवारः, तत्तत्कार्यम्, अङ्गीकृत्य स्वीकृत्य, प्रवर्तितः प्रेरितः सन्, प्रस्थानकाले प्रयाणवेलायाम्, नगरसम्मुखं निवर्तते प्रत्यावर्तते। कुमारस्यापि भवतोऽपीत्यर्थः, शत्रुविजयाय शत्रुविजयनिमित्तम्, विजययात्राभिधाना अन्वर्थतदाख्या, नौः, सज्जीकृता सज्जिता। यदि कश्चित् कोऽपि, कार्यविलम्बः प्रस्थानविलम्बो न, अस्तीति शेषः, तर्हि अभ्युदयाय शत्रुविजयाय, प्रस्थीयतां प्रस्थानं विधीयताम् [ स ]। अहं तु अहं समरकेतुस्तु, तद्वचनानन्तरमेव तत्कथनानन्तरमेव, सत्वरं शीघ्रम्, उपसृत्य उपगत्य, मौहूर्तिकेन मुहूर्तनिमित्तेन, शंसितप्रस्थानक्षणः सूचितप्रस्थानमुहूर्तः सन्, तत्क्षणमेव तत्कालमेव, राजलोकपरिवृतः नृपजनपरिवेष्टितः, समासन्ननीरम् अतिसन्निहितजलम्, अर्णवतीरदेशं समुद्रतटप्रदेशम्, गत्वा, तथैव तथाविध एव, तथैवेति पाठे तेनैव प्रकारेण, राजलोकपरिवारेणैवेत्यर्थः, ऊर्ध्वस्थितः [illegible] सन्, पुरः स्थितान् अग्रे स्थितान्, स्वाभिजनवृद्धबान्धवान् सर्वस्वान् वयोवृद्धबन्धुजनान्, सुहृदः मित्राणि, च पुनः, राजसेवकान् राजकर्मचारिणः, नगरलोकान् नगरवासिजनान्, प्रत्येकम् एकैकम्, व्यसर्जयं प्रत्यावर्तयम्, [illegible]। यथोचितं यथायोग्यम्, प्रयुक्तेन कृतेन, उत्तमाङ्गावर्जनेन उत्तमाङ्गस्य–मस्तकस्य, आवर्जनेन–किञ्चिन्नमनेन, पुनः विनयाञ्जलिकर्मणा विनयपूर्वकाञ्जलिबन्धकरणेन, पुनः नर्मालापेन नैतद्वचनभाषणेन, स्मितेन मन्दहासेन, च पुनः, स्निग्धावलोकितेन प्रेमपूर्णावलोकनेन, कृतानुव्रजनान् कृतानुगमनान्, कृतानुगमनानित्यर्थः [ ह ]।

अथ अनन्तरम्, नौर्नौः आनीयतामिति शेषः, इति उच्चैः उच्चस्वरेण, समकालं युगपत्, व्याहरतः वदतः, प्रतीहारवृन्दस्य द्वारपालवर्गस्य, शब्दम् उक्तिम्, आकर्ण्य श्रुत्वा, ससंभ्रमेण त्वरायुक्तेन, नाविकगणेन कर्ण-

चाहमुपसृत्य प्रथमकृतसागरप्रणामो भक्तिप्रवणेन चेतसा शिरसा च बद्धाञ्जलिः प्राणंसिषम्, अध्यरोहं च पूर्वाधिरूढेन दूरमवनम्य दत्तहस्तावलम्बस्तारकेण [ क्ष ]। सपरिग्रहे च पुरोभागवर्तिनं मत्तवारणकमध्यमध्यास्य बद्धासने मयि कृतोत्तरीयसंवरणाश्चरणाभ्यामेव सत्वरमुपसृत्य सर्वे राजपुत्राः सपरिजनाः स्वानि स्वानि यानपात्राण्यधिरुरुहुः, प्रतस्थिरे च परिवार्य माम् [ ज्ञ ]।

अथ श्रुतिपथप्रमाथी हसन्निव समन्ततः प्रसृतनौनिवहसंक्षोभितस्य वारिधेर्धैर्यम्, कुर्वन्निव द्वीपान्तरवासिना सर्वसामन्तानामाह्वानम्, प्राहयन्निव सैन्यावकाशदानाय दश दिशोऽवधानम्, दध्वान ध्वजिन्या मुखे मुखरः प्रयाणमङ्गलशङ्खः [ अ ]। तस्य चानुप्रहतझल्लरीपटहपणवादिवाद्यनादानुसृतेन वन्दिवृन्दजयशब्दकोलाहलशालिना शकुनपाठकश्लोककलकलबहलेन गृहीततारस्वनगायनीगीतरवतरङ्गितेन विधृतकुसुमाक्षतद्विजातिमण्डलीमन्त्रोच्चारस्फारितेन तिरयता दिगन्तराणि तारगम्भीरेण रणितेन द्विगुणीकृतगमनरभसः, [ आ ], स्थगितनिःशेषसंधिरन्ध्रया दासपुरन्ध्रिदत्तपिष्टपञ्चाङ्गुलया ध्वजाग्रबद्धाभिनववर्णांशुकपताकया

---

धारवर्गेण, अर्णवस्य समुद्रस्य, तटाभ्यर्णे तटनिकटम्, तूर्णं सत्वरम्, नौ, आनीयत आनीता। च पुन, अहम्, उपसृत्य, प्रथमकृतसागरप्रणामः पूर्वं कृतसमुद्राभिवादन, बद्धाञ्जलिः रचिताञ्जलि सन्, भक्तिप्रवणेन प्रीत्युन्मुखेन, चेतसा हृदयेन, शिरसा च मस्तकेन च, तां नावम्, प्राणंसिष प्रणतवान्। च पुन, पूर्वाधिरूढेन पूर्वं तनारूढेन, तारकेण, दूर दूरपर्यन्तम्, अवनम्य आनम्रीभूय, दत्तहस्तावलम्ब दत्त –कारित, हस्तावलम्ब –स्वकरावलम्बन यस्मै तादृश सन्, अध्यारोहम् अध्यारूढवानहम् [ क्ष ]। च पुन, पुरोभागवर्तिनं अग्रभागवर्तिनम्, मत्तवारणकमध्यम् मत्तान् वारयतीति व्युत्पत्त्या प्रमादजातपतनादिनिवारकस्थानविशेषमध्यभागमित्यर्थ, मत्तवारण च सामान्यतो लोके वरण्डा इति नाम्ना ख्यातम्, अध्यास्य उपविश्य, सपरिग्रहे परिजनसहिते, मयि, बद्धासने अधिष्ठितासने सति, कृतोत्तरीयसंवरणा विहितोत्तरीयपटोपसंहारा, सपरिजनाः सपरिवारा, सर्वे राजपुत्राः राजकुमारा, चरणाभ्यामेव स्वस्वपादाभ्यामेव, सत्वर शीघ्रम्, उपसृत्य उपगत्य, स्वानि स्वानि स्वकीयानि स्वकीयानि, यानपात्राणि पोतान्, अधिरुरुहु अधिरूढवन्त। च पुन, माम्, परिवार्य परिवेष्ट्य, प्रतस्थिरे प्रस्थिता [ ज्ञ ]।

अथ अनन्तरम्, श्रुतिपथप्रमाथी श्रवणपथाभिघाती, मुखर शब्दायमान, प्रयाणमङ्गलशङ्ख प्रस्थानकालिकमङ्गलार्थशङ्ख, ध्वजिन्या सेनाया, मुखे अग्रभागे, दध्वान ध्वनितवान्, किं कुर्वन्निव ? समन्तत सर्वत, प्रसृतनौनिवहसंक्षोभितस्य प्रसृतेन नौनिवहेन नौगणेन, संक्षोभितस्य–उद्वेलितस्य, वारिधे समुद्रस्य, धैर्यं धीरताम्, हसन्निव हासेन निन्दन्निव, पुन द्वीपान्तरवासिनाम् अन्यद्वीपवास्तव्यानाम्, सर्वसामन्ताना निखिलक्षुद्रनृपाणाम्, आह्वान स्वसमीपानयन कुर्वन्निव, पुन सैन्यावकाशदानाय सैनिकसमावेशनाय, दश दिश दशसंख्यिका दिश, अवधान तत्परताम्, प्राहयन्निव प्रापयन्निव [ अ ]। अनुप्रहतझल्लरी पटह पणवादिवाद्यनादानुसृतेन अनु–पश्चात्, प्रहताना–ताडितानाम्, झल्लरी पटह पणवादीना–तत्सञ्ज्ञाना, वाद्याना–वाद्यविशेषाणा, नादेन–ध्वनिना, अनुसृतेन अनुगतेन, पुन वन्दिवृन्दजयशब्दकोलाहलशालिना वन्दिवृन्दस्य–स्तुतिपाठकगणस्य, ये जयशब्दा –जयकारा, तत्कोलाहलशोभिना, पुन शकुनपाठकश्लोककलकलबहलेन शकुनपाठकाना–प्रस्थानकालिकमङ्गलपाठकानाम्, ये श्लोका तत्कलकलबहलेन–तत्कोलाहलप्रचुरेण, पुन गृहीततारस्वनगायनीगीतरवतरङ्गितेन गृहीत –आश्रित, तारस्वन –उच्चध्वनिर्याभिस्तादृशीनां, गायनीनां–गायिकानां, गीतरवै –गानशब्दै, तरङ्गितेन–प्रचितेन, पुन विधृतकुसुमाक्षतद्विजातिमण्डलीमन्त्रोच्चारस्फारितेन विधृत–विशेषेण धृत, कुसुम–पुष्पम्, अक्षतम्–आर्द्रतण्डुलाश्च यया तादृश्या, द्विजातिमण्डल्या–द्विजसमूहेन यो मन्त्रोच्चार –आशीर्वादगर्भितमन्त्रोच्चारण, तेन स्फारितेन–विस्तारितेन, पुन दिगन्तराणि दिङ्मध्यानि, तिरयता स्थगयता, पुन तारगम्भीरेण उच्चगम्भीरेण, तस्य शङ्खस्य, रणितेन ध्वनिना, द्विगुणीकृतगमनरभस द्विगुणीकृतगमनवेग [ आ ]। एवंविधोऽहं समरकेतु, पुन कीदृश ? नावा नौकया, उह्यमान तार्यमाण, कीदृश्या ? स्थगितनिःशेषसन्धिरन्ध्रया स्थगितानि–पूरितानि, निःशेषाणि–समस्तानि, सन्धिरन्ध्राणि–सन्धिच्छिद्राणि यस्यास्तादृश्या, पुन दासपुरन्ध्रिदत्तपिष्टपञ्चाङ्गुलया दासस्य–भृत्यस्य, पुरन्ध्या–कुटुम्बिन्या, दत्त–निवेशितम्,

समाहृतसमस्तनिजोपकरणेन सत्यपि स्वकर्मसावधाने संनिधानवर्तिनि नाविकव्राते विनीतताप्रतिपादनाय कर्णधारतां प्रतिपद्य सद्यो धृतारित्रेण तारकेणाधिष्ठितया पृष्ठतोऽनुकूलपवनास्फालनतरङ्गितेन फेनपाण्डुना सलिलसंघातेन पुरस्ताच्च सितपटेन प्रवर्त्यमानया व्रजन्त्याप्यतिजवेन दुर्विभावत्वाद् गतेरनुज्झितस्थानयेवोह्यमानया नावोह्यमानः [ इ ], प्रतिवेलमपसरत्सानुविस्तारान् निरन्तरोपलक्ष्यमाणसान्तरालतरुगणान् सुवेलगिरिदर्शनाय सेनया सह प्रचलितानिवावलोकयन् वेलावनाचलान् [ ई ], अलघुविस्तारपिहितदिक्चक्रेण चकितनक्रचक्रोन्मुच्यमानपुरोवर्त्मना पवनासूत्रितविचित्रभङ्गाभिर्गाढसंमर्दभयादूर्मिमालाभिरिव वारिधेरन्तरिक्षमुत्पतिताभिः फेनमुक्ताफलशङ्खधवलाभिर्ध्वजपताकाभिरुपपादितवनावनीविलासेन संसर्पता विविधकवचशस्त्रशिरस्त्रपूरितेन पोतसंतानेन पर्वतसेतुनेवापरेण सीमन्तयन् दक्षिणां दिशं क्षणेनैवादृश्यतीरभागमविभाव्यमान-

---

टिप्पनकम्—ऊह्यमानया वितर्क्यमाणया [ इ ]।

---

पिष्टपञ्चाङ्गुलं-पिष्टातकाभिधवर्णचूर्णद्रवार्द्रितं, पञ्चाङ्गुलं-पञ्चाङ्गुलि समाहारो यस्यां तादृश्या, पुनः ध्वजाग्रबद्धाभिनववर्णांशुकपताकया ध्वजाग्रे-पताकास्तम्भाग्रे, बद्धा-लम्बिता, अभिनववर्णांशुकपताका-नवीनवर्णविशिष्टश्लक्ष्णवस्त्ररूपपताका यस्यां तादृश्या, पुनः समाहृतसमस्तनिजोपकरणेन समाहृतानि-संगृहीतानि, समस्तानि-अशेषाणि, निजोपकरणानि-निजानि नौवहनोपकरणवस्तूनि येन तादृशेन, तथा स्वकर्मसावधाने स्वकार्यविहितहृदये, नाविकगणे कर्णधारगणे, संनिधानवर्तिनि निकटवर्तिनि, सत्यपि, विनीततप्रतिपादनाय विनीततप्रकटनाय, कर्णधारतां नाविकतां, प्राप्य, सद्यः तत्क्षणम्, धृतारित्रेण धृतं-गृहीतम्, अरित्रं-जलोत्क्षेपकं येन तादृशेन, तारकेण, अधिष्ठितया अध्यासितया, पुनः पृष्ठतः पश्चात्, अनुकूलपवनास्फालनतरङ्गितेन अनुकूलवाय्वाघाततरङ्गितेन, फेनपाण्डुना फेनप्रयुक्तपाण्डुवर्णेन, सलिलसंघातेन जलसमूहेन, पुरस्ताच्च अग्रतश्च, सितपटेन श्वेतवस्त्रेण, तदात्मकपताकयेत्यर्थः, प्रवर्त्यमानया प्रेर्यमाणया, पुनः अतिजवेन अतिवेगेन, व्रजन्त्यापि गच्छन्त्यापि, गतेः गमनस्य, दुर्विभावत्वात् दुर्लक्षत्वात्, अनुज्झितस्थानयेव अत्यक्तस्थानयेव, ऊह्यमानया तर्क्यमाणया [ इ ]। पुनः कीदृशोऽहम्? प्रतिवेलं प्रतितटम्, अपसरत्सानुविस्तारान् अपसरन्तः-अपगच्छन्तः, सानुविस्ताराः-पर्वतसम्बन्धिसमप्रदेशविस्तारा येषु तादृशान्, निरन्तरोपलक्ष्यमाणसान्तरालतरुगणान् निरन्तरम्-अव्यवहितं यथा स्यात् तथा, उपलक्ष्यमाणः-दृश्यमानः, सान्तरालानां-व्यवहितानां, तरूणां गणः-समूहो येषु तादृशान्, वेलावनाचलान् तटस्थितवनव्याप्तपर्वतान्, अवलोकयन् निरीक्षमाणः, कीदृशानिव? सुवेलगिरिदर्शनाय सुवेलाख्यपर्वतदर्शनाय, सेनया सह प्रचलितानिव प्रस्थितानिव, अत्र तरुगणस्य सेनास्थानीयत्वं पर्वतस्य च नृपस्थानीयत्वं बोध्यम् [ ई ]। पुनः कीदृशोऽहम्? पोतसंतानेन जलयानगणेन, दक्षिणां दिशं सीमन्तयन् केशवेशयुततामिवापादयन्, व्याप्नुवन्नित्यर्थः। कीदृशेन पोतसन्तानेन? अलघुविस्तारपिहितदिक्चक्रेण अलघुविस्तारेण-अतिविस्तारेण, पिहितम्-आवृतम्, दिक्चक्रं-दिङ्मण्डलं येन तादृशेन, पुनः चकितनक्रचक्रोन्मुच्यमानपुरोवर्त्मना चकितेन-सम्भ्रान्तेन, नक्रचक्रेण-जलजन्तुगणेन, उन्मुच्यमानं-परित्यज्यमानं, पुरोवर्त्म-अग्रभागो यस्य तादृशेन, पुनः ध्वजपताकाभिः ध्वजदण्डलम्बितपताकाभिः, उपपादितवनावनीविलासेन उपपादितः-निष्पादितः, वनावन्याः-लिङ्गसाम्यात् वनभूमिरूपवनितायाः, विलासः-शृङ्गारचेष्टा येन तादृशेन, कीदृशीभिः? पवनासूत्रितविचित्रभङ्गाभिः पवनेन-स्वोद्गमितवायुना, आ-समन्तात्, सूत्रिताः-रचिताः, विचित्राः-विलक्षणाः, भङ्गाः-वक्रभावा विच्छित्तयो वा यासां तादृशीभिः, पुनः गाढसंमर्दभयात् अत्यन्तपोतसंघर्षभयात्, अन्तरिक्षं गगनम्, उत्पतिताभिः उच्छलिताभिः, वारिधेः समुद्रस्य, ऊर्मिमालाभिरिव तरङ्गमालाभिरिवेत्युत्प्रेक्षा, पुनः फेन मुक्ताफल-शङ्खधवलाभिः फेन-मुक्ताफल-शङ्खसदृशश्वेताभिः, यद्वा फेन-मुक्ताफल-शङ्खधवलाभिरिति ऊर्मिमालाभिरित्यस्यापि विशेषणम्, पुनः संसर्पता सञ्चरता, पुनः विविधकवचशस्त्रशिरस्त्रपूरितेन विविधैः, कवचैः-वर्मभिः, शस्त्रैः-खड्गादिभिः, शिरस्त्रैः-शिरस्त्राणकरणविशेषैः, पूरितेन-पूर्णेन, केनेव? अपरेण अन्येन पूर्वं रामसेनावतरणसमयात् भिन्नेनेति भावः, पर्वतसेतुनेव पर्वतरूपसेतुनेव, क्षणेनैव निमेषमात्रेणेव,

पर्यन्तग्रामनगरसंनिवेशं प्रदेशमासादयम् [ उ ] । ततः प्रभृति सैकतेषु क्षितिमर्कोपलेषु ज्वलनोद्गतिं जलमानुषेषु जनपदप्रचारमशनिभीतागतक्षितिधरेषु पक्षिव्यवहारं जलचरेषु तिर्यग्जातिं विद्रुमवनेषु काननस्फातिमीक्षमाणः [ ऊ ], पृष्ठतो वहद्भिरप्रतीक्षितसमग्रसंगलत्पदातितन्त्रैः श्रुत्वा श्रुत्वानुचरपुरुषेभ्यः प्रयाणवार्तामतिजवेन निजमण्डलेभ्यः प्रधावितैरनीकपतिभिः सामन्तैश्च भयसम्भ्रान्तैरनवरतमनुसृतगतिः [ ऋ ], गत्वा स्थानस्थानेषु लब्धोदयानहितोपचारैः परमुपचयं प्राप्तान् सर्वतः समासादितप्रसरानाविष्कृतानेकविकारानवरतकृतरुजो जनस्य दुष्टव्रणानिव नृपान् काश्चित् तन्त्रशक्त्या कांश्चिन्मन्त्रशक्त्या कांश्चिन्निशितशस्त्रव्यापारेण कांश्चित् क्षारैर्दूतवचनैः कांश्चिद् रक्तापकर्षणेन कांश्चित् तीक्ष्णक्षुरप्रभेदेन कांश्चिदेकदेशदहनेन कांश्चित् सर्वमण्डलोपमर्दनेन दर्पज्वरमत्याजयम् [ ॠ ], उज्झितोष्मणश्च प्रकटितप्रसन्नमुखरागान् विगलितोन्नतीनविध-

---

टिप्पनकम्—मण्डल-वृत्ता देशाश्च [ ॠ ]।

---

**अदृश्यतीरभागम्** अदृश्य –अनुपलक्ष्य , तीरभागो यस्मिंस्तादृशम्, **अविभाव्यमानपर्यन्तग्रामनगरसन्निवेशम्** अविभाव्यमान –अप्रतीयमान , पर्यन्तग्रामनगराणां–प्रान्तस्थग्रामनगराणां, सन्निवेशो यस्मिंस्तादृशम्, अतिदूरमित्यर्थं , **प्रदेशं** समुद्रमध्यदेशम्, **आसादय** प्राप्तवान् असि [ उ ]। ततः तस्मात्, प्रदेशादित्यर्थं , **प्रभृति** आरभ्य, न तु ततः प्राक्, **सैकतेषु** सिकतामयस्थलेषु, **क्षितिं** भूमिम्, पुनः **अर्कोपलेषु** सूर्यकान्तशिलासु, न त्वन्यत्र, **ज्वलनोद्गतिं** पावकोद्गमम्, पुनः **जलमानुषेषु** जलीयमनुष्येषु न त्वन्यमानुषेषु, **जनपदप्रचारं** मनुजचरणव्यवहारम्, पुनः **अशनिभीतागतक्षितिधरेषु** अशने –वज्रात्, भीता , अत एव आगता ये क्षितिधरा –पर्वता , तेष्वेव, **पक्षिव्यवहारं**–पक्षिण –पक्षवन्त इमे इत्यादिव्यवहारम्, **जलचरेषु** जलीयहस्त्यादिषु, **तिर्यग्जातिं** पशुजातिम्, पुनः **विद्रुमवनेषु** प्रवालवनेषु **काननस्फातिं** वनविस्तारम्, **ईक्षमाणः** पश्यन् [ ऊ ]। पुनः **भयसम्भ्रान्तैः** भयसङ्क्षुब्धै , **अनीकपतिभिः** सेनानायकै , च पुनः , **सामन्तैः** क्षुद्रनृपै , **अनवरतं** निरन्तरम्, **अनुसृतगतिः** अनुगतगतिक , कीदृशै ? **पृष्ठतः** पश्चात्, **वहद्भिः** गच्छद्भि , **अप्रतीक्षितसमग्रसंगलत्पदातितन्त्रैः** अप्रतीक्षित –अनपेक्षित , समग्राणां–समस्तानां, संगलतां–सार्थभ्रष्टानां, पदातीनां–पादगामिसैन्यानां, तन्त्र –समूहो यैस्तादृशै , पुनः **अनुचरपुरुषेभ्यः** अनुचरजनेभ्य , **प्रयाणवार्तां** मदीयप्रस्थानप्रवृत्तिम्, **श्रुत्वा श्रुत्वा** असकृत् श्रवणगोचरीकृत्य, **अतिजवेन** अतिवेगेन, **निजमण्डलेभ्यः** स्वस्वराष्ट्रेभ्य , **प्रधावितैः** कृतप्रधावनै [ ऋ ]।

**गत्वा** तत्र तत्रोपसृत्य, **जनस्य** लोकसम्बन्धिन , **दुष्टव्रणानिव** दुष्टानि–क्षरद्रक्तपूयादीनि क्षतानीव, **स्थानस्थानेषु** तत्तत्स्थानेषु, **लब्धोदयान्** प्राप्ताधिपत्यान्, पक्षे प्राप्तोद्गमान्, पुनः **अहितोपचारैः** लोकाहितकरणै , पक्षे अपथ्याचरणै , **परम्** उत्कृष्टम्, **उपचयम्** अभ्युदय, पक्षे वृद्धिं, **प्राप्तान्**, पुनः **सर्वतः** सर्वत्र, **समासादितप्रसरान्** प्राप्तप्रसारान्, पुनः **आविष्कृतानेकविकारान्** आविष्कृता –प्रकटिता , अनेके विकारा –काम क्रोध लोभ-मोह-मदरूपा , पक्षे व्यथा यैस्तादृशान्, पुनः **अनवरतकृतरुजः** निरन्तरविहितलोकपीडान्, पक्षे निरन्तरविहितज्वरान्, **काश्चित्** कतिपयान्, **नृपान्** प्रतिकूलनृपतीन्, **तन्त्रशक्त्या** प्रधानशक्त्या, पक्षे औषधशक्त्या, पुनः **कांश्चित्** कतिपयान्, **मन्त्रशक्त्या** मन्त्रणबलेन, पक्षे मन्त्रमाहात्म्येन, पुनः **कांश्चित्** कतिपयान्, **निशितशस्त्रव्यापारेण** तीक्ष्णशस्त्रप्रहारेण, पक्षे तीक्ष्णच्छुरिकयोद्भेदनेन, पुनः **कांश्चित्** कतिपयान्, **क्षारैः** रूक्षै , पक्षे क्षारद्रवनिक्षेपै , **दूतवचनैः** दूतोक्तिभि , पुनः **कांश्चित्** कतिपयान्, **रक्तापकर्षणेन** रुधिराकर्षणेन, पक्षे अनुरक्तजनापकर्षणेन, पुनः **कांश्चित्** कतिपयान्, **तीक्ष्णक्षुरप्रभेदेन** तीक्ष्णेन, क्षुरेण–बाणेन, यद्वा क्षुरप्रेण–बाणविशेषेण, य प्रभेद –मार्मिकभेदनं, भेद –सामान्यतो भेदनं तेन, पक्षे तीक्ष्णो य क्षुर –नापितास्त्रं तेन य प्रभेद –प्रकृष्टभेदनम्, यद्वा क्षुरप्र –घासच्छेदनास्त्रं तेन यो भेदस्तेन, पुनः **कांश्चित्** कतिचित्, **एकदेशदहनेन** एकदेशस्य–शरीरावयवस्य, एकजनपदस्य च, पक्षे व्रणैकदेशस्य, दहनेन–दाहेन, पुनः **कांश्चित्** कतिचित्, **सर्वमण्डलोपमर्दनेन** सर्वस्य–समस्तस्य, मण्डलस्य–देशस्य अमात्यादिवर्गस्य वा, पक्षे वर्तुलव्रणभागस्य, उपमर्दनेन–विघटनेन, पक्षे समीपतो मर्दनेन, **दर्पज्वरं** गर्वोष्माणम्, **अत्याजयम्** व्यमोचयम् [ ॠ ]। च पुनः , **उज्झितोष्मणः**

मानगतीनभिषेकविधिना पट्टबन्धेनान्यैश्च निर्वृतिकरै राज्यदानादिभिर्मधुरोपचारैः पुनस्तामेव प्राक्तनीं प्रकृतिमानयम् [ ल ] । आत्मीकृतासन्नसामन्तचक्रश्च क्रमेण निरन्तरक्रमुकवनानि, प्रतिनगरमुपलक्ष्यमाणानेकभूमिकप्रभूतप्रासादानि, स्थानस्थानदृश्यमाननानामणिसुवर्णरजताकराणि, तत इतः पुञ्जितमहाप्रमाणशुक्तिकूटप्रकटितमौक्तिकप्राचुर्याणि, चन्दनविटपवृतिपरिक्षेपरक्षितक्षेत्रवलयानि, संपतत्समुद्रचरमहापक्षिरक्षणाक्षणिकवनपालपालितारामबालवृक्षाणि, बन्धकीजनावन्ध्यग्रामतरङ्गिणीतीरतमालतरुनिकुञ्जानि, देशान्तरापतदनेकसांयात्रिकप्रवेशनिरवकाशपर्यन्तानि, दुर्गतगृहेष्वपि प्राप्यनरपतिभूषणोचितानन्तरत्नानि रेणुगगनयोत्सृज्य-

---

टिप्पनकम्—ऊष्मा-दर्पं उष्मत्वं च । प्रसन्नमुखरागान् एकत्र गताभ्रभागरक्तत्वान्, अन्यत्र प्रसादवद्वक्त्रविकारान् । विगलितोन्नतीन् गतोदयांश्च [ गतोदयान् विगलितवृद्धींश्च ] । अविद्यमानगतीन् एकत्र अविद्यमानपूयप्रवाहान्, अन्यत्र अविद्यमानप्रचारान् । अन्यैश्च निर्वृतिकरै राज्यदानादिभिर्मधुरोपायैः एकत्र घृतादिवितरणैः, अन्यत्र राज्यादिप्रदानैः [ ल ] । क्रमुकं-पूगीफलम् । बन्धकी-स्वैरिणी [ ल ] ।

---

मुक्तदर्पज्वरान्, पक्षे त्यक्ततापान्, पुनः प्रकटितप्रसन्नमुखरागान् प्रकटितावन्मुखविकारान् पक्षे प्रकर्षेण गताभ्रभागरक्तत्वान्, पुनः विगलितोन्नतीन् निवृत्ताभ्युदयान्, पक्षे निवृत्तवृद्धीन्, पुनः अविद्यमानगतीन् अविद्यमानजीवनोपायान् अविद्यमानप्रचारान् वा, पक्षेऽविद्यमानपूयप्रवाहान्, तानिति शेषः, अभिषेकविधिना स्नपनविधिना, पक्षे प्रक्षालनविधिना, पट्टबन्धेन पट्टे-राजसिंहासने, बन्धेन-निवेशनेन, पक्षे व्रणोपरि वस्त्रवेष्टनेन, च पुनः, अन्यैः तदतिरिक्तैः, राज्यदानादिभिः राज्यार्पणप्रभृतिभिः, पक्षे आज्यदानादिभिः घृतदानादिभिः, निर्वृतिकरैः सुखजनकैः, मधुरोपचारैः प्रियचिकित्साभिः, पक्षे मनोज्ञव्यवहारैः, तामेव, प्राक्तनीं पुरातनीम्, प्रकृतिं राष्ट्रं पक्षे स्वभावं स्वस्थतामित्यर्थः, आनयं प्रापयम् [ ल ] । च पुनः, आत्मीकृतासन्नसामन्तचक्रः आत्मीकृतम्-आत्मतामापादितम्, स्वायत्तीकृतमित्यर्थः, आसन्नानां-सन्निहितानां, सामन्तानां-लघुनृपाणां, चक्रं-मण्डलं येन तादृशः सन्, द्वीपान्तराणि अन्यद्वीपान्, प्रसाधयन् परिभ्रमणेन अलङ्कुर्वन्, यद्वा वशीकुर्वन्नित्यर्थः, सुवेलनामानं तत्स्थेशकम्, अचलराजं पर्वतराजम्, अभजम् अगच्छम्, इत्यग्रेणान्वेति । कीदृशानि द्वीपान्तराणि ? निरन्तरक्रमुकवनानि निरन्तराणि-निबिडानि, क्रमुकवनानि-पूगीफलकाननानि येषु तादृशानि, पुनः प्रतिनगरं नगरे नगरे, उपलक्ष्यमाणानेकभूमिकप्रासादानि उपलक्ष्यमाणाः-दृश्यमानाः, अनेकभूमिकाः-अनेकखण्डकाः, प्रभूताः-प्रचुराः, प्रासादाः-हर्म्याणि येषु तादृशानि, पुनः स्थानस्थानदृश्यमाननानामणिसुवर्णरजताकराणि स्थानस्थानेषु-तत्तत्स्थानेषु, दृश्यमानाः नानामणीनां-हीरकमौक्तिकादिमणीनां, सुवर्णानां रजतानां च, आकराः-खनयो येषु तादृशानि, पुनः इतस्ततः अत्र तत्र, पुञ्जितमहाप्रमाणशुक्तिकूटप्रकटितमौक्तिकप्राचुर्याणि पुञ्जितानां-संहतानां, महाप्रमाणानाम्-अधिकप्रमाणकानां, शुक्तीनां, कूटेन-राशिना, प्रकटितम्-आविष्कृतं, मौक्तिकानां-मुक्तामणीनां, प्राचुर्यं-बाहुल्यं येषु तादृशानि, पुनः चन्दनविटपवृतिपरिक्षेपरक्षितक्षेत्रवलयानि चन्दनविटपवृत्या-चन्दनशाखानिर्मितया, वृत्या-प्राकारेण, यः परिक्षेपः-परिवेष्टनं, तेन रक्षितं क्षेत्रवलयं-केदारमण्डलं येषु तादृशानि, पुनः संपतत्समुद्रचरमहापक्षिरक्षणाक्षणिकवनपालरक्षितारामबालवृक्षाणि संपतद्भ्यः आपतद्भ्यः, समुद्रचरेभ्यः-समुद्रसञ्चारिभ्यः, महापक्षिभ्यः-पक्षिराजेभ्यः, रक्षणे-पुष्पफलादिसंरक्षणे, अक्षणिकाः-स्थायिनः, व्यग्रा वा, ये वनपालाः-उद्यानपालाः, तैः रक्षिताः-पालिताः, आरामस्य-उद्यानस्य, बालवृक्षाः-नववृक्षा येषु तादृशानि, पुनः बन्धकीजनावन्ध्यग्रामतरङ्गिणीतीरतमालतरुनिकुञ्जानि बन्धकीजनैः-कुलटाजनैः, अवन्ध्याः-सहिताः, ग्रामतरङ्गिणीनां-ग्रामनदीनाम्, तीरेषु तीरवर्तिनः, तमालतरूणां-तमालवृक्षाणां, निकुञ्जाः-लतामण्डपा येषु तादृशानि, पुनः देशान्तरापतदनेकसांयात्रिकप्रवेशनिरवकाशपर्यन्तानि देशान्तरेभ्यः-अन्यदेशेभ्यः, आपतताम्-आगच्छताम्, अनेकेषां, सांयात्रिकानां-पोतवणिजां, प्रवेशेन, निरवकाशाः-अवकाशशून्याः, परिपूरिता इत्यर्थः, पर्यन्ताः-प्रान्तभूमयो येषु तादृशानि, पुनः दुर्गतगृहेष्वपि दरिद्रगृहेष्वपि, प्राप्यनरपतिभूषणोचितानन्तरत्नानि प्राप्याणि-लभ्यानि, नरपतिभूषणोचितानि-राजाभरणयोग्यानि, महार्हाणीत्यर्थः, अनन्तानि-असंख्येयानि रत्नानि येषु तादृशानि, पुनः रेणुगणनया

मानजात्यजातरूपाणि [ लृ ], प्रत्यहं च स्वीकृतसलिलमध्यसंचारणोचिताञ्जनैरग्नितैलादिद्रव्यसंग्रहपरैः कूपस्तम्भानुत्तम्भयद्भिः सितपटानास्तृणद्भिर्नाङ्गरानाहरद्भिः स्वादुजलकूपिकासु फलकसन्धिरन्ध्राणि सर्वतः स्थगयद्भिः पोतिकैरशून्यवेलाकूलनगराणि [ ए ], उभयतो वेणुकर्परावरणकृतरक्षेष्वसंकीर्णखरताडपर्णकोत्कीर्ण-कर्णाटादिलिपिषु पुस्तकेषु विरलमवलोक्यमानसंस्कृतानुविद्धस्वदेशभाषानिबद्धकाव्यप्रबन्धानि [ ऐ ], स्तोकार्यलोकानि, स्वल्पधर्माधर्मविवेकानि, विरलवर्णाश्रमाचाराणि, परिमितपाखण्डिव्यवहाराणि, रुचिरोद्भटस्त्रीवेषरचनानि, दुरवबोधभाषावचनानि [ ओ ], स्वभावभीषणाकारैर्विकृतवेषाडम्बरधारिभिः संनिधानवर्तितया यमादिवागतकार्यैस्त्रिशङ्कोरिव प्रनष्टास्पृश्यसन्निधिपरिहारवासनै रावणादिवोत्पन्नपरदार-ग्रहणाभिलाषैर्लङ्कानिशाचरलोकादिव संक्रान्तकायकालकान्तिभिः शब्दशास्त्रकारैरिव विहितह्रस्वदीर्घव्यञ्जन-

---

धूलिपुञ्ज्या, **उत्सृज्यमानजात्यजातरूपाणि** उत्सृज्यमानानि-उत्क्षिप्यमाणानि, अपसार्यमाणानीत्यर्थः, जात्यानि-प्रश-स्तानि, जातरूपाणि-सुवर्णानि येषु तादृशानि [ लृ ], च पुनः, **प्रत्यहं** प्रतिदिनम्, **स्वीकृतसलिलमध्यसंचारणोचिताञ्जनैः** स्वीकृत-गृहीत, सलिलमध्यसंचारणाय-जलमध्यप्रचारणाय, उचित-योग्यम्, अञ्जन-नेत्रसंस्कारककज्जलविशेषो यैस्तादृशैः, पुनः **अग्नितैलादिद्रव्यसंग्रहपरैः** अग्नितैलादिकस्य-शीताभिभावकद्रव्यस्य, संग्रहे-सञ्चये, परैः सक्तैः, पुनः **कूपस्तम्भान्** कूपो नाम नावादौ रज्ज्वाधारः काष्ठमयो दण्डः, तद्दण्डान्, **उत्तम्भयद्भिः** उत्तम्भयद्भिः, पुनः **सितपटान्** श्वेतवस्त्राणि, **आस्तृणद्भिः** आस्तृणद्भिः, पुनः **नाङ्गरान्** पोतगतिरोधकान् 'नागर' इति प्रसिद्धान् नौकोपकरणविशेषान्, **आहरद्भिः** तदानयद्भिः, पुनः **स्वादुजलकूपिकासु** मधुरजलशालिकाष्ठादिनिर्मितकृत्रिमक्षुद्रकूपेषु, **फलकसन्धि-रन्ध्राणि** फलकसन्धिषु-तदीयकाष्ठपट्टसंश्लेषणस्थानेषु यानि रन्ध्राणि-छिद्राणि तानि, **स्थगयद्भिः** आच्छादयद्भिः काष्ठ-खण्डादिनिवेशेन पूरयद्भिः, **पोतिकैः** पोतवाहकैः **अशून्यवेलाकूलनगराणि** अशून्यानि-अरहितानि, अधिष्ठितानीति यावत्, वेलाया-कच्छे, कूले-तीरे च, यद्वा वेलाकूले-तटप्रान्ते नगराणि येषु तादृशानि [ ए ], पुनः पुस्तकेषु, **विरलम्** अल्पं यथा स्यात् तथा, **अवलोक्यमानसंस्कृतानुविद्धस्वदेशभाषानिबद्धकाव्यप्रबन्धानि** अवलोक्यमानाः-उप-लभ्यमानाः, संस्कृतानुविद्धाभिः-संस्कृतभाषामिश्रिताभिः, स्वदेशभाषाभिः-स्वाभिजनभाषाभिः, निबद्धाः-प्रणीताः, काव्य-प्रबन्धाः-काव्यग्रन्था येषु तादृशानि, कीदृशेषु पुस्तकेषु ? **उभयतः** भागद्वये, **वेणुकर्परावरणकृतरक्षेषु** वेणुकर्परूपाभ्या-पाटितवंशखण्डरूपाभ्याम्, आवरणाभ्याम्-आवेष्टनाभ्यां, कृता रक्षा येषां तादृशेषु, पुनः **असंकीर्णखरताडपर्णकोत्कीर्ण-कर्णाटादिलिपिषु** असंकीर्णेषु-विस्तृतेषु, खरेषु तीक्ष्णेषु कठिनेषु वा, ताडपर्णकेषु-तालपत्रेषु, उत्कीर्णाः-उत्कीर्य लिखिताः, कर्णाटादिलिपयः-कर्णाटादिदेशाक्षराणि येषु तादृशेषु [ ऐ ], पुनः **स्तोकार्यलोकानि** स्तोकाः-अल्पाः, आर्यलोकाः-"कर्तव्य-माचरन् काममकर्तव्यमनाचरन्। तिष्ठति प्रकृताचारे यः स आर्य इति स्मृतः ॥" इत्यन्यत्रोक्ता आचारवन्तो जना येषु तादृशानि पुनः **स्वल्पधर्माधर्मविवेकानि** अत्यल्पधर्माधर्मविभागानि, पुनः **विरलवर्णाश्रमाचराणि** स्वल्पब्राह्मणादिवर्ण-गार्हस्थ्याद्याश्रमोचिताचाराणि, पुनः **परिमितपाखण्डिव्यवहाराणि** परिमिताः-परिगणिताः, प्रचुरिताः, अल्पा इति यावत्, पाखण्डिनां-पापखण्डनकृतां, व्यवहाराः-आचारा येषु तादृशानि, पुनः **परिमितरुचिरोद्भटस्त्रीवेषरचनानि** परिमिता-परिगणिता, रुचिरा-मनोहरा, उद्भटा-आडम्बरपूर्णा च, स्त्रीणां वेषरचना-वेषविन्यासो येषु तादृशानि, पुनः **दुरवबोधभाषावचनानि** दुरवबोधा-दुर्ज्ञेयार्था, भाषा-वचनानि तद्रचितपदवाक्यानि च येषु तादृशानि [ ओ ], पुनः **पन्नगैः** सर्पैः, **महारत्ननिधानानीव** उत्तमरत्ननिधीनिव, **निषादाधिपैः** चाण्डालजातिविशेषाधिपैः, **संरक्षितानि** सम्यक्पालितानि, कीदृशैः ? **स्वभावभीषणाकारैः** स्वभावतो भयानकाकारैः, पुनः **विकृतवेषाडम्बरधारिभिः** विकृतः-बीभत्सो यो वेषाडम्बरः-वेषविस्तारः, तद्धारणशीलैः, पुनः **सन्निधानवर्तितया** दक्षिणदिगवस्थितयमनिकटवर्तितया, **यमादिव** यमसकाशादिव, **आगतकार्यैः** प्राप्तघातुकवृत्तिकैः, पुनः **त्रिशङ्कोरिव** त्रिशङ्कुः-नृपविशेषः, तद्रूपहेतोरिव, **प्रनष्टास्पृश्यसन्निधिपरिहारवासनैः** प्रनष्टा-विध्वस्ता, अस्पृश्यसन्निधिपरिहारस्य-स्पर्शायोग्यवस्तुसामीप्यपरित्यागस्य, वासना-संस्कारो येषां तादृशैः, पुनः **रावणादिव** रावणरूपहेतोरिव, **उत्पन्नपरदारग्रहणाभिलाषैः** उत्पन्नः परदारग्रह-णस्य-पराङ्गनाऽऽकर्षणस्य, अभिलाषः-वाञ्छा येषां तादृशैः, पुनः **लङ्कानिशाचरलोकादिव** लङ्कावास्तव्यराक्षसजनादिव,

कल्पनैरनल्पताडपत्रताडङ्कपूरितैकैककर्णच्छिद्रैरन्यायप्रियतया च शस्त्रिका अप्यङ्गीकृतातिविकटकलहाः कटीभागेनाकलयद्भिः [ औ ] काललोहकटकान्यपि नितान्तमुखरनिष्ठुराणि प्रकोष्ठगतानि धारयद्भिर्दग्धस्थाणुभिरिवोपलब्धचैतन्यैरञ्जनगिरिशिलास्तम्भैरिवोपजातहस्तपादैः पन्नगैरिव महारत्ननिधानानि निषादाधिपैः संरक्षितानि, प्रसाधयन् द्वीपान्तराणि [ अं ] दूरादेव दृश्यमानश्यामवनलेखमम्बरोल्लेखिना शिखरसंघातेन लङ्घिताखिलाशामुखमुदयास्तशैलमेखलामूलमिलितपूर्वपाश्चात्यभागमसकृद्दर्शितमुग्धमौक्तिकोल्लासह्रासया प्रारब्धपरिहासयेव लवणजलनिधिवेलया वीचिहस्तापवर्जितैः पयोभिरनवरतमाहन्यमानं सुवेलनामानमचलराजमव्रजम् [ अः ]।

तस्य च शिखरिणः स्वभावरमणीयेषु, सर्वतः स्तबकिततिलकचम्पकाशोकबकुलेषु, कलहायमान-

---

टिप्पनकम्—शब्दशास्त्रकारैरिव विहितह्रस्वदीर्घव्यञ्जनकल्पनैः एकत्र कृतह्रस्वदीर्घव्यञ्जनसंज्ञाविधानैः, अन्यत्र कृतलघुदीर्घकूर्चकर्तनैः। शस्त्रिका अप्यङ्गीकृतविकटकलहा एकत्र कलहः—युद्धम्, [ अन्यत्र ] फलकम् [ औ ]। निषादाधिपाः—शबरपतयः [ अं ]।

---

**संक्रान्तकायकालकान्तिभिः** संक्रान्ताः—समर्पिताः, कायकालकान्तयः—देहकृष्णद्युतयो येषु तादृशैः, पुनः **शब्दशास्त्रकारैरिव** व्याकरणकारैरिव, **विहितह्रस्वदीर्घव्यञ्जनकल्पनैः** विहिता—कृता, ह्रस्वदीर्घाणां—लघुबृहद्रूपाणां, व्यञ्जनानां—विशिष्टाञ्जनलेपानां श्मश्रूणां वा, कल्पना—रचना कर्तनं वा यैस्तादृशैः, पक्षे ह्रस्वानां—ह्रस्वसंज्ञकानां, दीर्घाणां—दीर्घसंज्ञकानां स्वराणां, व्यञ्जनानां—हलां च कल्पना संकेतो यैस्तादृशैः, पुनः **अनल्पताडपत्रताडङ्कपूरितैकैककर्णच्छिद्रैः** अनल्पं—दीर्घं, यत् ताडपत्रं—तालपर्णं, तद्रूपैः, ताडङ्कैः—तदाख्यकर्णाभरणैः, पूरितम्—एकैकस्य कर्णस्य, छिद्रं—विवरं यैस्तादृशैः, पुनः **अन्यायप्रियतया** अन्यायरसिकतया, **शस्त्रिका अपि** छुरिका अपि, **अङ्गीकृतातिविकटकलहाः** अङ्गीकृताः—स्वीकृताः, अतिविकटाः—अतिविकरालाः, पक्षे अतिविस्तृताः, कलहाः—युद्धानि, पक्षे फलका याभिस्ताः, **कटीभागेन** कटीप्रदेशेन, **आकलयद्भिः** धारयद्भिः, [ औ ], पुनः **प्रकोष्ठकगतानि** मणिबन्धस्थितानि, **काललोहकटकान्यपि** कृष्णलोहमयानि वलयान्यपि, **नितान्तमुखरनिष्ठुराणि** अत्यन्तवाचालकठोराणि, धारयद्भिः, पुनः **उपलब्धचैतन्यैः** प्राप्तचैतन्यैः, **दग्धस्थाणुभिरिव** दग्धनिष्फलशाखावृक्षैरिवेत्युत्प्रेक्षा, पुनः **उपजातहस्तपादैः** उत्पन्नकरचरणैः, **अञ्जनगिरिशिलास्तम्भैरिव** श्यामलाचलशिलारचैः स्तम्भैरिवेति चोत्प्रेक्षा [ अं ], कीदृशमचलराजम्? **दूरादेव** दूरदेशादेव, **दृश्यमानश्यामवनलेखं** दृश्यमाना—उपलक्ष्यमाणा, श्यामवनलेखा—श्यामवनराजिर्यस्मिंस्तादृशम्, पुनः **अम्बरोल्लेखिना** गगनचुम्बिना, **शिखरसंघातेन** शिखरसमूहेन, **लङ्घिताखिलाशामुखं** लङ्घिताखिलदिङ्मुखम्, पुनः **उदयास्तशैलमेखलामूलमिलितपूर्वपाश्चात्यभागम्** उदयाऽस्तशैलयोः—उदयाचलाऽस्ताचलयोः, मेखलामूलेन—नितम्बमूलेन, मिलितौ—संसृष्टौ, पूर्व-पाश्चात्यभागौ यस्य तादृशम्, पुनः **असकृद्दर्शितमुग्धमौक्तिकोल्लासह्रासया** असकृत्—पुनः पुनः, दर्शितौ—प्रकटितौ, मुग्धमौक्तिकानां—मनोज्ञमुक्तामणीनाम्, उल्लासह्रासौ—वृद्धिहानी, यया तया, अत एव **प्रारब्धपरिहासयेव** प्रवर्तितपरिहासयेवेत्युत्प्रेक्षा, **लवणजलनिधिवेलया** लवणसमुद्रनीरविकाररूपया, **वीचिहस्तापवर्जितैः** तरङ्गरूपहस्तैः गृहीतैः, **पयोभिः** जलैः, **अनवरतं** निरन्तरम्, **आहन्यमानं** ताड्यमानम् [ अः ]।

**च** पुनः, **तस्य** सुवेलसंज्ञकस्य, **शिखरिणः** पर्वतस्य, **तटवनेषु** पर्यन्तवनेषु, **कण्टकितानेकसंगरव्यतिकरखिन्नवाहिनीकः** कण्टकिताः—रोमाञ्चान्विताः क्षुद्रारिसहिता वा, अनेके ये सगराः—संग्रामाः, तेषां व्यतिकरेण—सम्पर्केण, खिन्ना—श्रान्ता, वाहिनी—सेना यस्य तादृशः, **कुतूहलात्** कौतुकवशात्, **इतस्ततः** वनान्, **विचरन्** परिभ्रमन्; कीदृशेषु तेषु? **स्वभावरमणीयेषु** स्वभावतः सुन्दरेषु, **सर्वतः** समन्ततः, **स्तबकिततिलकचम्पकाशोकबकुलेषु** स्तबकिताः—गुच्छान्विताः, तिलक-चम्पका-ऽशोक-बकुलाः—तत्तत्संज्ञकद्रुमविशेषा येषु, यद्वा पुष्पगुच्छान्विता कलिकाकलापान्विता । तत्तत्पुष्पवृक्षा येषु तादृशेषु, पुनः **कलहायमानमत्तपिककुलालापवाचालविकचचूतमालेषु** कलहायमानाना—

मत्तपिककुलालापवाचालविकचचूतमालेषु, परिमलमिलितमधुकरीनिकरान्धकारितकोरकितसरससहकारेषु, रत्नाविलसमुद्रशैवलप्रवालजटिलितराजतालीमूलजटाजालकेषु, घटितसेतुवानरविकीर्णगिरिकूटकुटिलितान्तरालमार्गेषु, [ क ] इतस्ततः सखीस्नेहदूराकृष्टमनसा त्रिजटया विनोदितदयितविरहक्षाममैथिलीकेषु, अनेकशः क्रीडानिमित्तमागतया प्रधाननक्तंचरीभिः सह पादचारेण विचरन्त्या लतामन्दिरेषु मन्दोदर्या सविभ्रमावचितविकचमन्दारेषु, सेतुशिखरोत्सङ्गलवङ्गतरुलतासीनकिन्नरमिथुनगीयमानरामचन्द्रचरिताद्भुतेषु [ ख ], प्रशान्तनक्तंचरोपद्रवतया संचरद्भिरचकितैः समीपाश्रमनिवासिभिस्तापसकुमारकैः प्रकटितविभीषणसौराज्येषु, जनकानुकारिभिर्मारीचमृगसमागतानामरण्यमृगीणामुदरसंभवैर्भ्रमद्भिरेणकैः स्वदेहकाञ्चनप्रभया पिशङ्गितोद्देशेषु, निद्रानिपण्णकुम्भकर्णाभिनन्दितशिशिरहरिचन्दनवीथीकेषु, जानकीवैमुख्यदुःखक्षामदशकण्ठाविवाहितोत्कण्ठेषु, तटवनेषु, कण्टकितानेकसंगरव्यतिकरखिन्नवाहिनीकः कुतूहलादितस्ततो विचरन् [ ग ];

---

टिप्पनकम्—त्रिजटा—रावणभगिनी [ ख ]। कण्टकिताः–रोमाञ्चिताः [ ग ]।

---

कलहं कुर्वतां, मत्तपिककुलानाम्–उन्मत्तकोकिलकुलानाम्, आलापैः–गुञ्जनैः, वाचालाः–शब्दायमानाः, विकचचूतमाला–विकसितरसालपङ्क्तयो येषु तादृशेषु, पुनः **परिमलमिलितमधुकरीनिकरान्धकारितकोरकितसरससहकारेषु** परिमलमिलितानां–सौरभसङ्गतानां, मधुकरीणां–भ्रमरीणां, निकरेण–गणेन, अन्धकारिताः–अन्धकारान्विताः, सरसाः–मकरन्दाक्ताः, सहकाराः–अतिदूरगामिसौरभान्विता आम्रा येषु तादृशेषु, पुनः **रत्नाविलसमुद्रशैवलप्रवालजटिलितराजतालीमूलजटाजालकेषु** रत्नाविलस्य–रत्नकलुषितस्य, समुद्रस्य, शैवलैः–जलतृणैः, प्रवालैः–विद्रुमैः, जटिलितानि–व्याप्तानि, राजतालीनां–पूगद्रुमाणां, मूलजटाजालानि–शिफासंघाता येषु तादृशेषु, पुनः **घटितसेतुवानरविकीर्णगिरिकूटकुटिलितान्तरालमार्गेषु** घटितः–रचितः, सेतुः–समुद्रबन्धो यैस्तादृशैः, वानरैः, विकीर्णैः–विक्षिप्तैः, विघटितैरिति यावत्, गिरिकूटैः–पर्वतशृङ्गैः, कुटिलिताः–वक्रीकृताः, अन्तरालमार्गाः–मध्यमार्गा येषु तादृशेषु [ क ], पुनः **इतस्ततः** अत्र तत्र, **सखीस्नेहदूराकृष्टमनसा** सखीस्नेहेन–सखीभूतसीताप्रेम्णा, आकृष्टं मनो यस्यास्तादृश्या, **त्रिजटया** तत्संज्ञकराक्षस्या, **विनोदितदयितविरहक्षाममैथिलीकेषु** विनोदिता–आश्वासिता, दयितविरहेण–दयितस्य–भर्तुः, रामचन्द्रस्येत्यर्थः, विरहेण–वियोगेन, क्षामा–कृशा, मैथिली–सीता येषु तादृशेषु, पुनः **प्रधाननक्तञ्चरीभिः** प्रधानराक्षसीभिः, सह, **पादचारेण** पद्भ्यां गमनेन, **लतामन्दिरेषु** लतामण्डपेषु, **विचरन्त्या** भ्रमन्त्या, **मन्दोदर्या** तत्संज्ञकरावणभार्यया, **सविभ्रमावचितविकचमन्दारेषु** सविभ्रमं–सविलासं यथा स्यात् तथा, अवचिताः–त्रोटिताः, मन्दाराः–तदाख्यदिव्यतरुकुसुमानि येषु तादृशेषु, पुनः **सेतुशिखरोत्सङ्गलवङ्गतरुलतासीनकिन्नरमिथुनगीयमानरामचन्द्रचरिताद्भुतेषु** सेतुशिखरोत्सङ्गे–सेतुशिखरमध्ये, या लवङ्गतरुलताः–लवङ्गवृक्षारूढलताः, तासु–तासां मध्ये, आसीनैः–उपविशद्भिः, किन्नरमिथुनैः–किन्नरदम्पतिभिः, गीयमानैः, रामचन्द्रचरितैः, अद्भुतेषु–विस्मयावहेषु [ ख ], पुनः **प्रशान्तनक्तञ्चरोपद्रवतया** प्रशान्तः–निवृत्तः, नक्तचरैः–राक्षसैः, उपद्रवो येषु तत्तया, **अचकितैः** असम्भ्रान्तैः, **संचरद्भिः** विचरद्भिः, समीपाश्रमनिवासिभिः, निकटस्थिताश्रमवास्तव्यैः, **तापसकुमारैः** तपस्विबालकैः, **प्रकटितविभीषणसौराज्येषु** प्रकटितम्–अभिव्यक्तं, विभीषणस्य–रावणानुजस्य, सौराज्यं–सात्त्विकमाधिपत्यं येषु तादृशेषु, पुनः **एणकैः** अनुकम्पितैः एणैः–मृगैः, **स्वदेहकाञ्चनप्रभया** स्वशरीरसम्बन्धिसुवर्णकान्त्या, **पिशङ्गितोद्देशेषु** पिशङ्गितः–पीतवर्णतामापादितः, उद्देशः–ऊर्ध्वप्रदेशो येषु तादृशेषु, कीदृशैः ! **जनकानुकारिभिः** जनकस्य–जनयितुर्मारीचस्य, अनुकारिभिः–अनुकरणं कुर्वद्भिः, तद्वर्णयुक्तैरित्यर्थः, पुनः **मारीचमृगसमागतानां** मारीचात्मकमृगपार्श्वमायातानाम्, तेन सहाभिरतानामित्याशयः, **अरण्यमृगीणां** वन्यमृगीणाम्, **उदरसम्भवैः** उदरोत्पन्नैः, पुनः **भ्रमद्भिः** विचरद्भिः। पुनः **निद्रानिपण्णकुम्भकर्णाभिनन्दितशिशिरहरिचन्दनवीथीकेषु** निद्रानिपण्णेन–निद्रया स्थितेन, कुम्भकर्णेन–तत्संज्ञकदीर्घनिद्रारावणभ्रात्रा, अभिनन्दिता–समर्थिता, अलङ्कृतेति यावत्, शिशिरहरिचन्दनानां–शीतलचन्दनविशेषाणां, वीथी–पङ्क्तिर्येषु तादृशेषु, पुनः **जानकीवैमुख्यदुःख-**

'इह निर्झरेषु दृष्टलङ्कानिर्णीतदशकण्ठकण्ठच्छेदनिर्वृतेन दशरथात्मजेन स्नात्वा जटायुषे निर्वर्तितः प्रथमो निवापाञ्जलिः [ घ ], इह प्रहर्षास्फोटनसक्रान्तसरसगैरिकपङ्कपञ्चाङ्गुलैर्दृश्यमानमूर्तिमत्प्रतापानलशिखैरिव भुजशिखरैः खर्वयन्तस्त्रिकूटगिरिकूटानि घटितसमग्रसेतुबन्धा बन्धुरं ववल्गुरङ्गदपुरोगाः प्लवगपतयः [ ङ ], इयमसमञ्जसक्षिप्तलङ्काप्राकारकाञ्चनशिलाशवला शिबिरसन्निवेशभूः सुग्रीवस्य, एषा परस्परविलक्षणलक्ष्यमाणराक्षसकपिकरङ्काशयवा रामरावणयोराजिभूमिः [ च ], इह सकलदिङ्मुखान्तरालव्यापिघोषस्य त्रिष्वपि भुवनेषु सर्पतः पौलस्त्ययशसो रथस्येव प्रवर्तकः प्रयत्नवद्भिः क्षपाचरैरनेकधाकृतरक्षोऽपि प्रसह्य मारुतिना भुजबलेन भग्नोऽक्षः [ छ ], इह कन्दरायामरातिदारितप्रधानवीरविद्राणविजयाध्यवसायेन सायचरचक्रवर्तिना तैस्तैरसुकुमारैरुपक्रमैरकाल एव त्याजितो निद्रां महानिद्रायै सहोदरः [ ज ], इह

---

टिप्पनकम्—अङ्गद –वालिपुत्र [ ङ ]। सकलदिङ्मुखान्तरालव्यापिघोषस्य पौलस्त्ययशसो रथस्येव भग्नोऽक्ष एकत्र घोष –घोषणं प्रसरणम्, अन्यत्र चीत्कार, अक्ष –रावणसुतो धूश्च, मारुति हनुमान् [ छ ]। महानिद्रा मरणम् [ ज ]।

---

क्षामदशकण्ठातिवाहितोत्कण्ठेषु जानक्या –सीताया, वैमुख्येन–प्रतिकूलतया यद्दु स तेन क्षामेण–कृशेन, दशकण्ठेन–रावणेन, अतिवाहिता व्यतिक्रान्ता उत्कण्ठा–तदानुकूल्योत्सुकता येषु तादृशेषु [ ग ] । इह अस्मिन् स्थाने, निर्झरेषु प्रवाहेषु दृष्टलङ्कानिर्णीतदशकण्ठकण्ठच्छेदनिर्वृतेन दृष्टया लङ्कया निर्णीतेन, दशकण्ठकण्ठच्छेदेन–दशकण्ठस्य–रावणस्य, कण्ठच्छेदेन–कण्ठकर्तनेन, निर्वृतेन–सुखितेन, दशरथात्मजेन रामेण, स्नात्वा स्नानं कृत्वा, जटायुषे तत्संज्ञकाय गृध्रप्रवराय, प्रथम निवापाञ्जलिः श्रद्धाञ्जल, निर्वर्तितः निष्पादित [ घ ]। इह अस्मिन् स्थाने, अङ्गदपुरोगाः अङ्गदनामकवालिपुत्रादय, प्लवगपतय कपिश्रेष्ठ, घटितसमग्रसेतुबन्धा घटित सम्पादित, समग्र, सेतोः–पुलिनस्य, बन्ध –प्रबन्धो यैस्तादृशा, बन्धुरम् अत्युन्नतानत यथा स्यात् तथा, ववल्गु धावागता जग्मु, कीदृशा ? भुजशिखरैः उन्नतभुजाग्रै, त्रिकूटगिरिकूटानि त्रिकूटगिरे –त्रीणि कूटानि शृङ्गाणि यस्य इत्यन्वर्थसंज्ञकपर्वतविशेषस्य, कूटानि–शिखराणि, खर्वयन्त हस्वयन्त, कीदृशै ? प्रहर्षास्फोटनसक्रान्तसरसगैरिकपङ्कपञ्चाङ्गुलैः प्रहर्षेण–अतिहर्षेण यत् आस्फोटनम्–आस्फालन, तेन सक्रान्त, सरसस्य–आर्द्रस्य, गैरिकस्य–रक्तधातुविशेषस्य पङ्को यस्मिन् तादृश, पञ्चाङ्गुल–पञ्चानामङ्गुलीनां समाहारो येषु तादृशै, अत एव दृश्यमानमूर्तिमत्प्रतापानलशिखैरिव दृश्यमाना–प्रतीयमाना, प्रतिभासमानेत्यर्थ, मूर्तिमत –आकृतिमत, प्रतापानलस्य–प्रतापाग्ने, शिखा–ज्वाला येषु तादृशैरिवेत्युत्प्रेक्षा [ ङ ]। असमञ्जसक्षिप्तलङ्काप्राकारकाञ्चनशिलाशवला अयथार्थं–क्रोधावेशवशेन असङ्गत यथा स्यात् तथा, क्षिप्ताभि, लङ्काप्राकारभूताभि, काञ्चनशिलाभि –सुवर्णशिलाभि, शवला चित्रिता, सुग्रीवस्य तदाख्यकपिराजस्य, इयं शिबिरसन्निवेशभूः सैन्यावाससन्निवेशस्थानम्। परस्परविलक्षणलक्ष्यमाणराक्षसकपिकरङ्काशयवा परस्परविलक्षण–परस्परविरूप यथा स्यात् तथा, लक्ष्यमाणा –प्रतीयमाना, राक्षसानां कपीनां वानराणां च, करङ्का –अस्थिमात्रावशिष्टशवा, तन्मस्तकानि वा, एवाशयवा यस्यास्तादृशी, एषा रामरावणयो, आजिभूमिः रणक्षेत्रम् [ च ] । सकलदिङ्मुखान्तरालव्यापिघोषस्य सकलदिङ्मुखान्तरालव्यापी–समस्तदिग्मध्यव्यापक, घोष –शब्दन प्रसरण च यस्य तादृशस्य, पुन त्रिष्वपि स्वर्ग मर्त्य-पातालरूपेष्वपि, भुवनेषु लोकेषु, सर्पत प्रसिध्यत, पौलस्त्ययशस पौलस्त्य –रावण, तत्कीर्ते, रथस्येव, प्रवर्तक प्रचारक, अक्षः तदाख्यो रावणकुमार, पक्षे रथाङ्गधू, प्रयत्नवद्भिः प्रयत्नशालिभि, क्षपाचरैः निशाचरै, अनेकधाकृतरक्षोऽपि अनेकवारं रक्षितोऽपि, मारुतिना हनुमता, भुजबलेन बाहुविक्रमेण, प्रसह्य बलात्कारेण, इह अस्मिन् स्थाने, भग्न नाशित [ छ ]। इह अस्यां कन्दरायां गुहायाम्, अरातिदारितप्रधानवीरविद्राणविजयाध्यवसायेन अरातिभि –शत्रुभि, दारि –खण्डित, मारितैरिति यावत्, प्रधानवीरै –प्रधान भटै, विद्राण –भग्न, विजयाध्यवसाय –विजयोद्योगो यस्य तादृशेन, सायचरचक्रवर्तिना राक्षससम्राजा, सहोदरः स्वानुज, कुम्भकर्ण इति यावत्, असुकुमारै कठोरै, तैस्तैः अनेकविधै, उपक्रमैः उपद्रव, अकाल एव असमय एव,

क्रमाक्रान्तसकलाम्बरेण साडम्बरमुदञ्चता ज्वलनजन्मना नीलेन धूमोत्पीडेनेव नयननलिनेषु विस्तारितः प्रहस्तप्रणयिनीनामश्रुधारासारः [ झ ], इदमुपान्तनिर्झरासन्नप्ररूढविरलविशल्यौपधिलवमवदारितोरःस्थलस्य शक्त्या समिति सुमित्रासुतस्य मूर्च्छानिपतनस्थानम् [ ञ ], अमी नेमिनिष्पिष्टकपिशिरःकपालकर्परशुक्तिकाशकलशारिताः शरविसरवर्षिणि रामभद्रे पुनरुक्तमुपसृतापसृतरावणरथस्य क्षयसमयशोपितमहानदीप्रवाहानुकारिणः चक्रमार्गाः [ ट ], इयं स्वामिभक्तेरग्रजशक्तेश्च जगति ख्यापनाय विभीषणेन प्रतिष्ठापिता द्रुतापतच्छिन्नकुम्भकर्णोत्तमाङ्गत्रासितस्य दाशरथेर्यथाप्रथममायतपदान्तराप्रतीपापसर्पणसरणिः [ ठ ], इह लतावेश्मन्यपनीतरक्षोगृहनिवासनिर्वादकलङ्कया जनकदुहितुर्वेपमानस्वेदार्द्रकरकिसलयेन दाशरथिना कथञ्चिदुन्मोचितो हुताशनप्रवेशलग्नो धूमदण्ड इव धूम्रकुटिलायतशिखो वेणीबन्धः [ ड ],

---

टिप्पनकम्—नील -रामप्रधान , प्रहस्त -रावणप्रधान , आसार -वेगवद्वृष्टि [ झ ] । नेमि.-चक्रधारा [ ट ] । अग्रजशक्ते. कुम्भकर्णसामर्थ्यस्य, सरणि -मार्ग. [ ठ ] ।

---

**महानिद्राये** मृत्यवे, निद्रा **त्याजितः** मोचित , जागारित इत्यर्थ [ ज ]। **क्रमाक्रान्तसकलाम्बरेण** क्रमेण आक्रान्तं-व्याप्त, सकल-समग्रम्, अम्बरं-गगनमण्डल वस्त्र च येन तादृशेन, पुन **साडम्बर** सविस्तारम्, **उदञ्चता** उद्गच्छता, **धूमोत्पीडेनेव** धूमावरोधेनेव, **ज्वलनजन्मना** अग्निजातेन, नीलेन-श्यामवर्णेन रामप्रधानेन च, कज्जलेन वा, **प्रहस्तप्रणयिनीनां** प्रहस्तस्य-रावणप्रधानस्य या प्रणयिन्य -प्रिया , तासां, **नयननलिनेषु** नयनारविन्देषु, **अश्रुधाराऽऽसारः** अश्रुधारासम्पात , **इह** अस्मिन् स्थाने, **विस्तारितः** विस्तारमापादित [ झ ] । इद **सुमित्रासुतस्य** लक्ष्मणस्य, **मूर्च्छानिपतनस्थानं** मूर्च्छया यन्निपतनं-निपात तद्भूमि , कीदृशम् ? **उपान्तनिर्झरासन्नप्ररूढविरलविशल्यौपधिलवम्** उपान्ते-समीपे, ये निर्झरा -स्रोतांसि, तदासन्ने-तन्निकटप्रदेशे, प्ररूढा -उत्पन्ना , विरलानाम्-अनिबिडाना, विशल्यौपधीना-विशल्यासज्ञकौपधीनां, लवा -लेश यस्मिंस्तादृशम् , कीदृशस्य तस्य ? **समिति** युद्धे, **शक्त्या** शस्त्रविशेषेण, **अवदारितोरःस्थलस्य** खण्डितवक्ष स्थलस्य [ ञ ]। **नेमिनिष्पिष्टकपिशिरःकपालकर्परशुक्तिकाशकलशारिताः** नेमिभि -चक्रान्तभागै , निष्पिष्टाना-सञ्चर्णितानां, कपिशिर कपालकर्पराणा-वानरमस्तकाना ये कपालकर्परा -कपालाख्यघटावयवसदृशा शिरोऽस्थिमण्डलरूपकपालास्तेषां, शुक्तिकाशकले -कपालखण्डात्मकखण्डै शारिता -चित्रिता , **रामभद्रे** रामचन्द्रे **शरविसरवर्षिणि** बाणगणवृष्टिकारिणि सति, **पुनरुक्तम्** असकृत् सूचित यथा स्यात् तथा, **उपसृतापसृतरावणरथस्य** उपसृत -समीपगत ,अपसृत -दूरगतश्च यो रावणस्य रथस्तत्सम्बन्धिन , **क्षयसमयशोपितमहानदीप्रवाहानुकारिण.** क्षयसमये-प्रलयकाले, शोषिता-शुष्कता नीता, या महानदी, तत्प्रवाहानुकारिण , **अमी** इमे, **चक्रमार्गाः** रथाङ्गप्रचारमार्गा [ ट ] । **स्वामिभक्तेः** स्वामिनि-रामचन्द्रे या भक्ति -प्रीतिस्तस्या , च पुन , **अग्रजशक्तेः** अग्रजस्य-स्वज्येष्ठभ्रातु , रावणस्येत्यर्थ , या शक्ति -पराक्रमस्तस्या , **प्रख्यापनाय** विख्यापनार्थं, **विभीषणेन** तदाख्यरावणानुजेन, **प्रतिष्ठापिता** प्रकल्पिता, इयम्, **द्रुतापतच्छिन्नकुम्भकर्णोत्तमाङ्गवित्रासितस्य** द्रुत-सत्वरम्, आपतता, छिन्नेन खण्डितेन, कुम्भकर्णस्य-तदाख्य-रावणानुजस्य, उत्तमाङ्गेन-मस्तकेन, वित्रासितस्य-बिभीषितस्य, **दाशरथे.** रामचन्द्रस्य, **यथाप्रथम** यथापूर्वम्, **आयतपदान्तराप्रतीपापसर्पणसरणिः** आयतेन-दीर्घेण, पदान्तरेण-पादविक्षेपान्तरेण, यत् अप्रतीपम्-अप्रतिकूलम् , स्खलन-शङ्काशून्यमित्यर्थ , अपसर्पणम्-अपसरण, तस्य सरणि -मार्ग [ ठ ]। **इह** अस्मिन्, **लतावेश्मनि** लतागृहे, **अपनीतरक्षोगृहनिवासनिर्वादकलङ्कया.** अपनीत -अग्निप्रवेशेन विरोधित , रक्षोगृहनिवासनिर्वादकलङ्क -राक्षसगृहाधिकरणक निवासापवादरूप कलङ्को यया तादृश्या , **जनकदुहितु.** जानक्या , **धूम्रकुटिलायितशिखः** धूम्रा-कृष्णलोहितवर्णा, कुटिला-वक्रा, आयता च शिखा-अग्रभागो यस्य तादृश , **वेणीबन्ध.** प्रोषितभर्तृकोचितकेशरचनाविशेषरूपाया वेण्या बन्ध , **वेपमानस्वेदार्द्रकरकिसलयेन** वेपमान -कम्पमान , स्वेदार्द्र -स्रवद्घर्मोदकार्द्र , करकिसलय -करपल्लवो यस्य तादृशेन, **दाशरथिना** रामेण, **उन्मोचित.** विश्लेषित , क इव ? **हुताशनप्रवेशलग्नः** अग्निप्रवेशसम्पृक्त , **धूमदण्ड**

इतो निवर्तितानुव्रजत्सुरव्रजेन निजगोत्रराजधानीमयोध्यां प्रति यियासुना दशास्यदमनेन सविलासमध्यासितमहार्हमणिवातायनः कौतुकोत्तानयनजानकीविलोकितगतिरनुकूलपवनप्रसारितैः पताकाबाहुभिः परिरब्धुमिव चिरोत्सृष्टदृष्टं कुबेरपुरमम्बरपथेन प्रधावितः पुष्पकनामा विमानराजः [ ढ ]; इत्यादिपिशुनितानेकरामायणमहापुरुषवृत्तान्तैरन्तिकस्थितैस्तत्रत्यनरपतिभिरुत्खातरोपितैरनुपदं प्रदर्शितान् लङ्कापुरीपरिसरोद्देशान् सहर्षमीक्षमाणः कतिचिद्दिनान्यतिष्ठम् [ ण ] ।

एकदा तु तत्रस्थशिबिर एव प्रेषितागतैः प्रणिधिपुरुषैः प्रवर्तितः सज्जीकृत्य प्राज्यवस्त्राभरणदानावर्जितसकलनाविका नाव आत्तकतिपयदिवसपाथेयैः प्रधानपार्थिवसूनुभिरन्यैश्च जन्यशतनिर्व्यूढपौरुषैः पदातिपुरुषैरनुगम्यमानस्तत्क्षणमेवाविक्षेपेणोदचलम् [ त ] । अविलम्बितगतिश्च पश्चिमेन सेतोर्गत्वातिदूरमूरीकृतचौर्यवृत्तेरतिविषमदुर्गबलगर्वितस्य पर्वतकनाम्नः किरातराजस्य राजधान्यामवस्कन्दमप्रतर्कितमपातयम्, अदय-

टिप्पनकम्—कुबेरपुरम् अलकाम् [ ढ ] । जन्य-सङ्ग्राम । विक्षेप-धाटक [ त ] । अवस्कन्दं धाटकम् [ थ ] ।

इव धूमरेखेवेत्युत्प्रेक्षा [ ड ] । इतः अस्मात् स्थानात्, निवर्तितानुव्रजत्सुरव्रजेन निवर्तित-परावर्तित, अनुव्रजन्-अनुगच्छन्, सुरव्रज-देवगणो येन तादृशेन, निजगोत्रराजधानीं स्ववंशराजधानीरूपाम्, अयोध्यां, प्रति यियासुना प्रत्यावर्तितुकामेन, यद्वा अयोध्यां प्रति अयोध्याभिमुखं, यियासुना जिगमिषुणा, दशास्यदमनेन रावणनिवर्हणा रामचन्द्रेण, सविलासं विलाससहितम्, अध्यासितमहार्हमणिवातायनं अध्यासितम्-अधिष्ठितं, महार्हमणीनाम्-अत्युत्तममणिमयं, वातायन-गवाक्षो यस्य तादृशः, पुष्पकनामा तन्नामक, विमानराजः उत्तममाकाशयानम्, अम्बरपथेन गगनमार्गेण, प्रधावितः शीघ्रं यातः, कीदृशः ? कौतुकोत्तानयनजानकीविलोकितगतिः कौतुकेन-दिदृक्षारसेन, उत्तानम्-उन्नतं, नयनं यस्यास्तादृश्या जानक्या विलोकिता-दृष्टा, गतिः-गमनं यस्य तादृशः, किं कर्तुमिव ? चिरोत्सृष्टदृष्टां चिरात्-दीर्घकालात्, उत्सृष्टं-त्यक्तं, दृष्ट-दर्शनं यस्यास्तादृशीं, यद्वा चिरात् त्यक्ता विलोकिता च, कुबेरपुरीं कुबेरस्वामिकाम् अलकापुरीम्, अनुकूलपवनप्रसारितैः अभिमुखवाहिवायुविस्तारितैः, पताकाबाहुभिः पताकात्मकभुजैः, परिरब्धुमिव आलिङ्गितुमिव [ ढ ] । इत्यादिपिशुनितानेकरामायणमहापुरुषवृत्तान्तैः इत्यादयः-एवम्भूताः, पिशुनिताः-सूचिताः, अनेके रामायणसम्बन्धिनः, महापुरुषस्य-मर्यादापुरुषस्य भगवतो रामचन्द्रस्य, वृत्तान्ताः-वार्ता यैस्तादृशैः, उत्खातरोपितैः पूर्वम् उत्खातैः-उत्पाटितैः, स्वपदात् प्रच्याविततैरित्यर्थः, पश्चात् पुनः रोपितैः-स्वपदे प्रतिष्ठापितैः, अन्तिकस्थितैः समीपस्थितैः, नरपतिभिः, अनुपदं प्रतिस्थानं, प्रदर्शितान्, लङ्कापरिसरोद्देशान् लङ्कापर्यन्तस्थोर्ध्वदेशान्, सहर्षं सानन्दम्, ईक्षमाणः पश्यन्, कतिचित् कतिपयानि, दिनानि, अतिष्ठं स्थितवानहम् [ ण ] । एकदा तु एकस्मिन् दिने, तत्रस्थशिबिर एव तत्स्थानस्थसैनिकावास एव, प्रेषितागतैः पूर्वं प्रेषितैः पश्चादागतैः, प्रणिधिपुरुषैः गूढचरजनैः, प्रवर्तितः कारितप्रवृत्तिकः, अहमिति शेषः, प्राज्यवस्त्राभरणदानावर्जितसकलनाविकाः प्राज्यवस्त्राभरणानां-प्रचुरवस्त्रालङ्करणानां, दानेन-वितरणेन, आवर्जिताः-आनमिताः, परितोषिता इति यावत्, सकलाः-समस्ताः, नाविकाः-कर्णधारा यासां तादृशीः, नावः, सज्जीकृत्य सन्नद्धाः सन्नृता निभृता वा कृत्वा, आत्तकतिपयदिवसपाथेयैः आत्त-गृहीतं, कतिपयदिवसपाथेय-कतिपयदिनमार्गभोज्यवस्तु यैस्तादृशैः, प्रधानपार्थिवसूनुभिः प्रधानराजकुमारैः, च पुनः, अन्यैः, जन्यशतनिर्व्यूढपौरुषैः जन्यशतैः-सङ्ग्रामशतैः निर्व्यूढम्-अपरिसमाप्तं, पौरुषं-पराक्रमो येषां तादृशैः, पदातिपुरुषैः पादगामिजनैः, अनुगम्यमानः अनुस्रियमाणः, तत्क्षणमेव तत्कालमेव, अविक्षेपेण सन्नाभावेन, धाटीरूपेणेत्यर्थः, उदचलम् उच्चलितवान्, उत्थाय चलितवानित्यर्थः [ त ] । च पुनः, अविलम्बितगतिः अविलम्बिता-सत्वरा, गतिः-गमनं यस्य तादृशः सन्, सेतोः पश्चिमेन पश्चाद्भागेन, अतिदूरं बहुदूरं, गत्वा, ऊरीकृतचौर्यवृत्तेः ऊरीकृता-स्वीकृता, चौर्यरूपा वृत्तिः-जीविका येन तादृशस्य, अतिविषमदुर्गबलगर्वितस्य अतिविषम-परमदुर्धर्षं, यद् दुर्गं-पर्वतादिकं रिपुप्रवेशप्रतिरोधकं दुर्गमं स्थानं, तदात्मकं यद् बलं-सामर्थ्यम्, यद्वा बलं-सैन्यं च, ताभ्यां गर्वितस्य-मदान्वितस्य, पर्वतकनाम्नः तत्सञ्ज्ञ

शस्त्रपातविद्रावितासिलदस्युलोकश्च शोकलम्बालकं सबालकमादाय तदीयमन्तःपुरपुरन्ध्रिसार्थमर्थसंभारं च भूयः स्वशिबिराभिमुखोऽभवम् [ थ ]। प्रस्थितस्य च प्रथम एव प्रयाणके मम त्रिभागशेषायां निशीथिन्यामत्रिनामा भट्टपुत्रः 'क युवराजः, क युवराजः' इति पृच्छञ्जवनिरायतपातया नौकया निकटमाजगाम [ द ], जगाद च—"कृतप्रणामः कुमारसेनापतिर्विज्ञापयति—योऽयमनतिदूरे दर्शितपरिमण्डलाभोगदर्शनीयाकृतिरुन्नत्य पर्याप्ताम्बरो गौरीस्तन इव त्र्यम्बकोरःस्थलस्य स्थपुटयन् विस्तारमर्णवजलस्य वामतोऽवलोक्यते [ ध ], एष चूडालंकारः पञ्चशैलकद्वीपस्य लीलावतंसकः सागरस्य क्रीडास्थानममरमिथुनानां सिद्धिक्षेत्रं विद्याधरगणानामग्रिमो रामणीयकेन सर्वपर्वताना रत्नकूटो नाम सानुमान् [ न ], एष किल हृदयस्खलन्मैथिलीविरहशोकशङ्कोर्लङ्कापुरीमभि प्रस्थितस्य दाशरथेराज्ञया पर्वतानाहरद्भिः प्लवगयूथाधिपैरुत्पाट्य हाटकगिरेः सानुरानीतः [ प ], उपनीतश्च भुजबलावलेपादनादरप्रसारितैककरतलस्य सेनापतेर्नलस्य तेनापि

---

टिप्पनकम्—नौकया लघुनावा [ द ]। स्थपुटयन् निम्नोन्नत कुर्वन् [ ध ]।

---

कस्य, **किरातराजस्य** भिल्लाधिपते **अप्रतर्कितम्** आकस्मिकम्, **अवस्कन्दम्** आक्रमणम् **अपातय** कृतवानहम्। **च** पुन, **अदयशस्त्रपातविद्रावितासिलदस्युलोकः** अदयशस्त्रपाते निर्दयशस्त्राघाते – विद्राविता कारितपलायना, अखिला –समस्ता, दस्युलोका –चोरशत्रुजना येन तादृश, **शोकलम्बालकं** शोकेन लम्बमानकेशम्, **सबालकं** बालसहित, **तदीय** रिपुसम्बन्धिनम्, **अन्तःपुरपुरन्ध्रिसार्थम्** अन्त पुराङ्गनासमूहम्, च पुन, **अर्थसंभार** धनराशिम्, **आदाय** गृहीत्वा, **भूय** पुन, **स्वशिबिराभिमुखः** स्वसैन्यावासाभिमुख, तद्गमनोद्यत इत्यर्थ, **अभव** जात [ थ ]। **प्रस्थितस्य** कृतप्रयाणकस्य, प्रथम एव मम **प्रयाणके** प्रस्थाने, **त्रिभागशेषायां** अवशिष्टतृतीयभागाया, **निशीथिन्यां** रात्रौ, **अत्रिनामा** तत्सञ्ज्ञ, **भट्टपुत्र** भट्टकुमार, 'क युवराज क युवराज' अस्तीति शेष, इति **पृच्छन्** प्रश्न कुर्वन्, **जवनिरायतपातया** जवेन–वेगेन, निरायत –अतिदीर्घ, पात.–सञ्चारो यस्यास्तादृश्या, **जवनिरायतपताकया** इति पाठे तु जवेन–वेगेन, नितराम्, आयता दीर्घीभूता, पताका यस्यास्तादृश्या, **नौकया** लघुनावा, **निकटं** समीपम्, **आजगाम** आगतवान् [ द ]। च पुन, **जगाद** उक्तवान्। किमित्याह–**कृतप्रणाम**. विहिताभिवादन, **कुमारसेनापति**. कुमारस्य–भवत, सेनाध्यक्ष, **विज्ञापयति** सूचयति, यद्वा हे कुमार! कृतप्रणाम सेनापतिर्विज्ञापयतीत्यर्थ, किमित्याह–**अनतिदूरे** किञ्चिद्दूरे **दर्शितपरिमण्डलाभोगदर्शनीयाकृति**. दर्शिता दृष्टिगोचरता गमिता, परिमण्डलेन–वर्तुलेन, आभोगेन–विस्तारेण, दर्शनीया, आकृति –आकारो येन तादृश, पुन **उन्नत्य** उन्नतो भूत्वा उद्गत्येत्यर्थ, **पर्याप्ताम्बर** व्याप्तगगनमण्डल, **त्र्यम्बकोरःस्थलस्य** शिववक्ष स्थलस्य, गौरीस्तन इव, **अर्णवजलस्य** समुद्रजलस्य, विस्तारं, **स्थपुटयन्** आच्छादयन्, निम्नोन्नत कुर्वन् वा, योऽय, **वामतः** वामभागे, **अवलोक्यते** दृश्यते, एष सोऽय **रत्नकूट**. अन्वर्थतत्सञ्ज्ञ, **सानुमान्** पर्वत, अस्तीति शेष, **नामेति** वाक्यालङ्कारे, कीदृश? **पञ्चशैलकद्वीपस्य** पञ्चशैला –पर्वता. सन्ति यस्मिन्नित्यन्वर्थतत्सञ्ज्ञकद्वीपस्य, **चूडालङ्कार**. मस्तकालङ्कार, पुन **सागरस्य** समुद्रस्य, **लीलावतंसक**. क्रीडालङ्कार, पुन **अमरमिथुनाना** देवदम्पतीना, **क्रीडास्थानं** क्रीडाक्षेत्रम्, **विद्याधरगणाना** विद्याधर –प्राप्तातिशयमानुषविशेष, तत्समूहानां, **सिद्धिक्षेत्रम्** अणिमाद्यष्टसिद्धिपीठम्, पुन **रामणीयकेन** सौन्दर्येण, **सर्वपर्वताना** निखिलपर्वतानाम्, **अग्रिम**. अग्रेसर [ न ]। **हृदयस्खलन्मैथिलीविरहशोकशङ्को**. हृदये स्खलन्–आपतन्, मैथिलीविरहजन्यशोकरूप शङ्कु –कीलको बाण शूल वा यस्य तादृशस्य, पुन **लङ्कापुरीमभि** लङ्काऽभिमुख, **प्रस्थितस्य** कृतप्रस्थानस्य, **दाशरथेः** रामचन्द्रस्य, **आज्ञया** पर्वतान्, **आहरद्भि**. सेतुबन्धार्थमानयद्भि, **प्लवगयूथाधिपैः** मर्कटगणाधिपै, **उत्पाट्य** त्रोटयित्वा, **हाटकगिरे** सुवर्णपर्वतस्य, सुमेरोरित्यर्थ, **एष**. सोऽय, **सानु**. समस्थलरूप एकदेश, **किल** निश्चयेन, आनीत [ प ]। **च** पुन, **भुजबलावलेपात्** बाहुबलाभिमानात्, **अनादरप्रसारितैककरतलस्य** अनादरेण प्रसारितम् एक

रमणीयतातिशयदर्शनप्रीतमनसा सुचिरमवलोक्य नायमुद्रागतुङ्गद्युतिपिशङ्गिताशामुखो वज्रमणिरिव कृत्रिमैर्मणिभिः पाषाणमृन्मयैरमीभिरचलैः सहैकत्र समवायमर्हतीति विमृश्य सेतोः पृथक् पाथोनिधौ निहितः, पयोधिनापि पुत्रबहुमानादात्मनः क्रीडागिरित्वेनोपकल्पितः [ फ ], तदत्र विपुलावकाशपरिसरे सुप्रापशीतलस्वादुनिर्झराम्भसि स्वच्छन्दलभ्यचन्दनादिपादपैधसि निरन्तरफलितनालिकेलकदलीपनसपिण्डखर्जूरप्रायतरुषण्डे तरङ्गिणीतीरसुलभदेवतार्चनोचितविशालमणिशिले युक्तमावासयितुम् [ ब ]; यतो दूरमायाता वरूथिनी, व्यथितो निशीथिनीजनितजाड्योद्रेकेण समुद्रमरुता सर्वे एव सुखोचितो जनः, श्रमविकलबाहवो न वाहयन्ति सत्वरमरित्राणि यानपात्रेषु पौतिकाः, न शक्नुवन्ति निद्रावशीकृताः कर्तुमवष्टम्भं कूपस्तम्भकेषु कर्णधाराः, समीरोऽपि संप्रति प्रतीपगतिः प्रवाति, नाभिधावन्ति शिबिरगामिनं मार्गमर्गलितानीव प्रेर्यमाणान्यपि पुरो निर्यामकैः प्रवहणानि, नास्ति कश्चिन्नेदीयानितश्चलितानामाश्रयो-

---

टिप्पनकम्—उपनीतश्च ढौकितश्च, वानरैरिति शेषः [ फ ]। एध –काष्ठम् [ ब ]। अरित्र–यानपात्रवहित्रम्। नेदीयान् प्रत्यासन्नतर [ भ ]।

---

करतल येन तादृशस्य, सेनापते, नलस्य तत्संज्ञकमर्कटस्य, उपनीत. उप–समीप, नीत –उपस्थापित । रमणीयतातिशयदर्शनप्रीतमनसा रमणीयतातिशयस्य–तदीयसौन्दर्योत्कर्षस्य, दर्शनेन प्रीत–प्रसन्न मनो यस्य तादृशेन, सेनापि नलेनापि, सुचिरम् अतिदीर्घकालम् अवलोक्य दृष्ट्वा नायमुद्रागतुङ्गद्युतिपिशङ्गिताशामुख. उद्रागाभि–उत्कटवर्णाभ, तुङ्गद्युतिभि –उच्चै प्रसृतकान्तिभि, पिशङ्गितानि पीतिमानमापादितानि, आशामुखानि दिङ्मुखानि येन तादृश, अय सुमेरुनामा, वज्रमणि. हीरकमणि, कृत्रिमै कल्पितै, मणिभि, पाषाणमृन्मयै प्रस्तरमृत्तिकामयै, अमीभि एभि, अचलै. पर्वतै सह, एकत्र एकस्मिन् स्थाने, समवाय सम्मेलन, न, अर्हति तद्योग्यो भवति, इति इत्थ, विमृश्य विचार्य, सेतो, पृथक् नहि, पाथोनिधौ समुद्रे, निहित स्थापित । पयोधिनापि समुद्रेणापि, पुत्रबहुमानात् पुत्रसदृशस्नेहातिशयात, आत्मन स्वस्य, क्रीडागिरित्वेन क्रीडोपयोगिपर्वतत्वेन, उपकल्पित. स्वीकृत [ फ ]। तत् तस्माद्धेतो, अत्र अस्मिन्, विपुलावकाशपरिसरे विपुल –विस्तृत, अवकाश –स्थितियोग्यतासम्पादकप्रदेशो यत्र तादृशे, परिसरे–पर्वतसमीपप्रदेशे, आवासयितु सैन्य निवासयित, युक्तम् उचितम्, कीदृशे ? सुप्रापशीतलस्वादुनिर्झराम्भसि सुप्रापम्–अनायासलभ्य, शीतल स्वादु–मधुरं च, निर्झरस–पर्वतान्नि सृत जलप्रवाहस्य, अम्भ –जल यस्मिंस्तादृशे, पुन स्वच्छन्दलभ्यचन्दनादिपादपैधसि स्वच्छन्द–स्वाधीन यथा स्यात् तथा, लभ्यानि–प्राप्याणि, चन्दनादिपादपाना–चन्दनादिवृक्षसम्बन्धीनि, एधांसि–काष्ठानि यस्मिंस्तादृशे, पुन निरन्तरफलितनालिकेलकदलीपनसपिण्डखर्जूरप्रायतरुषण्डे निरन्तरफलितै –अनवरतफलितै, नालिकेलादिभि, प्राया –प्रचुरा, तरुषण्डा –तरुवनानि यस्मिन् तादृशे पुन तरङ्गिणीतीरसुलभदेवतार्चनोचितविशालमणिशिले तरङ्गिण्या –नद्या, तीरे सुलभा–सुकरा, देवतार्चनोचिता–देवपूजनयोग्या, विशाला, मणिशिला–मणिमयफलकं यस्मिंस्तादृशे [ ब ]। यतः यस्माद्धेतो, दूरम्, आयाता आगता, वरूथिनी सेना, सर्वे एव सकलोऽपि सुखोचितः सुखदाहारविहाराभ्यस्त, जन. लोक, निशीथिनीजनितजाड्योद्रेकेण निशीथिन्या–रात्र्या, जनित –उत्पादित, जाड्योद्रेक –शैत्यातिशयो यस्मिंस्तादृशेन, समुद्रमारुता समुद्रवायुना, व्यथित. पीडित, अस्तीति शेष । श्रमविकलबाहव. श्रमेण विकला –विह्वला, बाहवो भुजा येषां तादृशा, पौतिका पोतवाहका, यानपात्रेषु पोतेषु अरित्राणि जलविक्षेपककाष्ठानि, सत्वर शीघ्रं, न वाहयन्ति सञ्चारयन्ति । निद्रावशीकृता निद्रया अधीनीकृता, कर्णधारा नाविका, कूपस्तम्भकेषु गुणवृक्षदण्डेषु, अवष्टम्भम् अवरोध, कर्तुं न, शक्नुवन्ति पारयन्ति । सम्प्रति इदानीं, समीरोऽपि वायुरपि, प्रतीपगति. प्रतिकूलगति, प्रवाति वहति । निर्यामकै. वाहकै, पुर. अग्रे, प्रेर्यमाणान्यपि प्रचाल्यमानान्यपि, प्रवहणानि

चितोऽन्यः प्रदेशो द्वीपसंनिवेशः पर्वतो वा, सर्वतो वेत्रलताचनाकीर्णमपारीयमर्णं एव केवलम् [ भ ], अतो विलम्ब्य त्रिचतुराण्यहानि प्रतिपाल्य पृष्ठानुपातिनं सैनिकलोकं विधाय रिपुयोधमार्गणव्यथितमर्मणो वीरवर्गस्य व्रणकर्म कृत्वा विचित्रतरुफलोपपादनेन क्षीणपाथेयसंग्रहदुःस्थस्य दुर्गतपदातिसार्थस्य क्षुधः प्रतीकारं प्रगुणीकृत्य पटुपवनपाटितसितपटानि गिरितटाघातविघटितफलकसंधिबन्धानि यानपात्राणि पूरयित्वा स्वादुसलिलेन रिक्तजलभाण्डानि गृहीत्वा कियन्मात्रमपि सारमिन्धनदारु गम्यते प्रतिदिनमविच्छिन्नैः प्रयाणैः, इति [ म ] श्रुत्वा प्रभुः प्रमाणम्" अहं तु क्षणमात्रकृतविमर्शः प्रतिगृह्य चेतसा तस्य वचनमेवं क्रियते इत्युदीर्य तं व्यसर्जयम् [ य ]। गते च तत्र यथागतमतीते च कियत्यपि कालक्षणे संक्षोभितसकलजलचरः स्ववासतरुखण्डोड्डीनभारुण्डपक्षिपक्षाक्षेपरवविस्तारितस्तटशायिमहाकायकरिमकरपतनवेगदूरोच्छलितपयसा संभ्रममुत्थाय निरूप्यमाण इव पुनरमृतमन्थनारम्भभीतेनाम्भोधिना सत्वरोत्थानविस्तरद्गुहामुखोत्पतत्केसरिकुलैश्च

---

पोता, **अर्गलितानीव** केनापि निरुद्धानीव, **शिविरगामिनं** सैनिकाऽऽवासगामिनं, **मार्गं** पन्थानं, न, **अभिधावन्ति** शीघ्रं गच्छन्ति। **इतः** अस्मात् प्रदेशात्, **चलितानां** प्रस्थितानाम्, **आश्रयोचित** विश्रामयोग्य, **नेदीयान्** अतिनिकट, **द्वीपसन्निवेशः** द्वीपसंस्थानरूप, **पर्वतः** तद्रूपो वा, **अन्य** कश्चित्, प्रदेश, **नास्ति** न वर्तते, किन्तु **सर्वतः** सर्वत्र, **वेत्रलतावनाकीर्णं** वेत्राख्यलतावनव्याप्तम्, **केवलम्**, **अपारीयं** पाररहितम्, **अर्णं एव** जलमेव, अस्तीति शेष [ भ ]। **अत** अस्मात् कारणात्, **त्रिचतुराणि** त्रीणि वा चत्वारि वा, **अहानि** दिनानि, **विलम्ब्य** विलम्ब कृत्वा, पुन **पृष्ठानुपातिनं** पृष्ठानुगामिनं, **सैनिकलोकं** सैन्यजनं, **प्रतिपाल्य** प्रतीक्ष्य, पुन **रिपुयोधमार्गणव्यथितमर्मणः** रिपुयोधाना-शत्रुभटाना, मार्गणै -बाणै, व्यथितानि-दु खितानि, मर्माणि-मर्मस्थानानि यस्य तादृशस्य, **वीरवर्गस्य** स्ववीरगणस्य, **व्रणकर्म** व्रणचिकित्सा, **विधाय** कृत्वा, पुन **क्षीणपाथेयसंग्रहदुःस्थस्य** क्षीणेन-व्ययं गतेन, पाथेयसंग्रहेण-पथि भोजनीयवस्तुजातेन, दु स्थस्य-दुरवस्थितस्य, **दुर्गतपदातिसार्थस्य** दरिद्रपादगामिगणस्य, **विचित्रतरुफलोपपादनेन** विविधवृक्षफलसंग्रहेण, **क्षुधः** बुभुक्षाया, **प्रतीकार** प्रशमन कृत्वा, पुन **पटुपवनपाटितसितपटानि** पटुपवनै -तीव्रवायुभि, पाटिता -छिन्ना, सितपटा -वस्त्रवस्त्राणि येषु तादृशानि, पुन **गिरितटाघातविघटितफलकसन्धिबन्धानि** गिरितटाघातै पर्वतप्रान्ताघातै, विघटित -विश्लेषित, फलकसन्धीना काष्ठपट्टिकासम्मेलनप्रदेशाना, बन्धो येषु तादृशानि, **यानपात्राणि** पोतान्, **प्रगुणीकृत्य** प्रकृष्टगुणानि विधाय, सज्जीकृत्येत्यर्थं, पुन **रिक्तजलभाण्डानि** शून्यजलपात्राणि, **स्वादुसलिलेन** मधुरजलेन, **पूरयित्वा** पूर्णीकृत्य, पुन **कियन्मात्रं** कियत्प्रमाणक, **सार** दृढम्, **इन्धनदारु** पावकोद्दीपनकाष्ठ, गृहीत्वा, **अविच्छिन्नैः** विच्छेदरहितै, **प्रयाणैः** प्रस्थानै, प्रतिदिन **गम्यते** गम्यते [ म ], **इति** इत्थ, सन्देश **श्रुत्वा** श्रवणगोचरीकृत्य, **प्रभुः** त्व, **प्रमाणं** तदनुसारकर्तव्याकर्तव्यावधारणसमर्थ, इति, अह तु **क्षणमात्रकृतविमर्शः** क्षणमात्रविहितभावन, **चेतसा** हृदयेन, **तस्य** सेनापते, **वचनं** वाक्य, **प्रतिगृह्य** आदाय, एवं **क्रियते** अनुष्ठीयते, **इत्युदीर्य** इत्युक्त्वा, **तं** भद्दपुत्र, **व्यसर्जयं** त्यक्तवान् अस्मि [ य ]। **तत्र** तस्मिन् भद्दपुत्रे, **यथाऽऽगत** येन प्रकारेण आगमन कृत तथा, गते सति, **च** पुन, **कियत्यपि** कतिपये, **कालक्षणे** कालसम्बन्धिनि क्षणे, **अतीते** व्यतीते सति, **तारगम्भीरः** उच्चगम्भीर, **सैन्यावासभेरीध्वनिः** शिबिरसन्निवेशसूचकभेरीनाद, **समन्तात्** सर्वत, **दिगन्तराणि** दिङ्मध्यानि, **तस्तार** आच्छादितवान्, व्याप्तवान् इत्यर्थ, कीदृश ? **सक्षोभितसकलजलचरः** सक्षोभिता -सम्भ्रमिता, सकला -समस्ता, जलचरा -जलजन्तवो येन तादृश, पुन **स्ववासतरुखण्डोड्डीनभारुण्डपक्षिपक्षाक्षेपरवविस्तारित** स्ववासभूतात्-स्वनिवासाधिकरणभूतात्, तरुखण्डात्-वृक्षवनात्, उड्डीनानाम्-उत्पतितानां, भारुण्डपक्षिणा-तदाख्यपक्षिजातिविशेषाणा, पक्षाक्षेपरवै -पक्षोत्क्षेपणध्वनिभि, विस्तारित -विस्तारमापादित, पुन **तटशायिमहाकायकरिमकरपतनवेगदूरोच्छलितपयसा** तटशायिना-तटसुप्ताना, महाकायाना-विशालशरीराणा, करिणां-जलहस्तिना, मकराणा-नक्राणा च, पतनवेगेन-समुद्रनिपातवेगेन, दूरमुच्छलित, पय -जल यस्य तादृशेन, अत एव **पुनरमृतमन्थनारम्भभीतेन** पुन -द्वितीयवारं, य अमृतमन्थनस्य-सुरासुरकर्तृकामृतोद्धरणार्थविलोडनस्य, आरम्भ -उपक्रम, तद्भीतेन, **अम्भोधिना** समुद्रेण, **ससम्भ्रम** सम्भ्रमपूर्वकम्, उत्थाय, **निरूप्यमाण इव** निश्चीयमान इवेत्युत्प्रेक्षा, **च** पुन, **सत्वरोत्थानविस्तरद्गुहामुखोत्पतत्केसरिकुलैः** सत्वरोत्थानेन-ससम्भ्रमोत्थानेन, विस्तरन्ति-विस्तारमापद्य

कुलिशपातशङ्काविदीर्णहृदयनिर्गलत्प्राणैरिव निशम्यमानो मैनाकवर्ग्यैर्गिरिभिः समन्तात् तस्तार दिगन्तराणि तारगम्भीरः सैन्यावासभेरीध्वनिः [ र ], येन श्रुतिविषयमायातेन स्तम्भितेवाऽऽहूतेव दत्ताज्ञेव सा वरूथिनी क्षणमेकमखिलापि निश्चला बभूव, उच्चचाल च गतिरभसचलितध्वजावचूलचामरा प्रत्यचलम्, अन्योऽन्यसंघट्टविघटितानेकयानपात्रा च प्राप कष्टेन घट्टोद्देशम् [ ल ]। अथ दशाशामुखविसर्पी सर्पितस्तारतुमुलेन प्रतिवेलमास्फालितवेलातटानामुदधिवीचीनामुदञ्चता दूरमश्रान्तसंतानेन कलकलेन विघटितजलदेवतावृन्दनिद्रः [ व ]–

'भद्र! सर पुरः किञ्चित्, आर्ये! देहि गमनमार्गम्, अङ्ग! मा पीडय ममाङ्गमङ्गेन, मङ्गलक! कोऽयं बलदर्पः? कूर्पराघातैः परानाहसि, हंस! ह्रस्यसे दूरमुत्क्षिप्तनिवसनाग्रपल्लवोऽनया, लावण्यवति! पृष्ठतो निविडलग्ना पीडयसि मामन्तर्बहिश्चातिनिष्ठुरेण चलता पुरस्तनपीठेन, तरङ्गिके! दूरमपसर, विघ्निता गतिस्तव

---

टिप्पनकम्—तालतुमुलेन उच्चाव्यक्तशब्देन [ व ]।

---

मानानि, दीर्घीभवन्तीत्यर्थः, पुनः गुहागुरात्–कन्दरामात्, उत्पतन्ति–उच्छलन्ति, केसरिकुलानि–सिंहगणा येषु तादृशैः, मैनाकवर्ग्यैः मैनाकजातीयैः, गिरिभिः पर्वतैः, कुलिशपातशङ्काविदीर्णहृदयनिर्गलत्प्राणैरिव कुलिशपातशङ्कया–वज्रपातशङ्कया, विदीर्णात्–पाटितात्, हृदयात्, निर्गलन्तः–निर्गच्छन्तः प्राणा येषां तादृशैरिवेत्युत्प्रेक्षा, निशम्यमानः श्रूयमाणः [ र ]। श्रुतिविषयं श्रवणगोचरताम्, आयातेन आगतेन, प्राप्तेनेत्यर्थः, येन भेरीध्वनिना, स्तम्भितेव निरुद्धेव, आहूतेव कृताह्वानेव, दत्ताज्ञेव कृतादेशेव, अखिलापि समस्तापि, वरूथिनी सेना, एकं क्षणं निश्चला स्थिरा, बभूव अभूत्। च पुनः, गतिरभसचलितध्वजावचूलचामरा गतिरभसेन–गमनवेगेन, चलितानि–उद्धूतानि, ध्वजावचूलचामराणि–ध्वजाधोमुखस्थितचामराणि यस्याः तादृशी सती, च पुनः, प्रत्यचलं पर्वतं प्रति, उच्चचाल उत्सर्पणं चलितवती। अन्योऽन्यसङ्घट्टविघटितानेकयानपात्रा अन्योऽन्यसङ्घट्टेन–परस्परसङ्घर्षेण, विघटितानि–विश्लेषितानि, विदारितानीति यावत्, अनेकानि यानपात्राणि–पोता यस्यास्तादृशी सती, कष्टेन क्लेशेन, घट्टोद्देशं तीरोपप्रदेशं, प्राप प्राप्तवती [ ल ]। अथ अनन्तरं, शिबिरलोकस्य सैनिकजनस्य, कलकलः कोलाहलः, 'उल्ललास उदभूत्' इत्यग्रेणान्वयः, कीदृशः? दशाशामुखविसर्पी दशदिगन्तप्रसरणशीलः, पुनः प्रतिवेलं तस्यां तस्यां जलधिनीरविकारक्रियायां वेलायाम्, आस्फालितवेलातटानाम् आहतनिकटवेलाविषयतीराणाम्, उदधिवीचीनां समुद्रतरङ्गाणां, दूरम्, उदञ्चता उद्गच्छता, पुनः अश्रान्तसन्तानेन अविच्छिन्नपरम्परेण, पुनः तारतुमुलेन उच्चगम्भीरेण, कलकलेन–कोलाहलेन, विसर्पितः प्रसारितः, वर्धित इति यावत्। पुनः कीदृशः कलकलः? विघटितजलदेवतावृन्दनिद्रः विघटिता–विध्वंसिता, जलदेवतावृन्दस्य जलाधिदेवगणस्य, निद्रा येन तादृशः, पुनः इत्यादिश्रूयमाणानेकसैनिकशतालापः इत्यादयः–एवंविधाः, श्रूयमाणाः अनेके सैनिकशतस्य–शतसंख्यकसैनिकानाम्, आलापाः–आभाषणानि यस्मिंस्तादृशः इति दूरार्थविशेषणान्तरम् [ व ], तत्र किमादयस्तदालापा इत्याह—

भद्र! कल्याणिन्!, पुरः अग्रे, किञ्चित् ईषत्, सर गच्छ, आर्ये! श्रेष्ठे!, गमनमार्गं गमनावकाशं, देहि, अङ्ग! भो!, मम अङ्गं शरीरावयवम्, अङ्गेन शरीरावयवेन, तत्सङ्घट्टनेनेत्यर्थः, मा न, पीडय व्यथय, मङ्गलक! कल्याणिन्! यद्वा तन्नामक! अयम् अनुभूयमानः, बलदर्पः बलगर्वः, कः? यतो हि त्वं कूर्पराघातैः भुजमध्यग्रन्थिप्रहाराभिघातैः, परान् अन्यान्, आहंसि ताडयसि, हंस! तन्नामक!, दूरमुत्क्षिप्तनिवसनाग्रपल्लवः दूरमुत्क्षिप्त–आकृष्टतया दूरं–मुपरिभागे समानीतः, निवसनाग्रपल्लवः–वस्त्रप्रान्तभागरूपः पल्लवो यस्य तादृशः, अनया स्त्रिया, ह्रस्यसे विडम्ब्यसे, लावण्यवति! सौन्दर्यवति!, पृष्ठतः पृष्ठभागे, निविडलग्ना अतिसम्बद्धा, त्वमिति शेषः, अतिनिष्ठुरेण अतिकठिनेन, पुनः पुरः अग्रे, चलता गच्छता, स्तनपीठेन स्तनतटेन, अन्तः मनसि, बहिश्च बाह्यप्रदेशे च, पीडयसि क्लेशयसि, तरङ्गिके! तन्नाम्नि! दूरम्, अपसर अपगच्छ, तव जघनमित्या कटिपुरोभागस्थानस्था, सर्पतः प्रचलतः, निरुद्धमार्गस्य

जघनभित्त्या सर्वतो निरुद्धमार्गस्यास्य सैनिकवर्गस्य; लवङ्गिके! परिकरबन्धदर्शनेऽपि परिचारकः खिन्नसकलगात्रयष्टिर्यथैष कम्पते तथावश्यमवतरन्त्यास्तरीतस्तव घनस्तनजघनभारेण पीडितो व्रीडयिष्यति प्रेक्षकजनम्; व्याघ्रदत्त! धाव, शीघ्रमेषा विपद्यते निपतिता पोतात् पितामही मकरिकायास्तव श्वश्रूः; अश्रूणि किं सृजसि? विसृज वार्तामपि तस्य तथाविधस्थानपतितस्य दस्युनगरनारीकर्णभूषणसुवर्णस्य; स्तेनलूनग्रन्थिः पथि प्राप्स्यति विनाशं विना शम्बलेन वलभद्रकः; भद्रकं भवति यद्यासाद्यते समग्रमुग्रजनसंमर्दपीडितेन मया परेषामर्पितं सर्पिः; वयस्य! वसुदत्त! किमुत्तरं दास्यामि भर्तुराविष्टस्य? विनष्टाः क्षारोदकेन मोदकाः; [ श ] मन्थरक! सा स्थवीयसी कन्था गलितमात्रैव करतलाद् गिलिता तिमिङ्गिलेन, गलग्रहस्तेन मर्तव्यमधुना हिमर्तौ शीतेन; भ्रातर्! उत्प्लुत्य नौफलकाद् दत्तफालेन निष्फलमेव भग्नस्त्वया जानुः, अनुचराधीनेन धीधनेनाधुना व्यवहर्तव्यम्; अग्निमित्र! परिहृत्य तीर्थमुत्पथेन व्रजन्नतिथिर्भविष्यसि ग्राहाणाम्; अरे ग्रहिक! मा वृथा कुट्टय पृष्ठकर्परे कूर्मम्, उदरमर्मं पीडयाऽस्य निविडमङ्गुलीयुगलेन;

---

टिप्पनकम्—स्थवीयसी स्थूलतरा। ग्राहः—जलचरः। प्रसेवकः—कोरथलकः। निरनुक्रोशो निर्दयः, क्रोशद्वन्द्वं गव्यूतिविस्तीर्णम्। प्लवकः—मण्डूकः [ प ]।

---

अवरुद्धमार्गस्य, अस्य वर्तमानस्य, सैनिकवर्गस्य सैन्यसमूहस्य, गतिः गमनं, विघ्निता प्रतिबद्धा, लवङ्गिके! तत्संज्ञिके!, परिकरबन्धदर्शनेऽपि उत्तरीयाधरीयवस्त्राभ्यां दृढगात्रबन्धावलोकनेऽपि, खिन्नसकलगात्रयष्टिः खिन्ना—खेदार्दा, सकला—संपूर्णा, गात्रयष्टिः—शरीररूपा यष्टिर्यस्य तादृशः, एषः, परिचारकः सेवकः, यथा कम्पते कम्पं प्राप्नोति तथा, तरीतः नौकातः, अवतरन्त्याः अधो गच्छन्त्याः, तव, घनस्तनजघनभारेण घनयोः—सान्द्रयोः, स्तनयोः, जघनयोः—कटिपुरोभागयोश्च, भारेण, पीडितः क्लेशितः सन्, प्रेक्षकजनं दर्शकजनं, व्रीडयिष्यति लज्जयिष्यति; व्याघ्रदत्त! व्याघ्रदत्तनामक!, धाव सत्वरमागच्छ, पोतात् जलयानपात्रात्, निपतिता स्खलिता, मकरिकायाः तत्संज्ञकस्त्रियाः, पितामही पितृमाता, तव श्वश्रूः श्वशुरभार्या, एषा, शीघ्रं झटिति, विपद्यते म्रियते; अश्रूणि नेत्रजलानि, किं किमर्थं, सृजसि मुञ्चसि, तथाविधस्थानपतितस्य तादृशस्थाने भ्रष्टस्य, दुरवगाहप्रदेशे स्खलितस्येति यावत्, तस्य अनुभूतपूर्वस्य, दस्युनगरनारीकर्णभूषणसुवर्णस्य शत्रुनगरस्थकामिनीकर्णालङ्करणभूतस्य, सुवर्णस्य, वार्तामपि कथामपि, विसृज त्यज; वलभद्रकः तन्नामा कश्चित् पश्चाद्वर्ती सैनिकः, स्तेनलूनग्रन्थिः स्तेनेन—चौरेण, लूना—उन्मुक्ता, ग्रन्थिः—पाथेयबन्धो यस्मिंस्तादृशं यथा स्यात् तथा, पथि मार्गे, शम्बलेन—पाथेयेन, विना, विनाशं प्राप्स्यति; भद्रकं कल्याणं, भवति भविष्यति, यदि उग्रजनसम्मर्दपीडितेन उग्रेण—भयानकेन, जनसम्मर्देन—जनसङ्घर्षेण, पीडितेन—व्यथितेन, मया परेषाम् अन्येषाम्, अर्पितं, समग्रं समस्तं, सर्पिः घृतम्, आसाद्यते प्राप्यते; वयस्य! सखे!, वसुदत्त तन्नामक!, आविष्टस्य कोपावेशमापन्नस्य, भर्तुः स्वामिनः, किम्? उत्तरं प्रतिवचनं, दास्यामि वक्ष्यामि, क्षारोदकेन क्षाररसवता जलेन, मोदकाः खाद्यविशेषाः, विनष्टाः विध्वस्ताः; मन्थरक! तन्नामक! स्थवीयसी अतिस्थूला, सा कन्था प्रावरणविशेषः, करतलात् हस्ततलात्, गलितमात्रैव स्खलितमात्रैव, तिमिङ्गिलेन मत्स्यविशेषेण, गिलिता भक्षिता, हिमर्तौ हेमन्तऋतौ, अधुना सम्प्रति, गलग्रहस्तेन गले लग्नो हस्तो यस्मिंस्तादृशेन, शीतेन तुषारपातेन, मर्तव्यं मरणावसर उपस्थितः; भ्रातः! बन्धो!, नौफलकात् नौपट्टिकातः, उत्प्लुत्य उत्पत्य, दत्तफालेन कृतकूर्दनेन त्वया, निष्फलमेव वृथैव, जानुः ऊरुपर्व, भग्नः मथितः, अधुना सम्प्रति, धीधनेन धीमता, अनुचराधीनेन भृत्याधीनेन तद्धारकेणैवेत्यर्थः, व्यवहर्तव्यं व्यवहर्तुं शक्यं, न तु स्वयमेव; अग्निमित्र! तत्सञ्ज्ञक!, तीर्थम् अवतरणमार्गं, परिहृत्य त्यक्त्वा, उत्पथेन प्रतिकूलमार्गेण, व्रजन् गच्छन्, ग्राहाणां जलजन्तुविशेषाणाम्, अतिथिः प्राघुर्णिकः, भविष्यसि सम्पत्स्यते; अरे ग्रहिक! ग्रहणशील! तन्नामक! वा, पृष्ठकर्परे नश्य पृष्ठकपाहे, कूर्मं कच्छपं, वृथा व्यर्थं, मा कुट्टय ताडय, किन्तु अस्य कूर्मस्य, निविडं सान्द्रम्, उदरमर्मं उदरग्रन्थिम्, अङ्गुलीद्वयेन—अङ्गुलीयुगलेन, पीडय व्यथय;

नोद्विलिप्यत्यन्यथा चिरेणापि चरणम्; आसन्नमरणः कृष्यतामितो वेत्रगहनादेष मुण्डनिहिततण्डुलप्रसेवको वृद्धसेवकः, प्रविष्टः सङ्कटे; निरनुक्रोशं जनमाक्रोशसि, न तु क्रोशसि रुद्धमिदममतो निजतुन्दम्; तीरमासाद्य श्रमविसंस्थुलः स्थूलपाषाणशङ्कया पृष्ठदेशे निषण्णस्त्वासदूरोत्प्लुतेन स्थलशायिना महाप्लवकेन पश्यत कथं पातितः पुनरगाधे पयोधिवारिणि वराको वरुणकः' [ प ]

इत्यादिश्रूयमाणानेकसैनिकशतालापः, कचित् पलायमानपुलिनशायिजलमानुषमिथुनचरणचालितवालुकारणितरमणीयः, कचित् प्रधावितोद्धतजननिर्दयाक्रान्तशुक्तिसंपुटस्फुटनरवविस्फारितः, कचिद् दलितसरसविद्रुमाङ्कुरटात्कारदन्तुरः, कचित् पिच्छिलशिलातलस्खलितनिपतत्पदातिदत्तहास्यसहवासिलोकतालध्वनितरङ्गितो विस्तारवत्यपि नितान्तमवतारमार्गे कृच्छ्रलब्धान्तरस्य सत्वरं तीरमवतरतः शिबिरलोकस्योल्लास कलकलः [ स ]।

---

टिप्पनकम्—दन्तुरः-करालः [ स ]।

---

अन्यथा तत्पीडनाभावे; चरणं पादं, चिरेणापि दीर्घकालेनापि, न उद्विलिप्यति मुखादुन्मोक्ष्यति; पुनः मुण्डनिहिततण्डुलप्रसेवकः मस्तकधृततण्डुलपोट्टलिकः, पुनः सङ्कटे विपदि, प्रविष्टः मग्नः, अत एव आसन्नमरणः निकटमृत्युः, एषः अयं, वृद्धसेवकः जराजीर्णसेवकः, इतः अस्मात्, वेत्रगहनात् वेत्रवनात्, कृष्यताम् अपसार्यताम्; निरनुक्रोशं निर्दयं यथा स्यात् तथा, निरनुक्रोश इति पाठे निर्दय इत्यर्थः। जनं लोकम्, आक्रोशसि तर्जयसि, तु किन्तु, अग्रतः अग्रे, रुद्धं कृतावरोधं, निजतुन्दं स्वकीयमांसलोदरं, न क्रोशसि शोचसि, क्रोशनिरुद्धम् इति पाठे तु क्रोशविस्तीर्णमित्यर्थः, तीरं तटम्, आसाद्य प्राप्य, श्रमविसंस्थुलः श्रमविह्वलः, पुनः स्थूलपाषाणशङ्कया स्थूलप्रस्तरसन्देहेन, पृष्ठदेशे पश्चाद्भागे, निषण्णः उपविष्टः, वराकः शोचनीयः, वरुणकः तदाख्यसैनिकः, आसदूरोत्प्लुतेन अमदूरोत्पतितेन, स्थलशायिना स्थलशयनशीलेन, महाप्लवकेन महामण्डूकेन, पश्यत अवलोकयत, अगाधे गम्भीरे, पयोधिवारिणि समुद्रजले, कथं केन प्रकारेण, पुनरिति वाक्यालङ्कारे निश्चये वा, पातितः मज्जितः [ प ]।

पुनः कीदृशः कलकलः? कचित् कस्मिंश्चित् प्रदेशे, पलायमानपुलिनशायिजलमानुषमिथुनचरणचालितवालुकारणितरमणीयः पलायमानस्य-सेनाभयाद् विद्रुतस्य, पुलिनशायिनः-सैकततटशयनशीलस्य, जलमानुषमिथुनस्य-जलीयमनुष्यदम्पत्योः, चरणाभ्यां-पादाभ्यां, चालितानाम्-उत्क्षिप्तानाम्, वालुकानां-सिकतानां, रणितैः शब्दविशेषैः, रमणीयः मनोहरः; पुनः कचित् कस्मिंश्चित् प्रदेशे, प्रधावितोद्धतजननिर्दयाक्रान्तशुक्तिसम्पुटस्फुटनरवविस्फारितः प्रधावितैः-प्रकर्षेण कृतधावनैः, उद्धतजनैः-उद्धतलोकैः, निर्दयं-नितान्तम्, आक्रान्तस्य-आमर्दितस्य, शुक्तिसम्पुटस्य-सम्पुटितशुक्तेः, स्फुटनेन-विश्लेषेण, यो रवः-शब्दः, तेन विस्फारितः-विस्तारितः; पुनः कचित् कुत्रचित् प्रदेशे, दलितसरसविद्रुमाङ्कुरटात्कारदन्तुरः दलितानां-खण्डितानां, सरसानाम्-आर्द्राणां, विद्रुमाङ्कुराणां-प्रवालाङ्कुराणां, टत्कारेण-ध्वनिविशेषेण, दन्तुरः-सशब्दः; पुनः कचित् क्वापि स्थले, पिच्छिलशिलातलस्खलितनिपतत्पदातिदत्तहास्यसहवासिलोकतालध्वनितरङ्गितः पिच्छिलात्-पिच्छलात्, शिलातलात्-प्रस्तरतलात्, स्खलितैः-विचलितैः, अत एव निपतद्भिः, पदातिभिः-पादगामिभिः, दत्तैः-कृतैः, हास्यवद्भिः...-हास्यवद्भिः..., लोकानां तालध्वनिभिः-करतलशब्दध्वनिभिः, तरङ्गितः-वर्धितः। कीदृशस्य शिबिरलोकस्य? नितान्तम् अत्यन्तम्, विस्तारवत्यपि विस्तृतेऽपि, अवतारमार्गे समुद्रावतारस्थले, कृच्छ्रलब्धान्तरस्य कृच्छ्रेण-क्लेशेन, लब्धं-प्राप्तम्, अन्तरम्-अवकाशो येन तादृशस्य, पुनः सत्वरं शीघ्रं, तीरं तटम्, अवतरतः आगच्छतः [ स ]।

क्रमेण चोत्तीर्णे कियत्यपि राजलोके, रिक्तीकृतोदरलघुषु तटनिकटमानीयमानेषु यानपात्रेषु, प्रस्थितेष्वावासाय पर्वतस्य पूर्वदक्षिणं भूभागमुत्सुकेषु सैनिकवृन्देषु, मुकुलितसितपटेषु दृढनिखातनिष्ठुरकाष्ठकीलनियमितनौकेषु सर्वतोऽवलम्बितस्थूलनाङ्गरशिलानिगडितपोतेषु गृहीतसर्वात्मोपकरणेष्वपसरत्सु नाविकेषु, नायकोपलालनारूढगर्वेषु खर्वीभूय युगपद्गृहीतबहुजनोत्क्षिप्तभरकेष्वावासभूमिं व्रजत्सु भारभुज्यमानभुजसंधिमर्मसु कर्मकरेषु, सरभसप्रधावितेन पुरोयायिना क्लिष्टसेवकजनेन परिगृह्यमाणेषु मणिगुहागृहेषु, हठनिराकृतलुण्टाककीकटप्रायलोके स्वीकुर्वति सगर्वमुपतटप्ररूढप्रौढलवलीलवङ्गकर्पूरपादपानि स्वादुसलिलनिर्झरणानि राजवल्लभविटवण्ठवर्गे [ इ ], भुजङ्गभयपरिहृतश्रीखण्डशाखिखण्डेषु शिखण्डिरुतमुखरितांल्लतामण्डपानाश्रयत्सु विद्वत्सु, पर्यन्तरोपितशङ्कुसंयम्यमानतनिनणीकेष्वितस्ततो विस्तार्यमाणेष्वमात्यपटसद्मसु,

---

टिप्पनकम्—लवली-चन्दनलता [ इ ]।

---

क्व पुनः, क्रमेण पर्यायेण, कियत्यपि कतिपयेऽपि, राजलोके नृपजने, उत्तीर्णे समुद्रादूर्ध्वमागते सति; पुनः रिक्तीकृतोदरलघुषु रिक्तीकृतेन-रिक्ततामापादितेन, उदरेण-मध्यभागेन, लघुषु-लघुतामापन्नेषु, यानपात्रेषु पोतेषु, तटनिकटं तटसमीपम्, आनीयमानेषु आगम्यमानेषु सत्सु; पुनः उत्सुकेषु आवासोद्यतेषु, सैनिकवृन्देषु सैनिकगणेषु, आवासाय निवासाय, पूर्वदक्षिणं पूर्वदक्षिणदिगन्तरालस्थितं, पर्वतस्य भूभागं भूम्येकदेशं; प्रस्थितेषु प्रयातेषु सत्सु; पुनः नाविकेषु कर्णधारेषु, अपसरत्सु अपगच्छत्सु सत्सु, कीदृशेषु ? मुकुलितसितपटेषु मुकुलितः-उपसंहृतः, सितपटः-नौकोर्ध्वव्याधूयमानश्वेतवस्त्रं यैस्तादृशेषु; पुनः दृढनिखातनिष्ठुरकाष्ठकीलनियमितनौकेषु दृढनिखातेन-दृढम्-अत्यन्तं यथा स्यात् तथा, निखातेन-भूगर्भनिवेशितेन, निष्ठुरकाष्ठकीलेन-दृढकाष्ठमयकीलेन, नियमिता-नियन्त्रिता नौका यैस्तादृशेषु, पुनः सर्वतः सर्वभागेषु, अवलम्बितस्थूलनाङ्गरशिलानिगडितपोतेषु अवलम्बिताभिः-नमिताभिः, स्थूलाभिः-नाङ्गरशिलाभि-यानपात्रावष्टम्भकलङ्गरेतिख्यातशिलाविशेषैः, निगडितः-नियन्त्रितः, पोतः-यानपात्रं यैस्तादृशेषु, पुनः गृहीतसर्वात्मोपकरणेषु गृहीतानि सर्वाणि, आत्मनः-स्वस्य, उपकरणानि-नौवहनोपकरणवस्तूनि यैस्तादृशेषु; पुनः कर्मकरेषु किङ्करेषु, आवासभूमिं निवासस्थानं, व्रजत्सु गच्छत्सु सत्सु, कीदृशेषु ? नायकोपलालनारूढगर्वेषु नायकस्य-स्वामिनः, तत्कर्तृकयेत्यर्थः, उपलालनया-वात्सल्योचितक्रियया, रूढः-उत्पन्नः, गर्वः-अभिमानो येषु तादृशेषु, पुनः खर्वीभूय ह्रस्वतामापद्य, युगपत् एककालं, गृहीतबहुजनोत्क्षिप्तभरकेषु गृहीतः, बहुजनोत्क्षिप्तः-अधिकजनैः, एकस्योपरि निक्षिप्तः, भरः-भारो यैस्तादृशेषु, पुनः भारभुज्यमानभुजसन्धिमर्मसु भारेण भुज्यमानं-कुटिलायमानं, भुजसन्धिमर्म-बाहुसन्धिस्थानरूपं मर्म येषां तादृशेषु; मणिगुहागृहेषु मणिमयकन्दरात्मकगृहेषु, क्लिष्टसेवकजनेन श्रान्तभृत्यजनेन, परिगृह्यमाणेषु समाश्रीयमाणेषु, कीदृशेन ? सरभसप्रधावितेन सत्वरं कृतप्रधावनेन, पुनः पुरोयायिना अग्रगामिना; पुनः राजवल्लभविटवण्ठवर्गे राजप्रियजारमूर्खगणे, स्वादुसलिलनिर्झरणानि मधुरजलस्रोतांसि, सगर्वं साभिमानं, स्वीकुर्वति पानावगाहनार्थमङ्गीकुर्वति सति, कीदृशे ? हठनिराकृतलुण्टाककीकटप्रायलोके हठेन-बलात्, निराकृताः-अपसारिताः, लुण्टाकाः-लुण्टनशीला ये कीकटाः-कृपणा दरिद्रा वा, तत्प्रायाः-तत्प्रचुराः, लोकाः-जना येन तादृशे, कीदृशानि ? उपतटप्ररूढप्रौढलवलीलवङ्गकर्पूरपादपानि उपतटं-तटनिकटे, प्ररूढाः-उत्पन्नाः, लवलीनां-क्षुद्रामलकानां चन्दनलतानां वा, लवङ्गानां कर्पूराणां च, पादपाः-वृक्षा येषु तादृशानि [ इ ]; पुनः विद्वत्सु विज्ञजनेषु, लतामण्डपान् लतागृहान्, आश्रयत्सु निषेवमाणेषु सत्सु, कीदृशेषु ? भुजङ्गभयपरिहृतश्रीखण्डशाखिखण्डेषु भुजङ्गभयेन-सर्पभयेन, परिहृतः-परित्यक्तः, श्रीखण्डशाखिनां-चन्दनवृक्षाणां, खण्डः-श्रेणी यैस्तादृशेषु, कीदृशान् ? शिखण्डिरुतमुखरितान् मयूरशब्दवाचालितान्; पुनः इतस्ततः अत्र तत्र, आमात्यपटसद्मसु सचिवसम्बन्धिवस्त्रमयगृहेषु, विस्तार्यमाणेषु प्रसार्यमाणेषु सत्सु, कीदृशेषु ? पर्यन्तरोपितशङ्कुसंयम्यमानतनिनणीकेषु पर्यन्तरोपितेन-प्रान्तनिखातेन, शङ्कुना-कीलेन, संयम्यमानं-नियन्त्र्यमाणं, तनीनां-पटविस्तारकरज्जूनां, नणीकं-समूहो येषु तादृशेषु; पुनः सामन्तेषु क्षुद्रनृपेषु,

दूरविक्षिप्तकण्टकद्रुमविटपवलयितावासेष्वावासयत्सु सत्वरान्तर्वंशिकनिवेश्यमानशुद्धान्तवनितानिशान्तेषु सामन्तेषु, अप्रतीक्षितवितन्यमानदूष्ये निषीदति मणिस्थलीषु स्थूलवसनाच्छादितवपुषि निद्राभरालसदृशि विलासिनीजने [ क्ष ]।

पुष्कलशुष्कचन्दनकाष्ठसंदीपितानलेषु मुहुर्मुहुर्जठरपृष्ठपरिवर्तनेन व्यपनयत्सु परुपरजनीपवनसंपर्कजनितमङ्गजाड्यमूर्ध्वस्थितेषु दुःस्थितपदातिषु, प्रकाशितनभसि तिरस्कृततरुलतालीनतमसि विप्रलब्धप्रभातसमयोत्सुकचक्रवाकवयसि विलुप्तशैलौषधिज्वलनतेजसि भग्नवनचरमिथुनरहसि संक्षोभितक्षपाचरसदसि सर्पति दिक्षु सर्वतः संधुक्षितानामाशुशुक्षणीनां महीयसि महसि, मुखरितदरीमुखे प्रवृत्ते वातुमन्तःशिबिरमुद्वृत्तसैनिकोपद्रवप्रकुपिताद्रिनिःश्वास इव सोष्मणि सधूमे क्षपाचरमयामानिले [ अ ], सहसैव तस्य शिखरिणः पश्चिमोत्तराद् दिगन्तरादुदधिमारुतप्रेरितो विरुतसंघात इव संनिकृष्टप्रभातसमयनष्टनिद्राणां वरुण-

टिप्पनकम्—दूष्यं–पटगृहम् [ क्ष ]। वयः–पक्षी, आशुशुक्षणिः–अग्निः [ अ ]।

**दूरविक्षिप्तकण्टकद्रुमविटपवलयितावासेषु** दूरविक्षिप्तैः–दूरदूरविकीर्णैः, कण्टकद्रुमविटपैः–कण्टकाक्षशाखाभिः, वलयिताः–वेष्टिता ये आवासाः–निवासस्थानानि, तेषु **आवासयत्सु** निवासयत्सु सत्सु, कीदृशेषु? **सत्वरान्तर्वंशिकनिवेश्यमानशुद्धान्तवनितानिशान्तेषु** सत्वरं–शीघ्रम्, अन्तर्वंशिकैः–अन्तःपुराधिकृतजनैः, निवेश्यमानं–समावेश्यमानं, शुद्धान्तवनितानाम्–अन्तःपुराङ्गनानां, निशान्तं–गृहं येषां तादृशेषु; पुनः **विलासिनीजने** विलासशीलनारीजने, **मणिस्थलेषु** मणिमयभूमिषु, **निषीदति** उपविशति सति, कीदृशे? **अप्रतीक्षितवितन्यमानदूष्ये** अप्रतीक्षितम्–अनपेक्षितं, वितन्यमानं–विस्तार्यमाणं, दूष्यं–पटगृहं येन तादृशे, पुनः **स्थूलवसनाच्छादितवपुषि** स्थूलवसनेन–स्थूलवस्त्रेण, आच्छादितं, वपुः–शरीरं येन तादृशे, पुनः **निद्राभरालसदृशि** निद्राभरेण–निद्राधिक्येन, अलसा–खिन्ना, दृक्–दृष्टिर्यस्य तादृशि [ क्ष ]; पुनः **ऊर्ध्वस्थितेषु** दण्डायमानतयावस्थितेषु, **दुःस्थितपदातिषु** दुःखेनावस्थितपादगामिषु, **परुपरजनीपवनसम्पर्कजनितं** कठोररात्रिवायुसंसर्गजनितम्, **अङ्गजाड्यम्** अङ्गनिश्चेष्टतां, **व्यपनयत्सु** दूरीकुर्वत्सु सत्सु, केन? **पुष्कलशुष्कचन्दनकाष्ठसन्दीपितानलेषु** पुष्कलेन–प्रचुरेण, शुष्केण–नीरसेन, चन्दनात्मकेन काष्ठेन, सन्दीपिताः–प्रज्वालिता ये, अनलाः–अग्नयः, तेषु, **जठरपृष्ठपरिवर्तनेन** उदरपश्चाद्भागपरावर्तनेन; पुनः **सन्धुक्षितानाम्** उद्दीपितानाम्, **आशुशुक्षणीनाम्** अग्नीनां, **महीयसि** अतिमहति, **महसि** तेजसि, **दिक्षु** दिशां मध्ये, **सर्वतः** समन्ततः, **सर्पति** प्रसरति सति, कीदृशे? **प्रकाशितनभसि** उद्भासितगगनमण्डले, पुनः **तिरस्कृततरुलतालीनतमसि** तिरस्कृतं–निराकृतं, तरुलतालीनं–तरुषु–वृक्षेषु लतासु च, लीनं–लग्नं, तमः–अन्धकारो येन तादृशे, पुनः **विप्रलब्धप्रभातसमयोत्सुकचक्रवाकवयसि** विप्रलब्धम्–अरुणोदयप्रलापनया वञ्चितं, प्रभातसमयोत्सुकं–प्रातःकालागमनोत्कण्ठितं, चक्रवाकजातीयं, वयः–पक्षी येन तादृशे, पुनः **विलुप्तशैलौषधिज्वलनतेजसि** विलुप्तं–तिरोहितं, शैलौषधीनां–पर्वतस्थौषधीनां सम्बन्धिनः, ज्वलनस्य–अनलस्य स्वाभाविकस्य, तेजो येन तादृशि, पुनः **भग्नवनचरमिथुनरहसि** भग्नं–निराकृतं, वनचरमिथुनानां–वनेचरदम्पतीनां, रहः–एकान्तो येन तादृशे, पुनः **संक्षोभितक्षपाचरसदसि** संक्षोभितं–विघटितं, क्षपाचराणां–पिशाचानां, सदः–गोष्ठी येन तादृशे; पुनः **क्षपाचरमयामानिले** क्षपायाः–रात्रेः, चरमः–अन्तिमो, यामः–प्रहरः, तत्सम्बन्धिनि, अनिले–वायौ; **अन्तःशिबिरं** शिबिरमध्ये, **वातुं** प्रवर्तितुं, **प्रवृत्ते** प्राप्ते सति, कीदृशे? **मुखरितदरीमुखे** शब्दायितकन्दराग्रे, पुनः **उद्वृत्तसैनिकोपद्रवप्रकुपिताद्रिनिःश्वास इव** उद्वृत्तानाम्–उद्धतानां, सैनिकानाम्, उपद्रवेण, प्रकुपितस्य–अतिक्रुद्धस्य, अद्रेः–पर्वतस्य, निःश्वास इव–नासिकामारुत इव, **सोष्मणि** ऊष्मणा–उष्णतया सहिते, पुनः **सधूमे** धूमसहिते [ अ ]। **सहसैव** शीघ्रमेव, **तस्य** प्रकृतस्य, **शिखरिणः** पर्वतस्य, पश्चिमोत्तरात्, **दिगन्तरात्** दिङ्मध्यात्, **दिव्यमङ्गलगीतनिनदः** मनोज्ञमङ्गलगानध्वनिः, तं प्रदेशं वीरदेशम्, **आजगाम** आगतः, क इव? **उदधिमारुतप्रेरितः** समुद्रपवनोद्वेलितः, **सन्निकृष्टप्रभातसमयनष्टनिद्राणां** सन्निकृष्टेन–प्रत्यासन्नेन, प्रभातसमयेन–प्रातःकालेन,

यानवहंसयूथानाम्, आभरणनिस्वन इव स्वनिवासवीथिप्रस्थितानामसुरनगराभिसारिकाव्रातानाम्, अनारतप्रसृतमुरजमृदङ्गझल्लरीकांस्यतालझात्कृतिः, अन्तरान्तरा विसर्पदुच्छृङ्खलशङ्खकाहलाकोलाहलः, स्फुटप्रसृतटङ्कारेण वारंवारमास्फालितद्विगुणबाहुफलकानामुल्लासितो मल्लानामास्फोटरवेण, सविस्तरस्तुतिवृत्तपाठपुरःसरीभिरितस्ततो विस्तारितस्तारमुच्चरन्तीभिश्चतुरचारणवृन्दजयशब्दपरम्पराभिः, अनेकवेणुवीणारवसहस्रसंवर्धितः, प्लावयन्निवामृतस्रोतसा गगनमार्गमाजगाम तं प्रदेशमतिशयश्रव्यो दिव्यमङ्गलगीतनिनदः [ आ ]। श्रुत्वा च तमहमश्रुतपूर्वमवधाननिश्चलेन चेतसा परमयोगीव क्षणमात्रमुपजाततत्प्रभवदर्शनाभिलाषः प्रेष्य निकटवर्तिनं नरेन्द्रलोकमात्मपरिजनं च पार्श्वविधृतचामरच्छत्रधारादिद्वित्रपरिचारकः, तत्कालमन्तिकस्थमुदधिकूलासन्नसलिलस्थिरावस्थापितनावमच्छिन्नसंतानमागच्छतस्तस्य गीतध्वनेर्दत्तावधानं ध्याननिश्चलनयनतारकं तारकमवोचम् [ इ ]—'सखे! किमपि सुन्दरो गीतनिःष्यन्दः श्रुतिविषयमवतरन्नेष वारंवारमभिनवाम्भोदगर्जोद्गार

---

टिप्पनकम्—कांस्यतालाः-कंसालकानि [ आ ]।

---

नष्टा—क्षीणा, निद्रा येषां तादृशानां, **वरुणयानहंसयूथानां** वरुणः—पश्चिमाशापतिः, तस्य यानभूताः—वाहनभूता ये हंसास्तेषां, यूथानां—राशीनाम्, **विरुतसंघात इव** निनादसमूह इव, पुनः **स्वनिवासवीथिप्रस्थितानां** निजवासपङ्क्तिमयातानाम्, **असुरनगराभिसारिकाव्रातानां** राक्षसपुरवास्तव्यव्यभिचारिणीगणानाम्, **आभरणनिस्वन इव** अलङ्करणक्षणत्कार इव; पुनः **अनारतप्रसृतमुरज-मृदङ्ग-झल्लरी-कांस्यतालझात्कृतिः** अनारतप्रसृता—अविरतप्रवृत्ता, मुरज-मृदङ्ग-झल्लरी-कांस्यतालानां—तत्तदाख्यवाद्यविशेषाणां, झात्कृतिः—ध्वनिविशेषो यस्मिंस्तादृशः; पुनः **अन्तराऽन्तरा** मध्ये मध्ये, **विसर्पदुच्छृङ्खलशङ्ख-काहलाकोलाहलः** विसर्पन्—प्रसरन्, उच्छृङ्खलः—उच्चः, शङ्खस्य, काहलायाः—महाढक्कायाः, कोलाहलः—ध्वनिर्यस्मिंस्तादृशः; पुनः **स्फुटप्रसृतटङ्कारेण** स्फुटं—स्पष्टं यथा स्यात् तथा, प्रसृतः प्रवृद्धः, टङ्कारः—ध्वनिविशेषो येन तादृशेन, **वारं वारम्** अनेकवारम्, **आस्फालितद्विगुणबाहुफलकानाम्** आस्फालितेन—आहननेन यद्वा आस्फालिते—आहते, द्विगुणे—द्विगुणस्थूले, बाहुफलके—भुजपरिघौ येषां यैर्वा तेषां, **मल्लानां** मल्लपुरुषाणाम्, **आस्फोटरवेण** भुजास्फालनध्वनिना, **उल्लासितः** उन्नमितः; पुनः **चतुरचारणवृन्दजयशब्दपरम्पराभिः** चतुरस्य—निपुणस्य, चारणवृन्दस्य—बन्दिगणस्य, जयशब्दपरम्पराभिः—जयकारश्रेणीभिः, **इतस्ततः** अत्र तत्र, **विस्तारितः** वर्धितः, कीदृशीभिः? **सविस्तरस्तुतिवृत्तपाठपुरस्सरीभिः** सविस्तरः—विस्तारसहितो यः, स्तुतिपाठ-वृत्तयोः—प्रशंसाचारित्रयोः, पाठः—कीर्तनं, तत्पुरस्सरीभिः—तत्प्रमुखाभिः, पुनः **तारम्** उच्चैः, **उच्चरन्तीभि** उद्गच्छन्तीभिः, पुनः **अनेकवेणु-वीणारवसहस्रसंवर्धितः** अनेकेषां वेणूनां—वंशमयवाद्यानां, वीणानां च रवसहस्रैः—सहस्रसंख्याकध्वनिभिः, **संवर्धितः** विस्तारितः; किं कुर्वन्निव? **अमृतस्रोतसा** अमृतप्रवाहेण, **गगनमार्गम्** आकाशमार्गम्, **प्लावयन्निव** प्रवाहयन्निव; पुनः कीदृशः? **अतिशयश्रव्यः** अत्यन्तश्रवणार्हः [आ]। अहं **परमयोगीव** उत्कृष्टयोगीव, **अवधाननिश्चलेन** ऐकाग्र्यस्थिरेण, **चेतसा**, **अश्रुतपूर्वं** पूर्वमश्रुतं, तं निनदं, श्रुत्वा, **क्षणमात्रं** किञ्चित्कालम्, **उपजाततत्प्रभवदर्शनाभिलाषः** उपजातः—उत्पन्नः, तत्प्रभवस्य—तदुत्पत्तिस्थानस्य, दर्शनाभिलाषः—साक्षात्काराभिलाषो यस्य तादृशः, **निकटवर्तिनं** पार्श्ववर्तिनं, **नरेन्द्रलोकं** नृपजनम्, **आत्मपरिजनं** स्वपरिवारं च, **प्रेष्य** प्रस्थाप्य, **पार्श्वविधृतचामरच्छत्रधारादिद्वित्रपरिचारकः** पार्श्वे—निकटे, विधृताः—अवस्थापिताः, चामरच्छत्रधारादयः, द्वित्राः—द्वौ वा त्रयो वा, परिचारकाः—सेवका येन तादृशः, '**तारकं**' तदाख्यकर्णधारकम्, **अवोचम्** उक्तवान्, कीदृशम्? **तत्कालं** तत्क्षणम्, **अन्तिकस्थं** निकटस्थम्, पुनः **उदधिकूलासन्नसलिलस्थिरावस्थापितनावम्** उदधिकूलस्य—समुद्रतटस्य, आसन्ने—निकटे, सलिले—जले, स्थिरं यथा स्यात् तथा, अवस्थापिता—धृता नौर्येन तादृशम्, पुनः **अच्छिन्नसन्तानम्** अविरतधन्तावर्तकं यथा स्यात् तथा, **आगच्छतः** आपततः, **तस्य** प्रकृतस्य, **गीतध्वनेः** गानशब्दस्य, तच्छ्रवण इत्यर्थः, **दत्तावधानं** समाहितहृदयं, **ध्याननिश्चलनयनतारकं** ध्यानेन—मनःसमाधानेन, निश्चला—स्थिरा, नयनतारका—नेत्रकनीनिका यस्य तादृशम् [ इ ]। किमवोचमित्याह—**सखे!** मित्र!, **किमपि सुन्दरः** अनिर्वचनीयमनोहरः, एषः **गीतनिःष्यन्दः** गीतप्रवाहः, **गीतनिनाद** इति पाठे तु गानध्वनिः, वारं

इव मयूरं सारसकुलकाण इव निर्जलारण्यपथिकमधिकोद्भूतहर्षमाकर्षति ममान्तःकरणम् । आयासितश्च त्वमधुना न युज्यसे नियोजयितुम्, तथापि ब्रवीमि यदि नातिमात्रमध्वश्रमो बाधाकरः शरीरस्य, मन्दोद्यमं वा न यात्रां प्रति मनः, ततः प्रगुणीकुरु गमनाय नावं [ ई ], यावदद्यापि पृष्ठतो वहति शिबिरं, यावदवतारयन्ति तीरभुवि सेनावरा यथास्वं कस्वराणि, यावन्निरन्तराणि संचरन्ति सामन्तानामितस्ततो यानपात्राणि, यावच्च मुक्तासमस्तसंनिधिर्निवेशयति पटमन्दिराणि परितो राजकुलमाकुलाऽऽकुलोऽङ्गरक्षवर्गः, तावदनुपलक्षिता एव यामः [ उ ], पश्यामश्च दिव्यगीतध्वनेरस्य प्रारम्भकं लोकं, यत्र च क्वापि नगरे वा नगे वा सागरोदरसैकते वा ध्वनन्त्यमूनि वादित्राणि तत्र नियतमत्यद्भुतेन कस्यचिन्महाराजस्य राज्याभिषेकेण वा लोकत्रयख्यातचरितस्य खेचरेन्द्रस्य विद्यासिद्धिलाभेन वा प्रकृष्टरूपाकृष्टसकलराजकस्य कन्यारत्नस्य स्वयंवरप्रक्रमेण वा शक्रादिसुरवृन्दारकप्रतिष्ठितस्य देवताविशेषस्य यात्राव्यतिकरेण वा भवितव्यं, न ह्यल्पीयसि प्रयोजने यत्र तत्र चोत्सवे कदाचिदेवंविधो भवति सकलत्रिभुवनचमत्कारकारी समारम्भः, समासन्नदेशप्रभवश्च वाद्यध्वनिरसाविति व्यक्ततयैव तालल्यविशेषाणामवगतम्' [ ऊ ]

---

टिप्पनकम्—कस्वराणि उपस्करम् [ उ ]।

---

धारं, श्रुतिविषयं श्रवणपथम्, अवतरन्नेव आगच्छन्नेव, एव इति स्थाने एष इति पाठः, अधिकोद्भूतहर्षं प्रचुरोत्पन्नानन्दं यथा स्यात् तथा, मम अन्तःकरणम्, आकर्षति आकृष्य वशीकरोति, कं क इव ? मयूरम्, अभिनवाम्भोदगर्जोद्गार इव नवीनमेघगर्जनातिशय इव, पुनः निर्जलारण्यपथिकं निर्जलवनमार्गगामिनं, सारसकुलक्वाण इव सारसकुलस्य–समीपस्थजलाशयसूचकसारसजातीयपक्षिसमूहस्य, क्वाणः–शब्द इव । आयासितः श्रमितः, त्वम्, अधुना सम्प्रति, नियोजयितुं प्रकृतगायकान्वेषणाय व्यापारयितुं, न युज्यसे योग्यो वर्तसे, तथाऽपि तदयोग्यत्वेऽपि, ब्रवीमि वच्मि, यदि अध्वश्रमः मार्गगमनपरिश्रमः, शरीरस्य, अतिमात्रम् अत्यन्तं, बाधाकरः दुःखाकरः, न स्यादिति शेषः, वा अथवा, यात्रां प्रति यात्राविषये, मनः, मन्दोद्यमं शिथिलोद्यमं, न अस्तीति शेषः, ततः तर्हि, नावं, गमनाय प्रयाणाय, प्रगुणीकुरु सज्जय [ ई ] । अद्यापि यावत्, पृष्ठतः पृष्ठभागे, शिबिरं सैन्यसमूहः, वहति आयाति; यावत् तीरभुवि तीरभूमौ, सेनावराः सेनाश्रेष्ठाः, यथास्वं स्वस्वं, कस्वराणि उपस्करनिकरम्, अवतारयन्ति अधो नयन्ति; यावत् निरन्तराणि निरवकाशानि, निरवच्छिन्नानीत्यर्थः, सामन्तानां क्षुद्रनृपाणां, यानपात्राणि पोताः, इतस्ततः अत्र तत्र, सञ्चरन्ति प्रचलन्ति; च पुनः, यावत् मुक्तासमस्तसंनिधिः त्यक्तसमस्तसामीप्यः, आकुलाकुलोऽङ्गरक्षवर्गः अतिव्यग्रान्तःकरणोऽङ्गरक्षाधिकृतगणः, राजकुलं राजमन्दिरं, परितः सर्वतः, पटमन्दिराणि वस्त्रगृहाणि, निवेशयति स्थापयति; तावत् अनुपलक्षिता एव केनाप्यलक्षिता एव सन्तः, यामः गच्छामः [ उ ] । च पुनः, अस्य प्रत्यक्षं श्रूयमाणस्य, दिव्यगीतध्वनेः मनोहरगायनशब्दस्य, प्रारम्भकं प्रवर्तकं, लोकं जनं, पश्यामः; यत्र यस्मिन्, क्वापि कुत्रापि, नगरे वा, नगे वा पर्वते वा, सागरोदरसैकते वा समुद्रमध्यवर्तिसिकतामयस्थले वा, अमूनि तानि, वादित्राणि वाद्यानि, ध्वनन्ति नदन्ति, तत्र नियतं निश्चितं, कस्यचित् अविज्ञातनाम्नः, महाराजस्य महानृपस्य, अत्यद्भुतेन अत्याश्चर्यप्रदेन, वा अथवा, लोकत्रयख्यातचरितस्य भुवनत्रयप्रसिद्धचरित्रस्य, खेचरेन्द्रस्य विद्याधरेन्द्रस्य, विद्यासिद्धिलाभेन विद्याप्राप्त्या, वा अथवा, प्रकृष्टरूपाकृष्टसकलराजकस्य प्रकृष्टेन–उत्कृष्टरूपेण, आकृष्टं–वशीकृतं, सकलं–समग्रं, राजकं–राजसमूहो येन तादृशस्य, कन्यारत्नस्य कुमारिकारत्नस्य, स्वयंवरप्रक्रमेण स्वयंवरसमारम्भेण, वा अथवा, शक्रादिसुरवृन्दारकप्रतिष्ठितस्य शक्रादिभिः–इन्द्रादिभिः, सुरवृन्दारकैः–सुरश्रेष्ठैः, प्रतिष्ठितस्य–प्रतिष्ठापितस्य, देवताविशेषस्य, यात्राव्यतिकरेण यात्रासम्बन्धेन, भवितव्यं भवितुं योग्यं, हि यतः, अल्पीयसि अल्पे, प्रयोजने उद्देश्ये, यत्र तत्र चोत्सवे यत्रकुत्रोत्सवे च, एवंविधः एतादृशः, सकलत्रिभुवनचमत्कारकारी समग्रलोकत्रयविस्मयकारकः, समारम्भः समारोहः, कदाचित्, न भवति न जायते । असौ वाद्यध्वनिः वाद्यशब्दः,

यानवहंसयूथानाम्, आभरणनिस्वन इव स्वनिवासवीथिप्रस्थितानामसुरनगराभिसारिकाव्रातानाम्, अनारतप्रसृतमुरजमृदङ्गझल्लरीकांस्यतालझात्कृतिः, अन्तरान्तरा विसर्पदुच्छृङ्खलशङ्खकाहलाकोलाहलः, स्फुटप्रसृतटङ्कारेण वारंवारमास्फालितद्विगुणबाहुफलकानामुल्लासितो मल्लानामास्फोटरवेण, सविस्तरस्तुतिवृत्तपाठपुरःसरीभिरितस्ततो विस्तारितस्तारमुच्चरन्तीभिश्चतुरचारणवृन्दजयशब्दपरम्पराभिः, अनेकवेणुवीणारवसहस्रसंवर्धितः, प्लावयन्निवामृतस्रोतसा गगनमार्गमाजगाम तं प्रदेशमतिशयश्रव्यो दिव्यमङ्गलगीतनिनदः [ आ ]। श्रुत्वा च तमहमश्रुतपूर्वमवधाननिश्चलेन चेतसा परमयोगीव क्षणमात्रमुपजाततत्प्रभवदर्शनाभिलाषः प्रेष्य निकटवर्तिनं नरेन्द्रलोकमात्मपरिजनं च पार्श्वविधृतचामरच्छत्रधारादिद्वित्रपरिचारकः, तत्कालमन्तिकस्थमुदधिकूलासन्नसलिलस्थिरावस्थापितनावमच्छिन्नसंतानमागच्छतस्तस्य गीतध्वनेर्दत्तावधानं ध्याननिश्चलनयनतारकं तारकमवोचम् [ इ ]—'सखे! किमपि सुन्दरो गीतनिःष्यन्दः श्रुतिविषयमवतरन्नेष वारंवारमभिनवाम्भोदगर्जोद्गार

---

टिप्पनकम्—कांस्यतालाः-कंसालकानि [ आ ]।

---

नष्टा-क्षीणा, निद्रा येषां तादृशानां, वरुणयानहंसयूथानां वरुणः-पश्चिमाशापतिः, तस्य यानभूताः-वाहनभूता ये हंसास्तेषां, यूथाना-राशीनाम्, विरुतसंघात इव निनादसमूह इव, पुनः स्वनिवासवीथिप्रस्थितानां निजवासपङ्क्तिप्रयातानाम्, असुरनगराभिसारिकाव्रातानां राक्षसपुरवास्तव्यव्यभिचारिणीगणानाम्, आभरणनिस्वन इव अलङ्करणझणत्कार इव; पुनः अनारतप्रसृतमुरज-मृदङ्ग-झल्लरीकांस्यतालझात्कृतिः अनारतप्रवृत्ता-अविरतप्रवृद्धा, मुरज-मृदङ्ग-झल्लरी-कांस्यतालानां-तत्तदाख्यवाद्यविशेषाणां, झात्कृतिः-ध्वनिविशेषो यस्मिंस्तादृशः; पुनः अन्तराऽन्तरा मध्ये मध्ये, विसर्पदुच्छृङ्खलशङ्ख-काहलाकोलाहलः विसर्पन्-प्रसरन्, उच्छृङ्खलः-उच्चः, शङ्खस्य, काहलायाः-महाढक्कायाः, कोलाहलः-ध्वनिर्यस्मिंस्तादृशः; पुनः स्फुटप्रसृतटङ्कारेण स्फुटं-स्पष्टं यथा स्यात् तथा, प्रसृतः प्रवृद्धः, टङ्कारः-ध्वनिविशेषो येन तादृशेन, वारं वारम् अनेकवारम्, आस्फालितद्विगुणबाहुफलकानाम् आस्फालितेन-आहननेन यद्वा आस्फालिते-आहते, द्विगुणे-द्विगुणस्थूले, बाहुफलके-भुजपरिघौ येषां यैर्वा तेषां, मल्लानां मल्लपुरुषाणाम्, आस्फोटरवेण भुजास्फालनध्वनिना, उल्लासितः उन्नमितः; पुनः चतुरचारणवृन्दजयशब्दपरम्पराभिः चतुरस्य-निपुणस्य, चारणवृन्दस्य-वन्दिगणस्य, जयशब्दपरम्पराभिः-जयकारश्रेणीभिः, इतस्ततः अत्र तत्र, विस्तारितः वर्धितः, कीदृशीभिः? सविस्तरस्तुतिवृत्तपाठपुरस्सरीभिः सविस्तरः-विस्तारसहितो यः, स्तुतिपाठ-वृत्तयोः-प्रशंसाचारित्रयोः, पाठः-कीर्तनं, तत्पुरस्सरीभिः-तत्प्रमुखाभिः, पुनः तारम् उच्चैः, उच्चरन्तीभि उद्गच्छन्तीभिः, पुनः अनेकवेणु-वीणारवसहस्रसंवर्धितः अनेकेषां वेणूनां-वंशमयवाद्यानां, वीणानां च रवसहस्रैः-सहस्रसंख्याकध्वनिभिः, संवर्धितः विस्तारित; किं कुर्वन्निव? अमृतस्रोतसा अमृतप्रवाहेण, गगनमार्गम् आकाशमार्गम्, प्लावयन्निव प्रवाहयन्निव; पुनः कीदृशः? अतिशयश्रव्यः अत्यन्तश्रवणार्हः [आ]। अहं परमयोगीव उत्कृष्टयोगीव, अवधाननिश्चलेन ऐकाग्र्यस्थिरेण, चेतसा, अश्रुतपूर्वं पूर्वमश्रुतं, तं निनदं, श्रुत्वा, क्षणमात्रं किंचित्कालम्, उपजाततत्प्रभवदर्शनाभिलाषः उपजातः-उत्पन्नः, तत्प्रभवस्य-तदुत्पत्तिस्थानस्य, दर्शनाभिलाषः-साक्षात्काराभिलाषो यस्य तादृशः, निकटवर्तिनं पार्श्ववर्तिनं, नरेन्द्रलोकं नृपजनम्, आत्मपरिजनं स्वपरिवारं च, प्रेष्य प्रस्थाप्य, पार्श्वविधृतचामरच्छत्रधारादिद्वित्रपरिचारकः पार्श्वे-निकटे, विधृताः-अवस्थापिताः, चामरच्छत्रधारादयः, द्वित्राः-द्वौ वा त्रयो वा, परिचारकाः-सेवका येन तादृशः, तारकं तदाख्यकर्णधारम्, अवोचम् उक्तवान्, कीदृशम्? तत्कालं तत्क्षणम्, अन्तिकस्थं निकटस्थम्, पुनः उदधिकूलासन्नसलिलस्थिरावस्थापितनावम् उदधिकूलस्य-समुद्रतटस्य, आसन्ने-निकटे, सलिले-जले, स्थिरं यथा स्यात् तथा, अवस्थापिता-धृता नौर्येन तादृशम्, पुनः अच्छिन्नसन्तानम् अविरतसन्ततिकं यथा स्यात् तथा, आगच्छतः आपततः, तस्य प्रकृतस्य, गीतध्वनेः गानशब्दस्य, तच्छ्रवण इत्यर्थः, दत्तावधानं समाहितहृदयं, ध्याननिश्चलनयनतारकं ध्यानेन-मनःसमाधानेन, निश्चला-स्थिरा, नयनतारका-नेत्रकनीनिका यस्य तादृशम् [ इ ]। किमवोचमित्याह-सखे! मित्र!, किमपि सुन्दरः अनिर्वचनीयमनोहरः, एषः गीतनिःष्यन्दः गीतप्रवाहः, गीतनिनाद इति पाठे गानध्वनिः, वारं

मैकान्ततो विनिपातभीरुर्मन्त्रीव यात्राभियोगभङ्गार्थमर्थशास्त्रप्रदर्शितेन वर्त्मना देशकालसहायवैकल्यादीनि कारणान्यकारणमेव दर्शय, सक्लेशमस्तु यदि वा क्लेशरहितम्, अवश्यमेव तावद् गन्तव्यमवगन्तव्यं च गीतध्वनेरस्य तत्त्वम्, अकृतगमनो न तावदधुना प्रयत्नेनापि शक्नोमि चेतसः कुतूहलतरलितस्य त्वराभङ्गं कर्तुं, कृत्वापि कृच्छ्रेणावासमुपगतः प्रत्यग्रेण पश्चात्तापहुतभुजा दन्दह्यमानदेहो दिवसमपि न स्वस्थचित्तः स्थास्यामि, प्राप्तनिजभूमेरपि समुद्रयात्रावासरेषु स्मरणमस्योपजायमानं न मे कारणमनणीयसो रणरणकस्य न भविष्यति [ लृ ]। एवं च स्थिते क्लेशोऽपि वरमल्पकालमनुभूतः शरीरेण स्तोको न जीवितावधिर्मनसा महान् शोकः, यदि च निमित्तशास्त्रं प्रमाणं ततः सोऽपि गच्छतामस्माकमिह नास्ति, सर्वत्र निरपाया प्रमोदहेतुश्च यात्रेयमिति भावय स्वयं तत्त्वदृष्ट्या, न हि सन्निकृष्टायामापदि दुरुपपादायां च कल्याणसंपदि कदाचिदीदृशी निरातङ्कता त्वरा च चित्तवृत्तेर्भवति, तदलमपायशङ्कया, कुरु स्थिरमस्थान एव भङ्गुरीभूतं चेतः, चिन्तय प्रस्थानकालोचितं सकलमात्मीयकल्पम्, अर्पय तमस्तिरोहितवस्तुसाक्षात्करणाय रजनीसमयक्षेपणीयमीक्षणयोरञ्जनम्, नियोजयाऽन्ययानपात्रिकासक्तिनिरपेक्षः सहायपक्षे युगायतं निजमेव भुजयुगलम्, अभ्य-

---

तवापि, अभिलाषः तदन्वेषणैषणा, वर्तत इति शेषः, तत् तर्हि, विलम्बितुं तदन्वेषणे विलम्बं कर्तुम्, अलं व्यर्थम्, उत्तिष्ठ, गमननिष्ठः प्रयाणपरः, भव। मन्त्रीव विनिपातभीरुः अनर्थागमभयान्वितः सन्, यात्राभियोगभङ्गार्थं प्रयाणोद्यमविलोपार्थम्, अर्थशास्त्रप्रदर्शितेन नीतिशास्त्रप्रदर्शितेन, वर्त्मना मार्गेण, देशकालसहायवैकल्यादीनि कारणानि समुचितदेशकालाभावादिप्रयाणप्रतिबन्धहेतून्, अकारणमेव अहेतुकमेव, एकान्ततः नियमेन, न दर्शय ब्रूहि। यदि सक्लेशं क्लेशपूर्वकम्, वा अथवा, क्लेशरहितं विनैव क्लेशम्, अस्तु गमनं भवतु, अवश्यं तावत् प्रथमं, गन्तव्यं तत्र प्रस्थातव्यम्, च पुनः अस्य श्रूयमाणस्य, गीतध्वनेः गानशब्दस्य, तत्त्वं याथातथ्यम्, अवगन्तव्यं निश्चेतव्यम्। अकृतगमनः अविहिततदन्वेषणार्थप्रयाणः, प्रयत्नेनापि महता यत्नेनापि, कुतूहलतरलितस्य तदौत्सुक्याकुलितस्य, चेतसः हृदयस्य, त्वराभङ्गम् औत्सुक्यशान्तिम्, तावदिति वाक्यालङ्कारे, अधुना इदानीं, कर्तुं न, शक्नोमि पारयामि; कृच्छ्रेण क्लेशेन, कृत्वापि कथमपि तद्भङ्गं विधायापि, आवासं निजनिवासस्थानम्, उपगतः उपस्थितः सन्, प्रत्यग्रेण अभिनवेन, पश्चात्तापहुतभुजा यथावत् तदकरणजन्यानुतापवह्निना, दन्दह्यमानदेहः जाज्वल्यमानशरीरः, दिवसमपि दिनमेकमपि, स्वस्थचित्तः प्रकृतिस्थमनाः, न स्थास्यामि वर्तिष्ये। प्राप्तनिजभूमेरपि उपगतस्वराजधानीकस्यापि, मे मम, समुद्रयात्रावासरेषु समुद्रयात्राव्यतीतदिनावसरेषु, अस्य गानध्वनेः, स्मरणम्, उपजायमानं प्रवर्तमानं सत्, अनणीयसः अत्यधिकस्य, रणरणकस्य उद्वेगस्य, कारणं, न भविष्यति भविष्यत्येवेत्यर्थः [ लृ ]। एवं स्थिते च ईदृशस्थितौ तु, शरीरेण अल्पकालं किञ्चित् कालम्, अनुभूतः उपभुक्तः, स्तोकः अल्पः, क्लेशोऽपि दुःखमपि, वरम् ईषत्प्रियम्, किन्तु मनसा अन्तःकरणेन, अनुभूत इति शेषः, जीवितावधिः जीवनपर्यन्तः, शोकः पश्चात्तापः, न वर इति शेषः। यदि च निमित्तशास्त्रं शकुनशास्त्रं प्रमाणम्, ततः तर्हि, सोऽपि क्लेशोऽपि, इह अस्मिन् मार्गे, गच्छतां प्रतिष्ठमानानाम्, अस्माकं, नास्ति न सम्भवति, सर्वत्र सर्वस्मिन् मार्गे, निरपाया क्लेशरहिता, प्रत्युत प्रमोदहेतुश्च शुभजनिका च, इयं यात्रा, भवेदिति शेषः, इति स्वयं तत्त्वदृष्ट्या यथार्थधिया, भावय आलोचय, हि यतः, आपदि विपत्तौ, सन्निकृष्टायां प्रत्यासन्नायां, च पुनः, कल्याणसम्पदि शुभसम्पत्तौ, दुरुपपादायां दुरवापायां विप्रकृष्टायामिति यावत्, कदाचित् कदापि, चित्तवृत्तेः मनोवृत्तेः, ईदृशी एवंविधा, निरातङ्कता अपायशङ्काशून्यता, च पुनः, त्वरा तदनुसन्धानार्थप्रयाणातुरता, न भवति सम्भवति, तत् तस्माद्धेतोः, अपायशङ्कया आपत्तिसंशयेन, अलं व्यर्थम्; अस्थान एव अनवसर एव, भङ्गुरीभूतम् आपच्छङ्कया सम्भ्रान्तं, चेतः अन्तःकरणं, स्थिरीकुरु स्वास्थ्यमापादय। प्रस्थानकालोचितं प्रयाणावसरोचितं यथा स्यात् तथा, सकलं समग्रमपि, आत्मीयकल्पम् आत्मनः कर्तव्यविधिं, चिन्तय अवधेहि, पुनः तमस्तिरोहितवस्तुसाक्षात्करणाय तिमिरव्यवहितपदार्थविलोकनार्थं, रजनीसमयक्षेपणीयं रात्रिसमयेऽर्पणीयम्, ईक्षणयोः नेत्रयोः, अञ्जनं कज्जलम्, अर्पय लगय; अन्ययानपात्रिकासक्तिनिरपेक्षः अन्यपोतप्रत्यासत्त्यपेक्षारहितः सन्, सहायपक्षे सहकारि-

इति ब्रुवाणे मयि क्षणमधोमुखः स तूष्णीं स्थित्वा जगाद—'युवराज! गम्यते न कश्चिदपि दोषः, दृश्यते च कौतुकमिदम्, किं तु सर्वत एव दुर्गः पर्वतस्यास्य पर्यन्तेषु तोयराशिर्न शक्यते महान्तं यत्नमन्तरेण यानपात्रिकैरवगाहयितुम्; अत्र हि महाप्रमाणाः संचरन्ति जलचराः, पदे पदे प्रकृतिदुस्तराः प्रवहणानां निवर्तयन्ति गतिमावर्ताः, स्थाने स्थाने शिथिलयन्ति यात्रोत्साहमतिशयोदग्रास्तटग्रावाणः [ ऋ ]। ईदृशे च निसर्गदुरवतारे नीरधावनवधारिते कर्णधारेषु केनापि निरपाये पथि यथावदविभाव्यमानसमानसमविषमभागायां विभावर्यामनुक्षणमपेक्षणीयसाहायकेष्वनासन्नवर्तिष्वपरयानपात्रेषु यानमत्यन्तसङ्क्लेशमिति मन्यमानस्य मे मनाङ्मन्दायते चित्तम्, अभिलापस्तु न केवलं कुमारस्य ममाप्यस्ति गन्तुम्, यतः—पूर्वमप्येकदाऽस्माभिरिहावासितैः श्रुतोऽयमासीदन्यैरपि कर्णधारैरनेकशः कथितमत्र ध्वनेरस्य सामान्येन समुत्थानं न तु विशेषतः—यतोऽयं प्रवर्तते यो वास्य प्रवर्तक इति कुतोऽपि विशेषोपलब्धिरुपजाता [ ॠ ], इत्यभिहिते तेन समधिकोत्पन्नकौतुकः पुनरवोचम्—'सखे! यदि तवाप्यभिलापस्तदलं विलम्बितुम्, उत्तिष्ठ गमननिष्ठो भव,

---

टिप्पनकम्—यानं गमनम् [ ऋ ]।

---

**समासन्नदेशप्रभवः** अतिनिकटदेशोत्पन्नः, इति **ताल-लयविशेषाणां** तालशब्दः करतले करास्फोटे कांस्यमयवाद्यभेदे गीतादौ क्रियमाणादिकालक्रियामानादौ च वर्तते, नृत्यगीतवाद्यानामेकतानता लयः, तद्विशेषाणां—तत्प्रकाराणाम्, **व्यक्ततयैव** स्फुटतयैव, **अवगतं** निश्चितम् [ ऊ ]। मयि, इति अनुपदोक्तप्रकारं, **ब्रुवाणे** कथयति सति, **सः** तारकः, **अधोमुखः** अवनतवदनः सन्, **क्षणं तूष्णीं** निःशब्दं, स्थित्वा, **जगाद** उक्तवान्, किमित्याह—युवराज! **गम्यते** तदनुसन्धानाय प्रस्थीयते, **कश्चिदपि** कोऽपि, **दोषः** आलस्यादिः, न विद्यत इति शेषः, **च** पुनः, **इदं** वर्तमानं, **कौतुकं** उत्सवः, तावकं तदन्वेषणौत्सुक्यं वा, **दृश्यते** अनुभूयते, **किन्तु** परन्तु, **सर्वत एव** सर्वेष्वेव मार्गेषु, **दुर्गः** दुरवगाहः, अस्य सुवेलाख्यस्य पर्वतस्य, **पर्यन्तेषु** प्रान्तेषु, विद्यमान इति शेषः, **तोयराशिः** समुद्रः, **यानपात्रिकैः** पोतिकैरपि, **महान्तं** प्रचुरं, **यत्नम्** आयासम्, **अन्तरेण** विना, **अवगाहयितुं** प्रवेष्टुं, न **शक्यते** पार्यते; **हि** यतः, **अत्र** अस्मिन् समुद्रे, **महाप्रमाणाः** अतिविस्तृताः, **जलचराः** जलजन्तवः, **सञ्चरन्ति** उच्छलन्ति, पुनः **पदे पदे** स्थाने स्थाने, **प्रकृतिदुस्तराः** स्वभावतो दुरतिक्रमाः; **आवर्ताः** जलभ्रमयः, **प्रवहणानां** पोतानां, **गतिं** गमनं, **निवर्तयन्ति** निरुन्धन्ति; पुनः **स्थाने स्थाने** प्रत्येकस्थाने, **अतिशयोदग्राः** अत्यन्तोन्नताः, **तटग्रावाणः** तटस्थप्रस्तराः, **यात्रोत्साहं** प्रयाणोद्यमं, **शिथिलयन्ति** मन्दीकुर्वन्ति [ ऋ ]। **ईदृशे** एवंविधे, **निसर्गदुरवतारे** स्वभावतो दुरवगाहे, **नीरधौ** समुद्रे, **कर्णधारेषु** कैवर्तानां मध्ये, **केनापि**, **अनवधारिते** अनिर्णीते, **निरपाये** निरापत्के, **पथि** मार्गे, **यथावत्** यथायथम्, **अविभाव्यमानसमानसमविषमभागायाम्** अविभाव्यमानौ—अनवधार्यमाणौ, अत एव समानौ—तुल्यौ, समविषमभागौ—समतल-विषमोन्नतभागौ यस्यां तादृश्यां, **विभावर्यां** रात्रौ, **अनुक्षणं** प्रतिक्षणम्, **अपेक्षणीयसहायकेषु** अपेक्षणीयम्—आश्रयणीम्, सहायकं—साहाय्यं येषां तादृशेषु, **अपरयानपात्रेषु** अन्यपोतेषु, **अनासन्नवर्तिषु** अनिकटवर्तिषु सत्सु, **यानं** प्रयाणम्, **अत्यन्तसङ्क्लेशम्** अतिक्लेशसाध्यम्, इति **मन्यमानस्य** बुध्यमानस्य, **मे** मम, **चित्तं** हृदयं, **मनाक्** किञ्चित्, **मन्दायते** शिथिलायते; **गन्तुं** प्रस्थातुम्, **अभिलापस्तु** वाञ्छा तु, केवलं **कुमारस्य** भवतः, **न** न, अपितु **ममापि अस्ति** वर्तते। **यतः** यस्माद्धेतोः, **एकदा** एकस्मिन् काले, **पूर्वमपि**, **इह** अस्मिन् स्थाने, **आवासितैः** निवासितैः, अस्माभिः, **अयं** ध्वनिः, **श्रुतः** श्रवणगोचरीकृतः, **आसीत्**, **अन्यैरपि** वर्तमानकर्णधारव्यतिरिक्तैरपि, **कर्णधारैः** कैवर्तैः, **अत्र** अस्मिन् स्थाने, **अस्य** प्रकृतस्य, **ध्वनेः**, **सामान्येन** अविशेषेण, **समुत्थानं** समुद्गमः, **कथितम्** उक्तम्, आसीत्, **न तु विशेषतः** विशेषेण, **यतः** यस्मात् स्थानात्, **अयं** ध्वनिः, **प्रवर्तते** प्रादुर्भवति, **वा** अथवा, **अस्य** ध्वनेः, यः **प्रवर्तकः** प्रादुर्भावक इति, **कुतोऽपि** कस्मादपि, **विशेषोपलब्धिः** विशेषपरिचयः, **उपजाता** अभूत् [ ॠ ]। इति इत्थं, **तेन** तारकेण, **अभिहिते** उक्ते सति, **समधिकोत्पन्नकौतुकः** उत्पन्नप्रचुरतरौत्सुक्यः सन्, पुनः **अवोचम्** उक्तवानहम्, किमित्याह—**सखे!** भो मित्र! यदि

अथ तेन सा स्वभावधीरेण, सम्यगभ्यस्तयानपात्रप्रचारकर्मणा, यथाविभागमवस्थितैः स्थैर्यवद्भिरन्तिकस्थसकलस्वोपकरणैरमूढबुद्धिभिर्विधुरेषु पञ्चषैः कर्णधारैरात्मनः सहायीकृतैरनुगम्यमानेन, सर्वतो दत्तसप्रयत्नदृष्टिना रक्षता निपुणमद्रितटसंघट्टम्, अनुवेलमीक्षमाणेन सुश्लिष्टबन्धानपि फलकसन्धीन्, निरुन्धता तूर्णमूर्णासिक्थकेन सूक्ष्ममपि विवरेभ्यः क्षरत्तोयमनुक्षणम्, अनिलसंक्षोभेषु नूतनाः संयोजयता रज्जूः; अजर्जरस्यापि वारं वारमापादयता सितपटस्य पाटवम् [ ओ ];

'इतश्चङ्क्रम्यते मकरचक्रम्, इतः परिक्रामति नक्रनिकरः, इतः सरति शिशुमारश्रेणिः, इतः प्रसर्पति सर्पपङ्क्तिः, उत्सर्पयत दीपिकाः, प्रकाशयत सर्वतो मार्गम्, अपसारयत निकटचारिणो दूरं दुष्टजलचरान्; अयमनुप्रस्थमचलस्य चटुलवेल्लितलाङ्गूलयष्टिरार्द्रवल्लूरशङ्कया रक्तांशुकपताकासु पातितदृष्टिरुत्पित्सुरिव चेष्टते सिंहमकरः, किरत रंहसाभिमुखमस्य पयसि ज्वलन्तीरग्नितैलच्छटाः; इदमकस्मादसदवलोकनक्षुभितमुत्रस्त-

---

टिप्पनकम्—पञ्चषैः पञ्चषट्प्रमाणैः । सिक्थकं–दमनम् । क्षरत् प्रविशत् [ ओ ] ।

---

प्रसर्पता–प्रसरता, उवाष्पा–उद्धतेन, हर्षेण, उत्थापितः–जागरितः सन्, किञ्चित् ईषत्, सशेषनिद्र इव अवशिष्टनिद्र इव, जृम्भितुं जृम्भां मुखविकासरूपां मोक्तुम्, अन्यच्च विकसितुं, प्रारभत प्रावर्तत [ पे ] ।

अथ अनन्तरं, सा नौः, तेन तारकेण, नीयमाना उह्यमाना सती, स्वल्पेनैव अल्पेनैव, समयेन, दूरं जगाम गतवतीत्यग्रेणान्वेति; कीदृशेन तेन? स्वभावधीरेण प्रकृतिविरुधैर्यशालिना; पुनः सम्यगभ्यस्तयानपात्रप्रचारकर्मणा सम्यक्–सुष्ठु यथा स्यात् तथा, अभ्यस्तम्–अनुशीलितं, यानपात्रस्य–पोतस्य, प्रचाररूपं–संचालनरूपं, कर्म–कार्यं येन तादृशेन; पुनः यथाविभागं यथास्थानम्, अवस्थितैः उपविष्टैः, पुनः स्थैर्यवद्भिः स्थिरैः, पुनः अन्तिकस्थसकलस्वोपकरणैः अन्तिकस्थं–पार्श्ववर्ति, सकलं–समग्रं, स्वस्य उपकरणं येषां तादृशैः, पुनः विधुरेषु आपत्सु, अमूढबुद्धिभिः अविवेकशून्यहृदयैः, पुनः आत्मनः स्वस्य, सहायीकृतैः सहकारितां नीतैः, पञ्चषैः पञ्चभिः षड्भिर्वा, कर्णधारैः नाविकैः, अनुगम्यमानेन अनुस्रियमाणेन; पुनः सर्वतः परितः, दत्तसप्रयत्नदृष्टिना व्यापारितसावधानदृष्टिकेन; पुनः अनुवेलं प्रतिक्षणम्, अद्रितटसंघट्टं पर्वतैकदेशसंघर्षम्, निपुणं–सम्यक्, रक्षता वारंवारयत्नं परिहारयता; पुनः सुश्लिष्टबन्धानपि दृढबन्धानपि, फलकसन्धीन् नौप्रपटककाष्ठपट्टिकासन्धिस्थानानि, ईक्षमाणेन अवलोकमानेन; पुनः विवरेभ्यः नौकाछिद्रेभ्यः, क्षरत् प्रविशत्, सूक्ष्ममपि स्वल्पमपि, तोयं जलम्, ऊर्णासिक्थकेन ऊर्णातन्तुमिश्रितमधूच्छिष्टेन, तूर्णं सत्वरं, निरुन्धता वारयता; पुनः अनिलसंक्षोभेषु पवनोद्वेलनेषु सत्सु, अनुक्षणं प्रतिक्षणं, नूतनाः नवीनाः, रज्जूः, संयोजयता संघटयता; पुनः अजर्जरस्यापि अजीर्णस्यापि, सितपटस्य नौकोपरिसंघटितश्वेतवस्त्रस्य, वारं वारम् अनेकवारम्, पाटवम् उत्सर्पणसौष्ठवम्, आपादयता सम्पादयता [ ओ ] ।

पुनः अवसरेषु यथावसरम्, इत्यादि एवमादिकं, यथाक्रमं, साध्वसकरं भयजनकं, च पुनः, कर्तव्योपदेशपरं कर्तव्यावेदनपरं, च पुनः, सप्रार्थनं प्रार्थनापरं, च पुनः, सपरिहासं परिहाससहितं, जल्पता कथयता, इत्यमिनं विज्ञपनम् । किमादीत्याह–इतः अस्मिन् स्थाने, मकरचक्रं मकरजातीयजलजन्तुगणः, चङ्क्रम्यते पुनः पुनरतिशयेन योच्छलति, पुनः इतः अस्मिन् स्थाने, नक्रनिकरः नक्रजातीयजलजन्तुगणः, परिक्रामति पर्यटति, पुनः इतः अस्मिन् प्रदेशे, शिशुमारश्रेणिः शिशुमारजातीयजलजन्तुसन्ततिः, सरति गच्छति, पुनः इतः अत्र स्थाने, सर्पपङ्क्तिः सर्पावलीसमूहः, प्रसर्पति प्रचरति, दीपिकाः दीपान्, उत्सर्पयत उत्थापयत, पुनः मार्गं सर्वतः परितः, प्रकाशयत उद्भासयत, पुनः निकटचारिणः निकटगामिनः, दुष्टजलचरान् हिंसकजलजन्तून्, दूरम्, अपसारयत अपनयत । पुनः अचलस्य पर्वतस्य, अनुप्रस्थं प्रस्थः–पर्वतस्य सानुरूपभूमिः, प्रस्थं प्रस्थं प्रतीति अनुप्रस्थम्, चटुलवेल्लितलाङ्गूलयष्टिः चटुलं–सत्वरं यथा स्यात् तथा, वेल्लिता–उच्छलिता, लाङ्गूलरूपा–पुच्छरूपा, यष्टिः–लता येन तादृशः, अयं सिंहमकरः सिंहरूपो मकरः, आर्द्रवल्लूरशङ्कया आर्द्रमांसशङ्कया, रक्तांशुकपताकासु रक्तवर्णवस्त्रनिर्मितपताकासु, दत्तदृष्टिः अर्पितचक्षुः सन्, उत्पित्सुरिव उत्पतितुमिच्छुरिव, चेष्टते चेष्टां करोति, रंहसा वेगेन, अस्य सिंहस्य, अभिमुखं सम्मुखं, पयसि

वसितस्य ते गोष्पदमदृश्यमानपारः सकलोऽप्यकूपारः, किं पुनश्चक्षुःपरिच्छेद्यमहिमा तदेकदेशः ?' [ ऌ ] इति ब्रुवाणे मयि क्षणं स दोलायमानचित्तः स्थित्वा पुनरवादीत्—'कुमार! भ्रूक्षेपमात्रव्यापारणीये मयि किमियता वचनविस्तरेण ?, यद्यवश्यमेव गन्तव्यमिति निश्चयस्तत्र कश्चिदपि ते कौतुकप्रतिपन्थी, प्रस्थीयताभ्युदयाय, सज्जोऽयमाजन्मनः परिपोषितः सर्वेष्वन्यराजकार्येष्वनुपयुक्त एतावन्मात्रप्रयोजनः प्रेष्यजनः' इत्यभिधाय प्रणतेन मूर्ध्ना बद्ध्वा नमस्काराञ्जलिमुदन्वते तत्क्षणोपनताभिप्रेतशकुनप्रगुणितमनोवृत्तिः प्रवर्तयामास गमनायासदोलायमानध्वजध्वनितकिङ्किणीनिबद्धोद्धुरविरावां नावम्, प्रावर्तयच्च प्राचेतसेन मसृणमसृणमनुसृततूर्यनिस्वनो दिक्पथेन [ ए ]। प्रस्थितायां च तस्यां सहसैव स्पन्दिताधरपुटमचिरभाविनमानन्दमिव मे निवेदयामास दक्षिणं चक्षुः, आश्चर्यदर्शनत्वरयेव सर्वतो विभाव्यमानरम्यरोमोद्भेदमश्वमिव जात्यमनिमित्तमेवारुरोह हर्षप्रकर्षमन्तरात्मा, हृदयप्रसर्पदुद्दामहर्षोत्थापितश्च किञ्चित् सशेषनिद्र इव प्रारभत जृम्भितुमायताध्वपरिश्रमप्रसुप्तो गमनोत्साहः [ ऐ ]।

---

टिप्पनकम्—प्राचेतसेन वारुणेन। मसृणमसृणं मन्दं मन्दम् [ ए ]। सशेषनिद्र इव जृम्भितुं जृम्भां मोक्तुम्, अन्यत्र विकसितुम् [ ऐ ]।

---

पदे, युगायतं वृषस्कन्धारोप्यशकटाग्रदण्डवद्दीर्घं, निजं स्वकीयं, भुजयुगलमेव बाहुद्वयमेव, नियोजय जलचरावर्ततटप्रावादिगमनप्रतिबन्धकापनयनाय स्थापय, अध्यवसितस्य गमनोद्युक्तस्य, ते तव, अदृश्यमानपारः अलक्ष्यमाणचरमावधिः, सकलोऽपि समग्रोऽपि, अकूपारः सागरः, गोष्पदं गोपदप्रमाणः, तर्हि चक्षुःपरिच्छेद्यमहिमा चक्षुषैव प्रमेयमहत्ताकः, तदेकदेशः सागरैकावयवः, किं पुनः तस्य गोष्पदत्वं किमुतेत्यर्थः [ ऌ ]। मयि, इति इत्थं, ब्रुवाणे कथयति सति, सः तारकः, क्षणं क्षणपर्यन्तं, दोलायमानचित्तः गमनागमनानवधारणक्षुब्धहृदयः सन्, स्थित्वा मौनमास्थाय, पुनः, अवादीत् उक्तवान्, किमित्याह–कुमार!, भ्रूक्षेपमात्रव्यापारणीये भ्रूक्षेपात्मकसंकेतमात्रप्रवर्तनीये, मयि, इयता एतावता, वचनविस्तरेण वागाडम्बरेण, किं प्रयोजनमिति शेषः, न किमपीत्यर्थः, यदि अवश्यमेव, किं गन्तव्यं प्रस्थातव्यमिति निश्चयः, अस्तीति शेषः, तत् तर्हि, ते तव, कश्चिदपि कोऽपि, कौतुकप्रतिपन्थी गमनाभिलाषप्रतिबन्धी, न, वर्तत इति शेषः, अभ्युदयाय मङ्गलाय, प्रस्थीयतां गन्तुमारभ्यताम्, आ जन्मनः जन्मारभ्य, परिपोषितः प्रतिपालितः, सर्वेषु समस्तेषु, अन्यराजकार्येषु राजोचितकार्यान्तरेषु, अनुपयुक्तः अकृतोपयोगः, किन्तु एतावन्मात्रप्रयोजनः एतत्कार्यमात्रोपयोगी, अयं प्रेष्यजनः भृत्यजनः, सज्जः प्रस्थानाय सन्नद्धः, अस्तीति शेषः। इत्यभिधाय इत्युक्त्वा, प्रणतेन अवनतेन, मूर्ध्ना मस्तकेन, उदन्वते समुद्राय, नमस्काराञ्जलिं नमस्कारात्मककरसम्पुटं, बद्ध्वा विरचय्य, तत्क्षणोपनताभिप्रेतशकुनप्रगुणितमनोवृत्तिः तत्क्षणोपनतैः–तत्कालोपस्थितैः, अभिप्रेतशकुनैः–अभिमतशुभसूचकवस्तुभिः, प्रगुणितमनोवृत्तिः–प्रवर्तितचित्तवृत्तिः सन्, गमनायासदोलायमानध्वजध्वनितकिङ्किणीनिबद्धोद्धुरविरावां गमनायासेन–गमनवेगेन, दोलायमाने–व्याघूर्णमाने, ध्वजे–पताकायां, ध्वनिताभिः–ध्वनिं कुर्वन्तीभिः, किङ्किणीभिः–क्षुद्रघण्टिकाभिः, निबद्धाः–कृताः, उद्धुराः–उच्चाः, विरावाः–ध्वनयो यस्यां तादृशीं, नावं प्रवर्तयामास प्रेरयामास; च पुनः, प्राचेतसेन वरुणस्वामिकेन, पश्चिमेनेत्यर्थः, दिक्पथेन दिङ्मार्गेण, अनुसृततूर्यनिस्वनः अनुसृतः तूर्यस्य–वाद्यविशेषस्य, निस्वनः–निनादो येन तादृशः, मसृणमसृणं मन्दं मन्दं यथा स्यात् तथा, प्रावर्त्तयत् प्रेरितवान्, नावमिति शेषः [ ए ]। च पुनः, तस्यां नावि, प्रस्थितायां गन्तुं प्रवृत्तायां सत्याम्, सहसैव अकस्मादेव, मे मम, स्पन्दिताधरपुटं किञ्चिच्चलितपुटाकाराधराधोभागं, दक्षिणं चक्षुः, अचिरभाविनं शीघ्रभाविनम्, आनन्दं शुभं, निवेदयामास इव सूचयामास इवेत्युत्प्रेक्षा। पुनः आश्चर्यदर्शनत्वरयेव आश्चर्यावलोकनौत्सुक्येनेव, सर्वतः परितः, विभाव्यमानरम्यरोमोद्भेदं विभाव्यमानः–लक्ष्यमाणः, रम्यः–मनोहरः, रोमोद्भेदः–रोमाञ्चो यस्मिंस्तादृशं, जात्यं प्रशस्तम्, अश्वमिवेत्युत्प्रेक्षा, अन्तरात्मा अन्तःकरणं, हर्षप्रकर्षं हर्षोत्कर्षम्, अनिमित्तमेव अकस्मादेव, आरुरोह आरूढवत्। च पुनः, आयताध्वपरिश्रमप्रसुप्तः आयतेन–दीर्घेण, अध्वना–मार्गेण, मार्गगमनेनेति यावत्, यः परिश्रमः–खेदः, तेन प्रसुप्तः–प्रशयितः, गमनोत्साहः यानध्वनिगवेषणार्थप्रयाणोत्साहः, हृदयप्रसर्पदुद्दामहर्षोत्थापितः हृदये–अन्तःकरणे,

रुद्गमनशंसी सागरोद्देशः, तटमिव पुरस्तरङ्गैरुच्छलद्भिरुद्भ्राम्यते कुरुत वंशक्षेपमन्तर्वारि, दुर्वात इव दृश्यते मुकुलयत सितपटरज्जुजालम्, अग्रतो विसारिमत्स्य इव वहति लम्बयत नांगरानविलम्बितं [ अं ]; मित्राणि! मन्दोऽतिमात्रं मरुत्, प्रलम्बैर्बाहुभिर्वाहयत सत्वरमरित्राणि, मकरक! मनागुदञ्चय मार्गतटरुहश्चन्दनतरोरस्य तिरश्चीमुपरिशाखाम्, मूर्ख! किमधोमुखं स्थितोऽसि मुधा, बधान हस्त एनं मण्डूकमस्तकमणिम्, अवश्यं न दश्यसे दन्दशूकैः, सकुलक! विधेहि वेदोद्धारिणः शकुलस्य केलिम्, उद्धर रक्ततैलपङ्कमग्नमूलामिमां नावम्, अधीर! माऽवधीरय मद्वचः, विचर निराकुलो, नक्रनसयाऽक्षितलोचनस्य स्थलं ते सकलमम्बुधिजलं, शम्बूक! वाढं प्रचलायसे, न चेतयसि ग्राहेणापि गृह्यमाणचरणः, चेतसि कृतं वैलक्ष्येण, क्षालय क्षारेण सामुद्रेण वारिणा वारं वारमास्यं, यास्यति द्रागेव निद्रा सहेक्षणाभ्यां क्षयं, राजिलक! तर्जितोऽपि नोपरमसि, प्रगुणयायिनीमपि नावमागस्तीं गतिं ग्राहयसि, अस्ति कश्चिन्न ते दिङ्मोहः? यदुदाहृतामप्यहृदय! न जानास्युत्तराशावर्तनीम्, प्रवर्तस्व दृष्ट्वा दृष्ट्वा सप्तर्षिमण्डलम्' [अः]

---

टिप्पनकम्—क्षेपीयः क्षिप्रतरम् [अ]। ऊर्ध्वं च ऊर्ध्वं मुत्पाटयन् (? उदञ्चय ऊर्ध्वमुत्पाटय) [अः]।

---

निपीत –तिरोभावित, कल्लोलस्य–महातरङ्गस्य, कालिमा–कृष्णता यस्मिंस्तादृश, अत एव अनिलं पवनं, पातुम्, उद्यतस्य कृतोद्योगस्य, कस्यचित् अविज्ञातनामकस्य, महाहेः महासर्पस्य, उद्गमनशंसी उत्सर्पणावेदक, अयं सागरोद्देशः सागरान्तर्गतोन्नतदेश, क्षेपीयः अतिशीघ्रम्, लङ्घ्यताम् अतिक्रम्यताम्, य सागरोद्देश, पुरः अग्रे, उच्छलद्भिः उच्छलद्भिः, तरङ्गै, तटमिव तीरमिव, उद्भ्राम्यते भ्राम्यते, अत एव अन्तर्वारि जलमध्ये, वंशक्षेपं नावहठे गतिरोधनादिकृते वा वंशप्रक्षेपण, कुरुत, पुन दुर्वात इव उद्धतपवन इव, दृश्यते, अत एव सितपटरज्जुजाल सितपटानां–श्वेतवस्त्राणां, रज्जूनां च, जाल–समूह, मुकुलयत सङ्कोचयत, पुन अग्रे विसारिमत्स्य इव विसारिजातीयमत्स्यविशेष इव, वहति स्पन्दते, अत एव नागरान् लाङ्गराणि, अविलम्बितं सत्वरं, लम्बयत नमयत [अ]। पुनः मित्राणि! भो सखाय!, मरुत् पवन, अतिमात्रम् अत्यन्तं, मन्दः अनुद्धत, अस्तीति शेष, अत. प्रलम्बैः दीर्घैः, बाहुभिः भुजै, अरित्राणि नौसञ्चारणकाष्ठानि, वाहयत चालयत। पुन मकरक! तन्नामक!, मार्गतटरुहः मार्गप्रान्तप्ररूढस्य, यद्वा मार्गभूततटप्ररूढस्य, अस्य पुरोवर्तिन, चन्दनतरोः चन्दनवृक्षस्य, तिरश्चीं कुटिलाम्, उपरिशाखाम् ऊर्ध्वशाखां, मनाक् किञ्चित्, उदञ्चय उन्नय, मूर्ख! भो निष्प्रज्ञ!, मुधा व्यर्थम्, अधोमुखम् अवनतमुखं यथा स्यात् तथा, किम्? किमर्थम्, स्थितः उपविष्ट, असि वर्तसे, एनम् इमं, मण्डूकमस्तकमणिं मण्डूकस्य–भेकस्य, मस्तके यो मणि –रत्नं, तं हस्ते बधान गृहाण, दन्दशूकैः सर्पैः, अवश्यं निश्चितं, न दश्यसे तन्महिम्ना न दंक्ष्यसे। सकुलक! तन्नामक!, रक्ततैलपङ्कमग्नमूला रक्त–रक्तवर्णं रुधिरसहितं वा, यत् तैलं तन्मये, पङ्के–कर्दमे, मग्नं मूलं यस्याः तादृशी, नावम्, उद्धर तत उद्धृत्य, वेदोद्धारिणः प्रलयकाले वेदान् उद्धृतवत, शकुलस्य मत्स्यविशेषस्य, केलिं क्रीडां, विधेहि कुरु, अधीर! धैर्यशून्य!, मद्वचः मद्वाक्य, मा अवधीरय तिरस्कुरु, निराकुलः स्वस्थः सन्, विचर समुद्रमार्गे विहर, नक्रनसया नक्रास्यजलचरविशेषेण, अक्षितलोचनस्य अपीडितनयनस्य, ते तव, सकलं समग्रम्, अम्बुधिजलं समुद्रजल, स्थलं स्थलतुल्यम्, अस्तीति शेष। पुन. शम्बूक! तन्नामक!, वाढम् अत्यन्त, प्रचलायसे घूर्णसे, ग्राहेणापि तन्नामकजलचरेणापि, गृह्यमाणचरणः आक्रम्यमाणपादोऽपि, न चेतयसे न अवगच्छ, चेतसि मनसि, वैलक्ष्येण, विपादेन, कृतं व्यर्थं, क्षारेण क्षाररसान्वितेन, सामुद्रेण समुद्रसम्बन्धिना, वारिणा जलेन, वारंवारम् अनेकवारम्, आस्यं मुखं, मुखानिष्क्रान्तमिति यावत्, क्षालय सिञ्च, द्रागेव शीघ्रमेव, ईक्षणाभ्यां नेत्राभ्यां, सह, निद्रा, क्षयं विनाशं, यास्यति प्राप्स्यति। पुन राजिलक! तन्नामक!, तर्जितोऽपि भर्त्सितोऽपि, न उपरमसि निवर्तसे, प्रगुणयायिनीमपि ऋजुगामिनीमपि, नावम्, आगस्तीम् अगस्त्यसम्बन्धिनीं, दक्षिणाभिमुखामित्यर्थः, गतिं मार्गं, ग्राहयसि गमयसि, ते तव, कश्चित् कोऽपि, दिङ्मोहः दिग्भ्रम, न? सानिमस्वरक्षानाय कृतं प्रश्ने 'कच्चित्' इत्यर्थ वर्तमान शब्द

कलभसंवरणविहस्तयूथपं तीरशायि जलहस्तियूथमपथेन पाथोनिधिमवतितीर्षति, त्वरितमुत्सारयत युगपदाहितेन हस्ततालशब्देन दूरम्, असौ रसातलात् सद्य एवोन्मग्नो वज्राग्निधूम्रिकामषीकल्माषपक्षसम्पुटैः शिखरिभिरधिष्ठितपृष्ठभागो मठ इव सपारापतः सञ्चरति कमठो, मा प्रतिष्ठध्वमभिमुखमेव निकषा प्रस्थितो नेष्यत्यपथेन नावम् [औ]; असावपि विदारितगिरिकन्दराकारतुण्डो मानदण्ड इव सागरस्य ग्रासीकृताक्रन्दज्जलकरिजटालवदनैर्बालमत्स्यैरनुसृताभिर्मत्सीभिरनुगम्यमानो मृगयते निजग्रासोचितं सत्त्वं सत्वरमितस्ततः स्तिमितया गत्या तिमिङ्गिलो, मा विधत्त कलकलं, यातु निभृतमेव, विकृत एष महतेऽनर्थाय, वञ्च्यतामयमतिचटुलवीचिवेगाकृष्टैर्भ्रमद्भिरन्तः कुलालचक्रक्रमेण रिक्तोदरलघुभिररित्रैरावेदितो द्वारमिव रसातलस्य वामतः समीपवर्ती शीघ्रमावर्तो, लङ्घ्यतामयमपि क्षेपीयः क्षयसमयसन्ध्यानुरञ्जिताम्बरैकदेशविडम्बी दक्षिणतः प्रतिक्षणमुदञ्चता फणचक्रवालरत्नरागपटलेन क्रमनिपीतकल्लोलकालिमा पातुमनिलमुद्यतस्य कस्यचिन्महाहे-

---

टिप्पनकम्—वहूर-मासम्। विहस्त-व्याकुल। कल्माष-कर्बुर। निकषा समीपम् [औ]।

---

जले, ज्वलन्ती उद्दीप्यमाना, अग्नितैलच्छटाः साग्नितैलधारा, किरत क्षिपत। पुन अकस्मात् अतर्कितम् असमद्वलोकनक्षुभितम् असमदवलोकनेन-अस्मद्दर्शनेन, क्षुभित सम्भ्रान्तम्, पुन उत्त्रस्तकलभसंवरणविहस्तयूथपम् उत्त्रस्ताना-विभीताना भयाद् भ्रान्तानामिति यावत्, कलभाना-हस्तिशावकानां, संवरणेन-संघटनेन, विहस्त-व्यग्रहस्त, यूथप-यूथाधिपहस्ती यस्मिंस्तादृश, तीरशायि तटसुप्तम्, इद जलहस्तियूथ, पाथोनिधि समुद्रम्, अवतितीर्षति अवतरीतुम्-अवगाहितुम् इच्छति, युगपदाहितेन एककालावच्छेदेनोत्पादितेन, हस्ततालशब्देन प्रहतहस्ततलध्वनिना, त्वरित शीघ्र, दूरम्, उत्सारयत अपनयत, हस्तियूथमिति शेष। पुन रसातलात् पातालात् सद्य एव तत्क्षणमेव, उन्मग्न ऊर्ध्वमागत, पुन वज्राग्निधूम्रिकामषीकल्माषपक्षसम्पुटैः वज्राग्निना-इन्द्रोत्क्षिप्तवज्रेण, धूम्रिकाणा-शिंशपावृक्षाणा, या मषी-कज्जल, तेन कल्माष-चित्र श्यामल वा, पक्षसम्पुट येषा तै, शिखरिभिः पर्वतै, अधिष्ठितपृष्ठभाग आक्रान्तपृष्ठप्रदेश, असौ कमठ कच्छप, सञ्चरति उद्गच्छति, क इव[1] सपारापतः पारापतै-कपोतै, अधिष्ठित, मठ इव देवालय इव, मा प्रतिष्ठध्वं प्रयात, अभिमुखमेव सम्मुखमेव, निकषा समीप, प्रस्थितः कृतप्रयाण, अपथेन कुमार्गेण, नाव, नेष्यति गमयिष्यति, असाविति शेष [औ]। पुन विदारितगिरिकन्दराकारतुण्डः विदारित-विकासित, गिरिकन्दराकारं-पर्वतगुहाकारं, तुण्ड-मुख येन तादृश, पुन मानदण्ड इव परिच्छेदकदण्ड इव, सागरस्य समुद्रस्य, पुन मत्सीभिः मत्स्यस्त्रीभि, अनुगम्यमान अनुस्रियमाण, कीदृशीभि[1] ग्रासीकृताक्रन्दज्जलकरिजटालवदनैः ग्रासीकृतै-कवलितै, आक्रन्दद्भि-सशब्द रुदद्भि, जलकरिभि-जलहस्तिभि, जटाल-व्याप्त, वदन येषा तादृशै, बालमत्स्यैः शैशवावस्थमत्स्यै, अनुसृताभि अनुगताभि, असावपि, तिमिङ्गिल शतयोजनविस्तृतमत्स्यविशेष, स्तिमितया स्थिरया, गत्या, इतस्ततः अत्र तत्र, सत्वर शीघ्र, निजग्रासोचित स्वभक्षणयोग्य, सत्त्व जीव मृगयते अन्विष्यति, कलकल कोलाहल, मा विधत्त कुरुत, महते अधिकाय, अनर्थाय अहिताय, स्याद् इति शेष, विकृतः दुष्ट्यत, एषः अय, निभृत स्थिरमेव यथा स्यात् तथा, यातु गच्छतु। पुनः अतिचटुलवीचिवेगाकृष्टैः अतिचटुला-अतिचपला, ये वीचय-तरङ्गा, तेषा वेगै-आकृष्टै-कृताकर्षणै, कुलालचक्रक्रमेण कुम्भकारचक्रभ्रमिप्रकारेण, अन्त समुद्रस्य मध्ये, भ्रमद्भि, रिक्तोदरलघुभि रिक्त-जलरहित, यद् उदर मध्यभाग, तेन लघुभि-लघुत्वमापन्नै, सञ्चालने गतगुरुत्वैरित्यर्थ, अरित्रैः नौश्चालनकाष्ठै, आवेदितः ज्ञापित, पुन रसातलस्य पातालस्य, द्वार प्रवेशस्थानमिव, वामत वामभागे, समीपवर्ती, अयम्, आवर्त जलभ्रमि, शीघ्र वञ्च्यता प्रतार्यता वर्ज्यतामिति यावत्। पुन क्षयसमयसन्ध्यानुरञ्जिताम्बरैकदेशविडम्बी क्षयसमये-प्रलयकाले, या सन्ध्या तया अनुरञ्जित-रक्तीकृतं यदम्बरम्-आकाश, तदेकदेशविडम्बी-तदेकदेशानुकारी, पुन दक्षिणतः दक्षिणभागत, प्रतिक्षण प्रतिपलम्, उदञ्चता उद्गच्छता, फणचक्रवालरत्नरागपटलेन फणमण्डलस्थरत्नसम्बन्धिरक्तिमसमूहेन, क्रमनिपीतकल्लोलकालिमा क्रमेण

रुन्नमनशंसी सागरोद्देशः, तटमिव पुरस्तरङ्गैरुल्लल्द्भिरुद्धाव्यते कुरुत वंशक्षेपमन्तर्वारि, दुर्वात इव दृश्यते मुकुलयत सितपटरज्जुजालम्, अग्रतो विसारिमत्स्य इव वहति लम्बयत नागरानविलम्बितं [ अं ]; मित्राणि! मन्दोऽतिमात्रं मरुत्, प्रलम्बैर्बाहुभिर्वाहयत सत्वरमरित्राणि, मकरक! मनागुदञ्चय मार्गतटरुहश्चन्दनतरोरस्य तिरश्चीमुपरिशाखाम्, मूर्ख! किमधोमुखं स्थितोऽसि मुधा, बधान हस्त एनं मण्डूकमस्तकमणिम्, अवश्यं न दृश्यसे दन्दशूकैः; सकुलक! विधेहि वेदोद्धारिणः शकुलस्य केलिम्, उद्धर रक्ततैलपङ्कमग्नमूलामिमां नावम्, अधीर! माऽवधीरय मद्वचः, विचर निराकुलो, नक्रवसयाऽञ्जितलोचनस्य स्थलं ते सकलमम्बुधिजलं, शम्बूक! वाढं प्रचलायसे, न चेतयसि ग्राहेणापि गृह्यमाणचरणः, चेतसि कुवं पैलक्ष्येण, क्षालय क्षारेण सामुद्रेण वारिणा वारं वारमास्य, यास्यति द्रागेव निद्रा सहेक्षणाभ्यां क्षयं, राजिलक! तर्जितोऽपि नोपरमसि, प्रगुणयायिनीमपि नावमागस्त्यीं गतिं ग्राहयसि, अस्ति कश्चिन्न ते दिङ्मोहः? यगुदाहृतामप्यहृदय! न जानास्युत्तराशावर्तनीम्, प्रवर्तस्व दृष्ट्वा दृष्ट्वा सप्तर्षिमण्डलम्' [अः]

---

टिप्पनकम्—क्षेपीय॰ क्षिप्रतरम् [अ]। ऊर्ध्वं च ऊर्ध्वं मुत्पाटयत् (? उदञ्चय ऊर्ध्वमुत्पाटय) [अः]।

---

निपीत -तिरोभावित, कल्लोलस्य–महातरङ्गस्य, कालिमा–कृष्णता यस्मिंस्तादृश, अत एव अनिलं पवन, पातुम्, उद्यतस्य कृतोद्योगस्य, कस्यचित् अविज्ञातनामकस्य, महाहे॰ महासर्पस्य, उन्नमनशंसी उत्सर्पणावेदक, अय सागरोद्देशः सागरान्तर्गतोन्नतदेश, क्षेपीयः अतिशीघ्रम्, लङ्घ्यताम् अतिक्रम्यताम्, य सागरोद्देश, पुरः अग्रे, उल्लल्द्भिः उच्छलद्भि, तरङ्गै, तटमिव तीरमिव, उद्भाव्यते प्रच्याव्यते, अत एव अन्तर्वारि जलमध्ये, वंशक्षेपं मानकृते गतिरोधनादिकृते वा वंशप्रक्षेपण, कुरुत, पुन दुर्वात इव उद्धतपवन इव, दृश्यते, अत एव सितपटरज्जुजाल सितपटानां–श्वेतवस्त्राणा, रज्जूना च, जाल–समूह, मुकुलयत सङ्कोचयत, पुन॰ अग्रे विसारिमत्स्य इव विसारिजातीयमत्स्यविशेष इव, वहति स्पन्दते, अत एव नागरान् आकराणि, अविलम्बितं सत्वर, लम्बयत नमयत [अ]। पुनः मित्राणि! भो सखाय!, मरुत् पवन, अतिमात्रम् अत्यन्त, मन्द॰ अनुद्धत, अस्तीति शेष, अतः प्रलम्बैः दीर्घैः, बाहुभिः भुजै, अरित्राणि नौसञ्चारणकाष्ठानि, वाहयत चालयत। पुन मकरक! तन्नामक!, मार्गतटरुहः मार्गप्रान्तप्ररूढस्य, यद्वा मार्गभूततटप्ररूढस्य, अस्य पुरोवर्तिन, चन्दनतरोः चन्दनवृक्षस्य, तिरश्चीं कुटिलाम्, उपरिशाखाम् ऊर्ध्वशाखां, मनाक् किञ्चित्, उदञ्चय उन्नय, मूर्ख! भो निर्बुद्ध!, मुधा व्यर्थम्, अधोमुखम् अवनतमुखं यथा स्यात् तथा, किम्? किमर्थम्, स्थितः उपविष्ट, असि वर्तसे, एनम् इमं, मण्डूकमस्तकमणिं मण्डूकस्य–भेकस्य, मस्तक यो मणि–रत्नं, तं हस्ते बधान गृहाण, दन्दशूकैः सर्पै, अवश्यम् निश्चित, न दृश्यसे तन्महिम्ना न दृश्यसे। सकुलक! तन्नामक!, रक्ततैलपङ्कमग्नमूलां रक्त–रक्तवर्णं रुधिरस्वरूपं वा, यत् तैलं तन्मये, पङ्के–कर्दमे, मग्नं मूलं यस्यास्तादृशीं, नावम्, उद्धर तस्मादुन्नय, वेदोद्धारिण॰ प्रलयकाले वेदान् उद्धृतवत, शकुलस्य मत्स्यविशेषस्य, केलिं क्रीडां, विधेहि कुरु, अधीर! धैर्यशून्य!, मद्वचः मदाज्ञां, मा अवधीरय तिरस्कुरु, निराकुलः स्वस्थ सन्, विचर समुद्रमार्गे विहर, नक्रवसया नक्राख्यजलचरमज्जया, अञ्जितलोचनस्य आञ्जितनयनस्य, ते तव, सकलं समग्रम्, अम्बुधिजलं समुद्रजलं, स्थलं स्थलतुल्यम्, अस्तीति शेष। पुन शम्बूक! तन्नामक!, वाढम् अत्यन्त, प्रचलायसे घूर्णसे, ग्राहेणापि तन्नामकहिंस्रजलचरेणापि, गृह्यमाणचरणः आक्रम्यमाणपादोऽपि, न चेतयसे न अवबुध्यसे, चेतसि मनसि, पैलक्ष्येण, विषादेन, एतत् व्यर्थं, क्षारेण क्षाररसान्वितेन, सामुद्रेण समुद्रसम्बन्धिना, वारिणा जलेन, वारंवारम् अनवरतम्, आस्य मुखं, मुखमण्डलमिति यावत्, क्षालय शोधय, द्रागेव शीघ्रमेव, ईक्षणाभ्यां नयनाभ्यां, सह, निद्रा, क्षयं विनाशं, यास्यति प्राप्स्यति। पुन राजिलक! तन्नामक!, तर्जितोऽपि भर्त्सितोऽपि, न उपरमसि निवर्तसे, प्रगुणयायिनीमपि ऋजुगामिनीमपि, नावम्, आगस्त्यीम् अगस्त्यसम्बन्धिनीं, दक्षिणाभिमुखां, गतिं मार्गं, ग्राहयसि गमयसि, ते तव, कश्चित् कोऽपि, दिङ्मोहः दिग्भ्रम, न? सम्भावनायामत्र कश्चिदव्ययम् 'प्रश्न' इत्यन्य व्याख्यानमस्ति

इत्यादि साध्वसकरं च कर्तव्योपदेशपरं प्रार्थनं च सपरिहासं च जल्पताऽपरेषु, नीयमाना कचिच्चिरकालसंगलनसान्द्राणि कदाचिदप्यदलितानि यानपात्रैः पाटयन्ती शुकहरितशैवलपटलानि, सांयात्रिकप्रचारविरहादतिस्फीततां गतैरहरहः स्फुटतां शुक्तिसंपुटानां मुक्ताफलैर्निरन्तरनिचितेषु सैकतेषु सुखप्रसुप्तानि प्रबोधयन्ती जलमानुषमिथुनानि, क्वचिद् दूरत एव श्रूयमाणमुखरपक्षिरवाणि संभ्रमोत्पतनसविशेषविततदेहायामानि जलनिधिमध्यशायीनि शैलतरुखण्डेषु पिण्डयन्ती भारुण्डाण्डजकुलानि, समयेन दूरं जगाम। प्रगुणवातप्रेरिता च व्रजन्ती तत्रातिदीर्घेऽपि वारिधेरध्वनि गगन इव मेघलेखा क्वचिदचस्खाल, प्रदक्षिणीकृत्य च क्रमेण तं क्षितिध्रमभिमुखीबभूव तस्य तूर्यशब्दप्रभवस्य पर्यन्तोद्देशस्य

सोऽपि प्रदेशस्तां दूरादेव दर्शितोर्ध्वध्वजभुजामात्मानमिव संज्ञया दर्शयन्तीमन्तिकागतां विज्ञाय सद्य एव तं वाद्यशब्दं कदाचित् तारं कदाचिन्मन्द्रमुच्चरन्तमच्छिन्नसंतानमाह्वानशब्दमिव संजहार। वादित्रनिःस्वने सततगमनोद्यमोऽपि पुनराकर्णनाशया तथैव तारकः स्तोकं गत्वा सत्वरमाचकर्ष नावम्

---

दिग्मोह एवेति तात्पर्यम्, अहृदय! हे हृदयशून्य!, उदाहृतामपि उक्तामपि, उत्तराशावर्तनीम् उत्तरदिङ्मार्गम् जानासि न परिचिनोषि, सप्तर्षिमण्डलं मरीच्यादिसप्तर्षितारागण, दृष्ट्वा दृष्ट्वा असकृदवलोक्य, प्रवर्तस्व प्रवृत्तिं कुरु [भ

पुन कीदृशी सा नौ? शुकहरितशैवलपटलानि शुकसदृशहरितवर्णशैवलतृणपुञ्जान्, पाटयन्ती उन्मूलयन्ती, कीदृशानि? क्वचित् कुत्रचित्, चिरकालसंगलनसान्द्राणि दीर्घकालजलसम्पातनिबिडानि, पुन यानपात्रैः पोतैः कदाचिदपि, अदलितानि अखण्डितानि। पुन क्वचित् कुत्रचित् प्रदेशे, जलमानुषमिथुनानि जलीयमनुष्यदम्पती प्रबोधयन्ती जागरयन्ती, कीदृशानि सैकतेषु सिकतामयस्थलेषु, सुखप्रसुप्तानि सुखेन शयितानि, कीदृशेषु? अहर प्रत्यह, स्फुटतां दलता, शुक्तिसम्पुटानां सम्पुटाना सम्पुटितशुक्तीना, मुक्ताफलैः मुक्तामणिभि, निरन्तरनिचिते निरवकाशव्याप्तेषु, कीदृशे? सांयात्रिकप्रचारविरहात् पोतवणिक्प्रचाराभावात्, अतिस्फीतताम् अत्युज्ज्वल गतैः प्राप्तै। पुन क्वचित् कुत्रचित् स्थाने, भारुण्डाण्डजकुलानि भारुण्डाख्यपक्षिविशेषगणान्, शैलतरुखण्डे पार्वतीयवृक्षपङ्क्तिषु, पिण्डयन्ती समूहयन्ती, कीदृशानि? दूरत एव दूरादेव, श्रूयमाणमुखरपक्षिरवाणि श्रूयमाण श्रवणगोचरता नीयमाना, मुखरपक्षिणा वाचालपक्षिणा, रवा-शब्दा येस्तादृशानि, पक्षिस्थाने 'पक्ष' इति पाठे श्रूयमा मुखरा पक्षा येषामित्यर्थः, पुन संभ्रमोत्पतनसविशेषविततदेहायामानि सम्भ्रमेण-अन्त क्षोभेण, यत् उत्पतनम् उड्डयन, तेन सविशेषम्-अत्यन्त, वितत-विस्तृत, देहायाम-शरीरदैर्ध्यं येषा तादृशानि, पुन जलनिधिमध्यशायी समुद्रमध्यशयनशीलानि। च पुन, प्रगुणवातप्रेरिता अनुकूलपवनप्रेरिता, व्रजन्ती गच्छन्ती, सा नौरिति शेष, त तस्मिन्, वारिधेः समुद्रस्य, अध्वनि मार्गे, गगने आकाशमार्गे, मेघलेखा इव मेघपङ्क्तिरिव, प्रायशः प्रायेण, क्वचि कुत्रापि स्थाने, न चस्खाल स्खलितवती, क्रमेण दक्षिणादिमार्गक्रमेण, त क्षितिध्र सुवेलपर्वत, प्रदक्षिणीकृत्य परि भ्रम्य, तूर्यशब्दप्रभवस्य तूर्याख्यवाद्यविशेषध्वनिप्रादुर्भावास्पदस्य, तस्य प्रकृतस्य, पर्यन्तोद्देशस्य पर्वतरूपोर्ध्वदेशस्य अभिमुखीबभूव सम्मुखीबभूव, नौरिति शेष [क]।

सोऽपि प्रकृतवाद्यशब्दोद्गमस्थानभूतोऽपि, प्रदेशः एकदेश, दूरादेव, दर्शितोर्ध्वध्वजभुजां दर्शित-स्वागमन संकेतनाय दृष्टिगोचरतां गमित, ऊर्ध्वध्वजरूप-नौकोपरितनपताकात्मक, भुज-बाहुर्यया तादृशीम्, अत संज्ञया तादृशमङ्केन, आत्मानमिव स्वमिव, दर्शयन्तीं साक्षात्कारयन्तीं, तां नावम्, अन्तिकागतां समीपमागतां, विज्ञाय निश्चित्य सद्य एव तत्क्षणमेव, त वाद्यशब्दं तूर्याख्यवाद्यध्वनिम्, आह्वानशब्दमिव आह्वानात्मकध्वनिमिव, संजहार उपसंहृतवान्, निवारितवानिति यावत्, कीदृशम्? कदाचित् कस्मिंश्चित् क्षणे, तारं तीव्र, कदाचित् मन्द्रं यथा स्यात् तथा, उच्चरन्तम् उद्गच्छन्तम्, पुनः अच्छिन्नसन्तानम् अविरतधारम्। वादित्रनिःस्वने वाद्यध्वनौ, विरते निवृत्ते सति, पुनराकर्णनाशया पुन श्रवणाशया, सततगमनोद्यमोऽपि अविरतगमनप्रयत्नोऽपि, तारकः तदाख्यकर्णधार,

उवाच च विगतहर्षः—'कुमार! विश्रान्त एष तावदत्रैव प्रदेशे मार्गदेशकोऽस्माकमातोद्यध्वनिः । आज्ञापय किमधुना कर्तव्यम्, किमेवमेव बद्धवेगा पुरस्तादबद्धलक्ष(क्ष्य)मेव प्रवर्त्यत इयं नौः, उत पश्चान्निवर्त्यते, यद्यवश्यमेव पुरः प्रयातव्यं द्रष्टव्यं च कौतुकमिति निश्चयः कुमारस्य, तत्र किञ्चिद् विलम्बेन विचारेण वा कृतेन प्रयोजनम्, अनेनैव पर्वतनितम्बावलम्बिना मार्गेण गम्यते यावत् किमपि दृष्टमथ न किञ्चिद् गतेन दृष्टेन वा कौतुकेन साध्यसिद्धिरिति बुद्धिस्तदलमात्मना वृथैव क्लेशितेन, प्रस्थीयते स्थानादित एव प्रतीपं, गम्यते शिबिरम्, आश्वास्यते सर्वतस्त्वद्दर्शनेन विक्लवीभूतो भृत्यबान्धवमित्रलोकः, क्रियन्ते प्रस्तुतानि राज्यकार्याणि, कौतुकानि त्वपर्यवसानायामत्र दण्डयात्रायामदृश्यपारे भगवत्यकूपारे विचरतो यदृच्छया कुमारस्य पदे पदे सुलभदर्शनानि, किं च तैः, अयमेव हि तावदवधिरद्भुतानां निदर्शनं दर्शनीयानां संकेतशाला कुतूहलकारिणां युज्यते रत्नकूटशैलः कथमपि प्रसङ्गदृष्टो द्रष्टुमनुमहीतुं च सपरिग्रहस्य विविधक्रीडाभिः [ ग ] । अत्र हि पदे पदे सुन्दरतया सुरलोकस्यापि जनितव्रीडानि क्रीडास्थानानि, स्थाने स्थाने सर्वर्तुकानि वनानि, वने वने विकचरत्नकुसुमस्तबकतारकितानि कल्पतरुखण्डानि, खण्डे खण्डे बहुप्रपञ्चाः काञ्चनलता-

---

तथैव पूर्ववदेव, स्तोकम् अल्पं, गत्वा, नावं, सत्वरं शीघ्रम्, आचकर्ष निवर्तयामास [ ख ] । च पुनः, विगतहर्षः नष्टहर्षः सन्, उवाच उक्तवान्, किमित्याह—कुमार! युवराज!, अस्माकं, मार्गदेशकः मार्गविदकः, एषः अयम्, आतोद्यध्वनिः वाद्यविशेषध्वनिः, अत्रैव अस्मिन्नेव, प्रदेशे स्थाने, विश्रान्तः निवृत्तः, अधुना सम्प्रति, किं कर्तव्यं कर्तुमुचितम्, इति आज्ञापय आदिश । एवमेव इत्थमेव, बद्धवेगा जनितवेगा, इयं नौः किम्, अबद्धलक्ष्यमेव अनिश्चितगन्तव्यप्रदेशमेव यथा स्यात् तथा, पुरस्तात् अग्रे, प्रवर्त्यते प्रेरिष्यते, उत अथवा, पश्चात् निवर्त्यते निवर्तयिष्यते, मयेति शेषः । यदि कुमारस्य भवतः, अवश्यमेव नूनमेव, पुरः अग्रे, प्रस्थातव्यं प्रस्थातुमुचितम्, च पुनः, कौतुकम् उत्सवः, द्रष्टव्यं द्रष्टुमुचितम् इति, निश्चयः संकल्पः, वर्तत इति शेषः, तत् तर्हि, कृतेन, विलम्बेन कालात्ययेन, वा अथवा, विचारेण विवेचनेन, न किञ्चिद् अल्पमपि, प्रयोजनं फलम्, किं तु पर्वतनितम्बावलम्बिना पर्वतकटिभागावलम्बिना, मार्गेण, यावत् यावन्तं कालं, किमपि कौतुकमिति शेषः, दृष्टं दृष्टिगोचरं, स्यादिति शेषः, तावत् गम्यते प्रस्थीयते, अथ यदि, गतेन गमनेन, वा अथवा, दृष्टेन दृग्गोचरीकृतेन, कौतुकेन उत्सवेन, न साध्यसिद्धिः प्रयोजननिष्पत्तिः, इति बुद्धिः निश्चयः, स्यादिति शेषः, तत् तर्हि, वृथैव व्यर्थमेव, क्लेशितेन आयासितेन, आत्मना स्वेन, अलं व्यर्थम्, इत एव अस्मादेव स्थानात्, प्रतीपं पश्चात्, प्रस्थीयते प्रयाणं क्रियते, शिबिरं सैन्यावासः, गम्यते प्राप्यते, त्वद्दर्शनेन त्वद्दर्शनाभावेन, विक्लवीभूतः व्याकुलीभूतः, भृत्य-बान्धव-मित्रलोकः सेवकबन्धुसुहृज्जनः, सर्वतः समन्ततः, आश्वास्यते सान्त्व्यते, पुनः प्रस्तुतानि प्रकृतानि, राज्यकार्याणि क्रियन्ते । अपर्यवसानायां निरवधिकायाम्, अत्र अस्यां, दण्डयात्रायां दीर्घयात्रायाम्, अदृश्यपारे अलक्ष्योत्तरावधिके, भगवति ऐश्वर्यवति, अकूपारे सागरे, यदृच्छया स्वेच्छया, विचरतः विहरतः, कुमारस्य भवतः, पदे पदे स्थाने स्थाने, कौतुकानि तु उत्सवास्तु, सुलभदर्शनानि अनायासदर्शनानि, स्युरिति शेषः । च पुनः, तैः अनन्तरोपवर्णितकौतुकैः, किम् न किमपि प्रयोजनमित्यर्थः । अद्भुतानाम् आश्चर्याणाम्, अवधिः चरमसीमा, प्रधानकेन्द्रमिति यावत्, पुनः दर्शनीयानां द्रष्टुं योग्यानां, वस्तूनां, निदर्शनम् आदर्शभूतः, पुनः कुतूहलकारिणाम् उत्सवकारिणां, संकेतशाला संकेतगृहम्, कथमपि कथंचित्, प्रसङ्गदृष्टः प्रसङ्गवशादवलोकितपूर्वः, अयमेव रत्नकूटशैलः रत्नकूटपर्वतः, हि निश्चयेन, तावदिति वाक्यालङ्कारे, द्रष्टुं दृष्टिगोचरीकर्तुं, सपरिग्रहस्य सपरिवारस्य, विविधक्रीडाभिः अनेकक्रीडाभिः, अनुग्रहीतुम् अनुकम्पयितुं च, युज्यते योग्यो वर्तते [ ग ] । हि यतः, अत्र अस्मिन् पर्वते, पदे पदे स्थाने स्थाने, सुन्दरतया मनोहारितया, सुरलोकस्यापि स्वर्गलोकस्यापि, जनितव्रीडानि उत्पादितलज्जानि, क्रीडास्थानानि क्रीडाक्षेत्राणि; पुनः स्थाने स्थाने प्रतिस्थानम्, सर्वर्तुकानि युगपत्सर्वर्तुसुखावहानि, वनानि, इदं 'रमयन्ते' इति वक्ष्यमाणक्रिययाऽन्वेति, पुनः वने वने प्रतिवनम्, विकचरत्नकुसुमस्तबकतारकितानि विकचानां-विकसितानां, रत्नानां-स्वजातिश्रेष्ठानां रत्नरूपाणां वा, कुसुमानां-पुष्पाणां, यः स्तबकः-गुच्छः, तेन तारकितानि-संजाततारकाणि, कल्पतरुखण्डानि कल्पवृक्षसमूहाः, पुनः खण्डे खण्डे प्रतिखण्डम्,

दोलाः, प्रतिदोलमान्दोलनक्रीडानन्दितानि दृश्यन्ते सततमनवद्यवेषाणि विद्याधरद्वन्द्वानि, अपि च सानौ सानौ निशम्यते कर्णामृतं किन्नरगीतम्, भृगौ भृगावाकर्ण्यते निर्झरणझात्कृतमतिस्फीतम्, सरिति सरिति विलसन्ति रत्नवालुकापुलिनेषु चित्राः पक्षिणः, काले काले वाति विस्तारितरतिकेलिरमराणां समीरणो दक्षिणः, प्रदेशे प्रदेशे चिन्तिते चित्तस्य जायते परा प्रीतिः, वस्तुनि वस्तुनि विभाविते भवति लोचनद्वयस्य द्रष्टव्यदर्शनेच्छानिवृत्तिः [ घ ]। तथा च छाययापि पत्रपादपच्छायानामपसरति देहिनामङ्गग्लानिः, गन्धेनापि पुष्पद्रुमगन्धानामन्धीभवन्ति घ्राणानि, वातेनापि चैत्रवातस्य विकटमुद्वहन्ति वनलताः कुसुमाट्टहासम्, वार्तयापि दयितवार्ताया मनसि मानिनीनां करोति मन्मथः स्थानाधिपत्येनावासम्। किं चापरोक्षवर्णनेन, निर्णेष्यति यथावस्थितं स्वरूपमस्य स्वयमेवानुभूय स्वामी' इति जल्पित्वा जोषमभजत् [ ङ ]।

अहं त्वकाण्ड एव खण्डितगमनरभसेन तस्यानेन वचसानवसानेन पथापि जनितव्यथः 'कष्टं, न लेशोऽप्यभिलषितसंपत्त्या सुखस्य संजातः, क्लेश एव केवलमनुभूतः' इति भावयन्नुद्भूतगाढोद्वेगतस्तत्क्षणमधो-

---

टिप्पनकम्—छायया लेशेन। जोषं मौनम् [ ङ ]।

---

**बहुप्रपञ्चाः** बहुविस्ताराः, **काञ्चनलतादोलाः** काञ्चनाख्यनागकेसरलतारूपा दोलाः, पुनः **प्रतिदोलं** दोलायां दोलायाम्, **आन्दोलनक्रीडानन्दितानि** आन्दोलनात्मकक्रीडासंजातानन्दानि, **सततम्** अविरतम्, **अनवद्यवेषाणि** अनिन्द्यवेषविशिष्टानि, **विद्याधरद्वन्द्वानि** विद्याधरदम्पतयः, **दृश्यन्ते** दृष्टिगोचरीभवन्ति। **सानौ सानौ** प्रतिसमस्थले, **कर्णामृतं** कर्णयोरमृततुल्यं, **किन्नरगीतं** किन्नराणां–देवयोनिविशेषाणां, गीतं, **निशम्यते** श्रूयते। **भृगौ भृगौ** प्रतिप्रपातस्थानं, **अतिस्फीतं** अतिस्फुटम्, **निर्झरणझात्कृतं** स्रोतःस्यन्दनध्वनिविशेषः, **आकर्ण्यते** श्रूयते। पुनः **सरिति सरिति** प्रतिनदि, **रत्नवालुकापुलिनेषु** श्रेष्ठसिकतामयस्थलेषु, यद्वा रत्नरूपसिकतामयप्रदेशेषु, **चित्राः** चित्रवर्णाः, पक्षिणः, **विलसन्ति** विराजन्ते। पुनः **काले काले** समये समये, **अमराणां** देवानां, **विस्तारितरतिकेलिः** प्रवर्धितरतिक्रीडः, **दक्षिणः** दक्षिणदिग्वाही, **समीरणः** पवनः, **वाति** वहति। पुनः **प्रदेशे प्रदेशे** प्रत्येकप्रदेशे, **चिन्तिते** समालोचिते सति, **चित्तस्य** हृदयस्य, **परा** उत्कृष्टा, **प्रीतिः** तृप्तिः, **जायते** उत्पद्यते। पुनः **वस्तुनि वस्तुनि** प्रत्येकवस्तुनि, **विभाविते** विचारिते सति, **लोचनद्वयस्य** नेत्रद्वयस्य, **द्रष्टव्यदर्शनेच्छानिवृत्तिः** दर्शनीयवस्त्वन्तरदर्शनौत्सुक्यनिवृत्तिः, जायते इति शेषः [ घ ]। च पुनः, तथा **पत्रपादपच्छायानां** पत्रावृतवृक्षकृतानातपानाम्, **छाययाऽपि** लेशेनापि, **देहिनां** शरीरिणाम्, **अङ्गग्लानिः** शरीरतापः, **अपसरति** नश्यति। पुनः **पुष्पद्रुमगन्धानां** पुष्पवृक्षाऽऽमोदानां, **गन्धेनापि** लेशेनापि, **घ्राणानि** घ्राणेन्द्रियाणि, **अन्धीभवन्ति** व्यामुह्यन्ति। पुनः **चैत्रवातस्य** चैत्रमासात्मकवसन्तकालिकपवनस्य, **वातेनापि** वहनेनापि संचरणेनापीति यावत्, **वनलताः** वनस्थलतिकाः, **विकटं** सुन्दरं, **कुसुमाट्टहासम्** पुष्परूपं महाहासम्, **उद्वहन्ति** उत्सृजन्ति, पुनः **दयितवार्तायाः** पतिवृत्तान्तस्य, **वार्तयापि** चर्चयापि, **मानिनीनां** मानवतीनां, **मनसि** हृदि, **मन्मथः** कामदेवः, **स्थानाधिपत्येन** स्थानस्वामिभावेन, **आवासं** निवासं, करोति। **अपरोक्षवर्णनेन** प्रत्यक्षीभूतवस्तुवर्णनेन, **किम्**? किमपि न प्रयोजनमिति भावः, **स्वामी** अधिपतिः, भवानिति यावत्, **यथावस्थितं** वस्तु सत्, **अस्य** प्रकृतशैलस्य, **स्वरूपं**, **स्वयम्** आत्मनैव, **अनुभूय** साक्षात्कृत्य, **निर्णेष्यति** अवधारयिष्यति। **इति** इत्थं, **जल्पित्वा** उक्त्वा, **जोषं** मौनम्, **अभजत्** अश्रियत [ ङ ]। अहं तु, **अकाण्ड एव** अनवसर एव, **खण्डितगमनरभसेन** खण्डितः–निवारितः, गमनरभसः–गमनवेगो येन तादृशेन, **अनेन** अनुपदमुक्तेन, **तस्य** तारकस्य, **वचसा** वाक्येन, पुनः **अनवसानेन** निरवधिकेन, **पथापि** मार्गेण च, **जनितव्यथः** उत्पादितदुःखः सन्, 'वचसानवसानेन पथापि' इति स्थाने **वचसा पथ्येनापि** इति पाठे हितकारिणापि वाक्येनेत्यर्थः, **कष्टं** दुःखम्, **अभिलषितसम्पत्त्या** अभिलषितस्य–अभीष्टस्य, सम्पत्त्या–प्राप्त्या, सुखस्य–आनन्दस्य, **लेशोऽपि** अल्पमात्रापि, न **सञ्जातः** समुत्पन्नः, केवलं क्लेश एव, **अनुभूतः** उपभुक्तः, इति **भावयन्** विचारयन्, **उद्भूतगाढोद्वेगतः** उत्पन्ननितान्तसम्भ्रमवशात्, **तत्क्षणं**

मुखोऽभवम्। अदत्तोत्तरश्च तस्मै तदाकस्मिकमालोच्यालोच्य चापलमात्मनो मनसि जातहासो विस्मयत्रपाविषादानां युगपदास्पदतामगच्छम्। अकरवं च जातपरमानुतापश्चेतसि—'हन्त, कस्मान्मया मिथ्याकुतूहलतरलितेन सहसैव तूर्यरवमुपश्रुत्य धावता शिशुनेव लघुतां परामात्माऽऽनीतः, किमित्यचिन्तितात्मविनिपातदुःखेन शिखरिणेव कुलिशपातभीरुणा संचरदनेकदुष्टग्राहदुरवगाहो महासमुद्रकुक्षिरवगाढः, किमनिवारितेन्द्रियवृत्तिना बालतपस्विनेव निष्फलोऽनुभूतः शीतवातादिजनितः कायक्लेशः, कुतो ममेदमनुपदिष्टमशिक्षितमनभ्यस्तमचिन्तितमेवाद्य चापलमाविर्भूतम् [ च ], अहो चञ्चलस्वभावता चित्तपरिणतेः, अहो विकारबहुलता तारुण्यगतेः, अहो दुःखदायकत्वं सुखाभिलाषाणाम्, अहो व्यसनदानवैदग्ध्यमनधीनतायाः, अहो कार्यपरिणतिविचारविक्षेपो दर्पोद्रेकविलसितानाम्, अहो मतिविपर्ययप्रदानतात्पर्यं दैवप्रातिकूल्यस्य, तस्य तादृशस्य तातप्रयत्नस्य, तस्य विद्याभ्यासस्य, तस्य नीतिशास्त्रश्रवणस्य, तस्य हेयोपादेयवस्तुपरिज्ञानस्य, तेषां वृद्धोपदेशानाम्, तस्या विदग्धजनसंगतेः, तस्य च निसर्गसिद्धस्येन्द्रियवर्गसंयमस्य कीदृशो विपाकः संवृत्तः [ छ ],

---

टिप्पनकम्—बालतपस्विना अज्ञानतपोधनेन [ च ]।

---

तस्मिन् क्षणे, अधोमुखः अवनतवदनः, अभवं जातः। च पुनः, तस्मै तारकाय, अदत्तोत्तरः अदत्तप्रतिवचनः सन्, तदा तस्मिन् काले, आत्मनः स्वस्य, आकस्मिकम् अकारणकं, चापलं चापल्यम्, आलोच्य आलोच्य विचार्य विचार्य, मनसि चेतसि, जातहासः उत्पन्नस्वावलोकितपरिहासः सन्, युगपत् एककालं, विस्मय त्रपा विषादानां आश्चर्यलज्जादुःखानाम्, आस्पदतां स्थानताम्, अगच्छं प्राप्तम्। च पुनः, जातपरमानुतापः उत्पन्नात्यन्तपश्चात्तापः सन्, चेतसि चित्ते, अकरवम् अचिन्तयम्, किमित्याह—हन्त खेदे, शिशुनेव बालकेन, मिथ्याकुतूहलतरलितेन मिथ्याभूतोत्सवचपलितेन, पुनः तूर्यरवं वाद्यविशेषध्वनिम्, उपश्रुत्य श्रुत्वा, सहसैव शीघ्रमेव धावता वेगेन गच्छता, मया, अकस्मात् अकारणमेव, आत्मा स्वः, पराम् अत्यन्तां, लघुतां क्षुद्रताम्, आनीतः। पुनः किमिति कस्मात्, कुलिशपातभीरुणा वज्रापातभीतेन, शिखरिणा पर्वतेन, इव, अचिन्तितात्मविनिपातदुःखेन अचिन्तित—अनालोचित, आत्मनः—स्वस्य, विनिपातेन—अनर्थपातेन, पक्षे समुद्रान्तःपतनेन, दुःखं येन तादृशेन, मया इति शेषः, संचरदनेकदुष्टग्राहदुरवगाहः संचरद्भिः—गच्छद्भिः, अनेकैः—बहुभिः, दुष्टग्राहैः—हिंसकजलचरविशेषैः, दुरवगाहः—दुष्प्रवेशः, महासमुद्रकुक्षिः अतिविस्तृतसमुद्रोदरम्, अवगाढः प्रवेशकर्मतामापादितः। पुनः किं किमर्थं, बालतपस्विनेव अज्ञानतपोधनेन, अनिवारितेन्द्रियवृत्तिना अनियन्त्रितेन्द्रियव्यापारेण, मयेति शेषः, निष्फलः व्यर्थः, शीतवातादिजनितः शीतवाय्वातपादुपद्रवोत्पादितः, कायक्लेशः शरीरदुःखम्, अनुभूतः भुक्तः। पुनः अनुपदिष्टं न कयापि धर्माचार्यगोष्ठ्या शिक्षितम्, अशिक्षितं नापि कस्माचिद् विद्यागुरोरर्थितम्, अनभ्यस्तम् नापि स्वयमनुशीलितं मम, इदं प्रकृतं, चापलम्, अचिन्तितमेव अतर्कितमेव कुतः कस्माद्धेतोः, आविर्भूतं प्रकटितम् [ च ]। अहो विषादविस्मयद्योतकं, अद्भुत-चित्तपरिणतेः चित्तस्य, चञ्चलस्वभावता प्रकृतिचञ्चलता, पुनः अहो आश्चर्यं, एवमुत्तरत्र, तारुण्यगतेः यौवनावस्थायाः, विकारबहुलता विकृतिविपुलता, पुनः, अहो सुखाभिलाषाणां सुखेच्छानां, दुःखदायकत्वं दुःखजनकत्वम्, पुनः अहो अनधीनतायाः स्वाधीनतायाः, व्यसनदानवैदग्ध्यं आपत्प्रदानपाटवम्, पुनः, अहो दर्पोद्रेकविलसितानां गर्वातिशयचेष्टितानां, कार्यपरिणतिविचारविक्षेपः क्रियाफलविचारभ्रंशः, पुनः, अहो दैवप्रातिकूल्यस्य भाग्यवैपरीत्यस्य, मतिविपर्ययप्रदानतात्पर्यं बुद्धिवैपरीत्यापादनतत्परत्वम्। तादृशस्य महत्त्वादिगुणशालिनः, तस्य अनुभूतस्य, तातप्रयत्नस्य पितुः प्रयासस्य, पुनः तस्य सकृतस्य, विद्याभ्यासस्य शास्त्रानुशीलनस्य, पुनः तस्य सकृतस्य, नीतिशास्त्रश्रवणस्य नीतिशास्त्राकर्णनस्य, पुनः तस्य सकृतस्य, हेयोपादेयवस्तुपरिज्ञानस्य हेयं—त्याज्यम्, उपादेयं—ग्राह्यं यद्वस्तु, तस्य परिज्ञानस्य सम्यग्बोधस्य, पुनः तेषां प्रसिद्धानां, वृद्धोपदेशानां गुरुजनानुशासनानाम्, पुनः तस्याः उपार्जितायाः विदग्धजनसंगतेः चतुरजनसङ्गस्य, पुनः तस्य प्रसिद्धस्य, निसर्ग-

किमिदानीमस्य पृच्छतः प्रतिवचनं प्रयच्छामि, किं कर्तव्यमुपदिशामि, स्वयं च किं करोमि, कथमयमवश्यमारब्धं मया निर्वोढव्यमिति बद्धनिश्चयेनापि निरवधौ पयोधावनवधारितायां गन्तव्यभूमावनिश्चिते द्रष्टव्यवस्तुदर्शने क्लेशायासलाभाय वराकः पुरः प्रवर्तयितव्यः, कथं च गमनं निवारयतः पूर्वमस्य वचनमनादृतमिदानीं बहु मन्तव्यम्, कथं चास्थिरस्वभावतया सरभसप्रधावितेन भूमिमियतीमागत्य भग्नमनसा तीरादर्शिशकुनिनेव पश्चान्निवर्तितव्यम् [ ज ], निवृत्तेनापि कथमयमनेकविकटावर्तशतसंकुलः सर्वतो विशृङ्खलप्रचारैर्दुष्टजलचरैः पदे पदे प्रस्खलितयानपात्रगतिरतिमात्रदुर्गः सागरैकदेशो लङ्घयितव्यः, कथं च तत्कालमस्मत्संनिहितसैनिकावेदितवृत्तान्तं संभ्रान्तस्य समकालमेकवर्त्मना प्रातः प्रधावितस्य निरन्तरप्रचलितानेकनौसहस्रसंक्षोभिताम्बुधेरर्धपथदृष्टस्य पार्थिवलोकस्य वृथागमनलज्जाविलक्षाक्षमाननं दर्शयितव्यम्, कथं च दूरादेव दर्शितस्मितस्य पार्श्वमुपगतवतः 'क्व गताः, किमर्थं गताः, किं दृष्टं, किमनुभूतं, किमासादितम्' इत्यादि पृच्छतः प्रणयिवर्गस्य सहसा ह्रेपणं स्वचरितमावेदनीयम्, कथं चावासस्थानमुपागतेन दुर्विनयजनितोद्वेगाः स्वतन्त्र इति कृत्वा तूष्णीमेव सर्वे समर्पितस्वाधिकारमुद्राः प्रसादनीया राज्यचिन्तकाः प्रधान-

---

**सिद्धस्य** स्वाभाविकस्य, **इन्द्रियवर्गसंयमस्य** चक्षुरादीन्द्रियगणनियन्त्रणस्य, **कीदृशः** किंप्रकारकः, **विपाकः** परिणामः, **संवृत्तः** संजातः [ छ ]। **पृच्छतः** गमनपरावर्तनप्रश्नं कुर्वतः, **अस्य** तारकस्य, किं कीदृशं, **प्रतिवचनम्** उत्तरं, **प्रयच्छामि** प्रवदामि, पुनः किं तयोः कतरत्, **कर्तव्यं** करणीयम्, **उपदिशामि** आज्ञापयामि च पुनः, **स्वयम्** आत्मनाऽपि, किं करोमि। मया **आरब्धं** प्रवर्तितं, तत्र गमनमित्यर्थः, **अवश्यं** नूनम्, **निर्वोढव्यं** सम्पादनीयम्, **इति** इत्थं, **बद्धनिश्चयेनापि** कृतनिश्चयेनापि, मयेति शेषः, **निरवधौ** अपारे **पयोधौ** समुद्रे, **गन्तव्यभूमौ** गन्तव्यस्थाने, **अनवधारितायाम्** अनिर्णीतायाम्, पुनः **द्रष्टव्यवस्तुदर्शने** लक्ष्यभूतवस्तुदर्शने, **अनिश्चिते** सन्दिग्धे, **वराकः** दयनीयः, **अयं** तारकः, **कथं** केन प्रकारेण, **पुरः** अग्रे, **प्रवर्तयितव्यः** प्रवर्तयितुमुचितः। च पुनः, **पूर्वं** प्राक्, गमनं, **निवारयतः** निषेधतः, **अस्य** तारकस्य, **अनादृतम्** उपेक्षितं, **वचनं** वाक्यम्, **इदानीम्** अधुना, **कथं** केन प्रकारेण, **बहु** चारु, **मन्तव्यं** स्वीकरणीयम्। च पुनः, **अस्थिरस्वभावतया** चपलस्वभावतया, **सरभसप्रधावितेन** सवेगं कृतप्रधावनेन, मयेति शेषः, **इयतीम्** एतावतीं, **भूमिं** समुद्रप्रदेशम्, आगत्य, **भग्नमनसा** भग्नमनोरथेन सता, **तीरादर्शिशकुनिनेव** तीरमपश्यता पक्षिणेव, पश्चात्, **कथं** केन प्रकारेण, **निवर्तितव्यं** परावर्तितव्यम्, [ ज ]। **निवृत्तेनापि** परावृत्तेनापि, मयेति शेषः, **अनेकविकटावर्तशतसंकुलः** अनेकेन–बहुना, विकटानां–भीषणानाम्, आवर्तानां, शतेन, सङ्कुलः–व्याप्तः, **सर्वतः** परितः, **विशृङ्खलप्रचारैः** अप्रतिहतप्रचारैः, **दुष्टजलचरैः** हिंसकजलजन्तुभिः, **पदे पदे** स्थाने स्थाने, **प्रस्खलितयानपात्रगतिः** प्रस्खलिता–व्याहता, यानपात्रस्य–पोतस्य, गतिः–गमनं यस्मिंस्तादृशः, **अतिमात्रदुर्गः** अत्यन्तदुःखेन गमनीयः, अयं **सागरैकदेशः** समुद्रैकदेशः, कथं **लङ्घयितव्यः** लङ्घयितुं शक्यः। **तत्कालं** तत्क्षणम्, **अस्मत्सन्निहितसैनिकावेदितवृत्तान्तम्** अस्मत्सन्निहितसैनिकैः–अस्मत्पार्श्ववर्तिसैन्यैः, आवेदितवृत्तान्तं–निवेदितवृत्तान्तं यथा स्यात् तथा, **सम्भ्रान्तस्य** क्षुभितस्य पुनः **समकालं** युगपत्, प्रातः, **एकवर्त्मना** एकमार्गेण, **प्रधावितस्य** कृतप्रधावनस्य, **निरन्तरप्रचलितानेकनौसहस्रसंक्षोभिताम्बुधेः** निरन्तरप्रचलितैः–अनवरतप्रस्थितैः, अनेकनौसहस्रैः–अनेकसहस्रसंख्यकनौभिः, संक्षोभितः–उन्मथितः, अम्बुधिः–समुद्रो येन तादृशस्य, पुनः, **अर्धपथदृष्टस्य** अर्धमार्गावलोकितस्य, **पार्थिवलोकस्य** नृपजनस्य, तं प्रतीति यावत्, **वृथागमनलज्जाविलक्षाक्षं** वृथागमनेन–व्यर्थमेवाज्ञातस्थाने प्रयाणेन, या लज्जा तया, विलक्षं–विषण्णं निमीलितमिति यावत्, अक्षि–नेत्रं यस्मिंस्तादृशम्, **आननं** मुखमण्डलं, **दर्शयितव्यं** दर्शयितुमुचितम्। च पुनः, **प्रणयिवर्गस्य** स्नेहास्पदगणस्य, **सहसा** शीघ्रं, **ह्रेपणं** लज्जाजनकं, **स्वचरितं** स्वकृत्यं, **कथं** केन प्रकारेण, **आवेदनीयं** विज्ञापनीयम्, कीदृशस्य? दूरादेव **दर्शितस्मितस्य** प्रकटितमन्दहासस्य, **पार्श्वं** निकटम्, **उपगतवतः** आगतवतः, आगमिष्यत इति यावत्, **क्व** कुत्र, गताः, **किमर्थं** किंनिमित्तं, गताः, भवन्त इति शेषः। पुनः किं **दृष्टं** दृष्टिगोचरीकृतम्, पुनः किम् **अनुभूतम्** अनुभवगोचरीकृतम्, पुनः किं वस्तु **आसादितं** प्राप्तम्, इत्यादि **पृच्छतः** जिज्ञासां प्रकटयतः। च पुनः, **आवासस्थानं** स्वनिवासस्थानं राजधानीमिति यावत्, **उपागतेन**, समागतेन

पुरुषाः । कथं च हृदयदाहलङ्घितानुवृत्तीनामनुल्लङ्घनीयवचसा वृद्धबन्धूनामधोमुखेन सदसि सोढव्याः श्रवणपरुषा रोषतिरस्काराः, सर्वथा धिग् मा चापलोपहतमनात्मज्ञमुत्सृष्टाभिमानमसमीहितकारिणम्, अनेनाप्यदृष्टशिष्टव्यवहारेण सर्वदा प्राकृतलोकसहवासिना तारकेण तरल इति कुतूहलीति क्रीडनशील इति संभावितम्' [झ] । इत्याद्यनल्पमनेकसंकल्पकवलितचित्तवृत्तेश्चिन्तयत एव मे जगाम परिणाममप्रतर्कितैव रजनिः । ऊर्ध्वकिरणरज्जुस्तम्बलम्बमानशशिबिम्बनाङ्गरादपरदिग्भागयानपात्रादवततार सांयात्रिक इव कृताम्बरजलधियात्रः शनैः शनैरन्धकारः । किं वृथा नदसि, मथने यदि मया रत्नानि ते कक्षीकृतानि तदुत्क्षिप्यैतद्दिव्यवतार्य शिरसः पुरो मन्दरक्षितिभृता क्षिप्तमुत्तरीयक्षौममिव पिण्डीकृतमिन्दुमण्डलमाकुलाकुलप्रसारितोर्मिहस्तो जग्राह जलधिः । प्रमुदित एव प्रवृत्तमेषस्य ततश्चलितसरोहिणीकवृषस्य क्वापि क्वापि विभाव्यमानतुलाधनुषः

---

टिप्पनकम्—[ प्रवृत्तमेषस्य मेषः-अजः, ] मेषराशिश्च, चलितसरोहिणीकवृषस्य एकत्र रोहिणी-नक्षत्रम्, वृषः राशिः, अन्यत्र रोहिणी सुरभिः, वृषः गौः । विभाव्यमानतुलाधनुषः एकत्र तुलाधनुषी राशी, अन्यत्र तुला-प्रसिद्धैव, धनुश्च-धर्मुस्त्रम् [ ञ ] ।

---

मयेति शेषः, राज्यचिन्तकाः राज्यसञ्चालकाः, प्रधानपुरुषाः मन्त्रिजनाः, कथं केन प्रकारेण, प्रसादनीयाः अनुनेतव्याः । कीदृशाः ? दुर्विनयजनितोद्वेगाः मदीयदुर्विनीततोत्पादितान्तःक्षोभाः, पुनः स्वतन्त्रः स्वेच्छाचारी, इति कृत्वा मत्वा, तूष्णीमेव किमप्यकथयित्वैव, समर्पितस्वाधिकारमुद्राः प्रत्यर्पितस्वस्वाधिकारज्ञापकचिह्नविशेषाः । च पुनः, वृद्धबन्धूनां वयसा श्रेष्ठबन्धुजनानां, श्रवणपरुषाः कर्णकठोराः, रोषतिरस्काराः क्रोधप्रयुक्तानादरवाक्यानि, सदसि सभायाम्, अधोमुखेन अवनतवदनेन सता, मयेति शेषः, कथं केन प्रकारेण, सोढव्याः सहनीयाः, कीदृशाम् ? हृदयदाहलङ्घितानुवृत्तीनां हृदयदाहेन-अन्तस्तापेन, लङ्घिता त्यक्ता, अनुवृत्तिः-अनुसरणं यैस्तादृशानाम्, पुनः अनुल्लङ्घनीयवचसाम् अतिरस्करणीयवाक्यानाम् । चापलोपहतं चापल्यदूषितम्, पुनः अनात्मज्ञम् आत्मपरिज्ञानरहितम्, पुनः उत्सृष्टाभिमानं त्यक्तस्वाभिमानम्, पुनः असमीहितकारिणं स्वानभिमतकारिणं, मां, सर्वथा सर्वप्रकारेण, धिक् निन्दा, अदृष्टशिष्टव्यवहारेण अपरिचितशिष्टाचारेण, सर्वदा सर्वकाले, प्राकृतलोकसहवासिना नीचजनसहवासिना, अनेन प्रत्यक्षवर्तिना, तारकेणापि, तरलः अयं चपल इति, पुनः कुतूहली अयं फलनिरपेक्षलोलुप इति, क्रीडनशीलः अयं क्रीडाप्रकृतिक इति संभावितम् उत्कटोत्प्रेक्षया चाङ्कितम् [ झ ] । अनेकसंकल्पकवलितचित्तवृत्तेः भूरिभावनाक्रान्तमनोवृत्तेः, मे मम, इत्यादि अनुपदोक्तप्रभृतिकम्, अनल्पं प्रचुरं च, चिन्तयतः आलोचयतः सत एव, अप्रतर्कितैव अवितर्कितैव, रजनिः रात्रिः, परिणामं समाप्तिं, जगाम प्राप । ऊर्ध्वकिरणरज्जुस्तम्बलम्बमानशशिबिम्बनाङ्गरात् ऊर्ध्वाः-उपरितनाः, किरणरूपरज्जुमयस्तम्बाः, लम्बमानं-नम्रं, शशिबिम्बरूपं-चन्द्रमण्डलरूपं, नाङ्गरं यानपात्रावष्टम्भकशिला यस्य तादृशात्, अपरदिग्भागयानपात्रात् पश्चिमदिग्भागरूपपोतात्, सांयात्रिक इव पोतवणिगिव कृताम्बरजलधियात्रः कृताकाशरूपसमुद्रयात्रः, अन्धकारः, शनैः शनैः मन्दं मन्दम्, अवततार अपसृतो जगाम । आकुलाकुलप्रसारितोर्मिहस्तः आकुलाकुलं-विह्वलं यथा स्यात् तथा, प्रसारितः-विस्तारितः, ऊर्मिरूपः-तरङ्गरूपः, हस्तो येन तादृशः, जलधिः समुद्रः, इन्दुमण्डलं चन्द्रबिम्बं, जग्राह गृहीतवान्, धृतवानित्यर्थः । 'किं किमर्थं, वृथा मुधा, नदसि क्रन्दसि, मथने विलोडनावसरे, ते तव सागरस्य, रत्नानि, यदि, मया, मन्दरेण, कक्षीकृतानि गृहीत्वा बलात्कारेण गोपितानि, तत् तर्हि, एतद् प्रत्यक्षं दीप्यमानं पिण्डीकृतमुत्तरीयक्षौममिव वस्त्रं, उत्क्षिप्य ऊर्ध्वमानीय गृहाण' इति प्रकाश्य, शिरसः मस्तकप्रदेशात्, अवतार्य अधः कृत्वा, मन्दरक्षितिभृता मन्दरपर्वतेन, क्षिप्तं प्रक्षिप्तम्, पिण्डीकृतं पिण्डाकारं नीतं, उत्तरीयक्षौममिव उत्तरीयपट्टवस्त्रमिव । प्रमुदित एव आनन्दितः, प्रवृत्तमेषस्य प्रवृत्तः-सञ्चलितः, मेषः मेषराशिः यस्य तादृशस्य, पक्षे मेषः-अजः प्रवृत्तो यस्य, ततः तदनन्तरं, चलितसरोहिणीकवृषस्य चलितः-प्रस्थितः, सरोहिणीकः-रोहिणीनक्षत्रेण सहितः, वृषः-राशि-

प्रभात एव प्रस्थितस्य तारकासार्थस्य चरणोत्थापितो रेणुनिसर इव धूसरारुणो नभःसरणिमरुणदरुणालोकः [ ञ ]। ततः क्रमेण रञ्जिताम्बरे तुहिनकरविरहविदलितविभावरीहृदयरुधिर इव निपतति धरण्यामरुणरागे, तिमिरकरिरेचितेषु पांशुतल्पेष्विव स्तोकं स्तोकमुच्छ्वसत्सु दिग्भागेषु, अपरभागसंक्रान्तनक्षत्रभारावर्जित इव पूर्वभागमतिदूरमुन्नमयति व्योम्नि, विनिद्रशकुनिकुलबद्धकोलाहलासु जलनिधिप्रबोधमङ्गलानीव गायन्तीषु वेलावनावलीषु, मार्गशैलशृङ्गकृतविश्रामेष्वाहारान्वेषणाय द्वीपान्तराणि प्रस्थितेषु समुद्रोदरनिवासिषु विहङ्गेषु, पङ्कमलिनतनुषु कौपीनमात्रकर्पटावरणेष्वरुणलुण्टिततिमिरपुरलोकेष्विव समाश्रयत्सु वेलानदीपुलिनानि जालिकेषु, मुहुः स्पृष्टशैवलप्रताने मुहुरामृष्टचन्द्रकान्तमणिदृषदि मुहुर्मृदितफेनपटले मुहुराश्लिष्टसलिलवीचिसंचये संचरति वडवामुखानलसंपर्कजाततीव्रसंताप इव मन्दमन्दमौदन्वते मरुति, मुक्तमसृणमणितटीशय्येषु सवि-

---

टिप्पनकम्—रेचित-रिक्तम्। अभ्रमु—ऐरावणजाया। वामन—पश्चिमा[शा]करी, [दक्षिणाशाकरीति यद्दव°, तस्यैवानौचित्यात्] [ ट ]।

---

यस्मिंस्तादृशस्य, पक्षे चलिता, सरोहिणीका—रोहिणीभिः—धेनुभिः सहिता, वृषा—बलिवर्दाः प्रस्थानक्रियाविशिष्टे यस्मिन् सति तादृशस्य, पुनः **क्वापि क्वापि** कस्मिंश्चित् कस्मिंश्चित् प्रदेशे, **विभाव्यमानतुलाधनुषः** विभाव्यमाना—लक्ष्यमाणा, तुला—तुलाराशिः, धनुः—धनूराशिश्च यस्मिंस्तादृशस्य, पक्षे विभाव्यमाना, तुला—मानानि तोलनदण्डा वा, धनूंषि—कार्मुकाणि, प्रस्थानक्रियाविशिष्टे यस्मिन् सति तादृशस्य, पुनः **प्रभात एव** प्रातरेव, **प्रस्थितस्य** कृतप्रयाणस्य, **तारकासार्थस्य** तारागणस्य, **चरणोत्थापितः** चरणोत्क्षिप्तः, **रेणुनिसर इव** धूलिराशिरिव, **धूसरारुणः** किञ्चित्पाण्डुरक्तवर्णः, **अरुणालोकः** सूर्यप्रकाशः, **नभःसरणिम्** आकाशमार्गम्, **अरुणत्** रुद्धवान्, व्याप्तवानित्यर्थः [ ञ ]। **ततः** तदनन्तरं, **किञ्चिदुपशान्तचिन्तासंज्वरः** किञ्चिच्छिन्नचिन्तासन्तापः सन्, **पुरस्तात्** अग्रे, **चक्षुः** नेत्रम्, **अक्षिपम्** व्यापारितवानहम्, कस्मिन् कीदृशे सति ? **क्रमेण** शनैः, **रञ्जिताम्बरे** रक्तीकृतगगनमण्डले, **अरुणरागे** सूर्यबिम्बरागे, **तुहिनकरविरहविदलितविभावरीहृदयरुधिर इव** तुहिनकरस्य—शीतकिरणस्य चन्द्ररूपनायकस्येत्यर्थः, विरहेण—विश्लेषेण, विदलितं—विदीर्णं, यत्, विभावर्याः—रात्रिरूपनायिकायाः, हृदयं, तस्य **रुधिर इव** शोणित इव, **धरण्यां** भूमौ, **निपतति** अवतरति सति। पुनः **पांशुतल्पेष्विव** धूलिमयशय्यास्विव, **तिमिरकरिरेचितेषु** अन्धकाररूपहस्तिनोज्झितेषु, **दिग्भागेषु**, **स्तोकं स्तोकं** किञ्चित् किञ्चित्, **उच्छ्वसत्सु** मुखमारुतमुद्वमत्सु। पुनः **अपरभागसंक्रान्तनक्षत्रभारावर्जित इव** अपरभागे—पश्चिमभागे, संक्रान्तानि—संलग्नानि, यानि नक्षत्राणि—तारकाः, तद्भारेण तद्गुरुत्वेन, आवर्जित इव—अवनत इवेत्युत्प्रेक्षा, **व्योम्नि** आकाशे, **पूर्वभागम्**, **अतिदूरम्** अत्यन्तदूरम्, **उन्नमयति** उत्क्षिपति सति। पुनः **विनिद्रशकुनिकुलबद्धकोलाहलासु** विनिद्राणां भग्ननिद्राणां, शकुनीनां—पक्षिणां, कुलेन—पुञ्जेन, बद्धः कृतः, कोलाहलः—कलकलो यासु तादृशीषु **वेलावनावलीषु** तटवर्तिवनपङ्क्तिषु, **जलनिधिप्रबोधमङ्गलानि** समुद्रजागरणकालिकमङ्गलानि, गायन्तीषु इवेत्युत्प्रेक्षा। पुनः **मार्गशैलशृङ्गकृतविश्रामेषु** मार्गस्थपर्वतशिखरविश्रान्तेषु **समुद्रोदरनिवासिषु** समुद्रमध्यवास्तव्येषु, **विहङ्गेषु** पक्षिषु, **आहारान्वेषणाय** स्वभक्ष्यवस्तुगवेषणाय, **द्वीपान्तराणि** अन्यद्वीपान्, **प्रस्थितेषु** गन्तुं प्रवृत्तेषु सत्सु। पुनः **पङ्कमलिनतनुषु** कर्दमकलुषितकलेवरेषु, **कौपीनमात्रकर्पटावरणेषु** कौपीनमात्रं यत् कर्पटं—पटखण्डं, तदेव आवरणं येषां तादृशेषु, **जालिकेषु** धीवरजातीयेषु, **अरुणलुण्टिततिमिरपुरलोकेष्विव** सूर्यापहृतान्धकारपुरवासिजनेष्विव, **वेलानदीपुलिनानि** तटवर्तिनदीसैकतस्थलानि, **समाश्रयत्सु** निषेवमाणेषु। पुनः **मुहुः** असकृत्, **स्पृष्टशैवलप्रताने** स्पृष्टजलतृणराशौ, पुनः **मुहुः** अनेकवारम्, **आमृष्टचन्द्रकान्तमणिदृषदि** आमृष्टा—संस्पृष्टा, चन्द्रकान्तमणिरूपा दृषद्—प्रस्तरो येन तादृशि, पुनः **मुहुः** वारंवारम्, **मृदितफेनपटले** मृदितं—त्रोटितं, फेनपटलं—समुद्रकफराशिर्येन तादृशे, पुनः **मुहुः** असकृत्, **आश्लिष्टसलिलवीचिसंचये** आश्लिष्टः—आलिङ्गितः, सलिलवीचीनां—जलतरङ्गाणां, संचयः—पुञ्जो येन तादृशे, **औदन्वते** समुद्रसम्बन्धिनि, **मरुति** पवने, **वडवामुखानलसम्पर्कजाततीव्रसन्ताप इव** वडवायाः—समुद्रोदरवर्तिन्या अश्वायाः, यो मुखानलः—मुखाग्निः, वाडवाग्निरिति यावत्, तत्सम्पर्केण—तत्संयोगेन, जातः—उत्पन्नः,

भ्रमभभ्रमुकुलप्रभवाभिः करेणुभिरुपनीतसरसलवङ्गपल्लवकवलेषु सुवेलमेखलासु खेलत्सु वामनदिङ्नागवराजेषु गजेषु [ ८ ], सर्वतः प्रसृततापसाग्निहोत्रधूमान्धकारे कलशयोनिप्रसादनायायातविन्ध्यशिलालिङ्गित इवोपलक्ष्यमाणे रोहणगिरौ, प्रविष्टारुणालोकस्तोकतरलितद्वारपालवेतालेष्वसुरदेवतार्चनारम्भपिशुनमपूर्वसौरभ दिव्यकुसुमधूपामोदमुद्गिरत्सु विवरेषु, पातालचन्दनद्रुमोपवनक्रीडारागिणीभिः पन्नगाङ्गनाभिरापतन्तीभिरलभ्यान्तरेषु रसातलमलयान्तरालमार्गेषु, प्रभातमारुतापूरितरणन्मुखरपुलिनशङ्खमाले दलितशुक्तिमुक्तास्तबकिततीरभुवि जडितनलमानुपान्यासितसमालातपतटे द्रवीभूतशार्वरतिमिरविभ्रममूर्मिविस्तारमुपसंहरति मत्सुप्रचारार्थमिव चन्द्रास्तसमयविद्राणतेजसि तरङ्गिणीनाथे, दिवसकृत्युगावतारे तिमिरसागरादुन्मग्ना मेदिनीमिव द्रष्टुमुदयाद्रिशिखरमधिरूढे सहस्रदीधितौ, शनैः शनैश्च सन्धुक्षितसूर्यकान्ताग्निहुतभुजि, मन्दितेन्दुमणि-

निर्झरस्यन्दे, निष्प्रभीकृतदवदहनतेजसि, विस्तारिततरुणतरुलतापल्लवलावण्ये, मुकुलितोलूकचक्षुरालोकसंपदि, विकासितदरीगृहद्वारोदरे, प्रकीर्ण इव गुञ्जाफलेषु, अङ्कुरित इव राजशुकचञ्चुकोटिषु, पल्लवित इव कृकवाकुचूडाचक्रेषु, मञ्जरित इव सिंहकेसरसटासु, फलित इव कपिकुटुम्बिनीकपोलकूटेषु, प्रसारित इव हरितालस्थलीषु, क्षुण्ण इव शबरराजसुन्दरीसान्द्रनखदन्तक्षतेषु, राशीकृत इव पद्मरागसानुप्रभोल्लासेषु, निपतति सति पयोधिमध्यशिखरिणां शिखासु बन्धूककुसुमस्तबकभासि बालातपे, जाते स्फुटालोके जगति, किञ्चिदुपशान्तचिन्तासंज्वरः पुरस्ताच्चक्षुरक्षिपम् [ ठ ]।

अथ नातिदूरं दरीभूतस्तस्य परिसरादुज्जिहानं धातुधूलीपटलमिव विलुलितं वेलानिलेन, समन्ततः समुद्भासितनभोमार्गमर्घरत्नाञ्जलिमिव क्षिप्तमुदयसंध्यायाः सागरेण, क्वचिद् विद्रुमरसद्रवारुणरागम्, क्वचित् तरुणहारीतपक्षहरिताभोगम्, क्वचित् कर्णिकारकुसुमपुञ्जपिञ्जरसन्निवेशम्, क्वचिद् दह्यमानकृष्णागुरुधूमधूस-

---

सम्बन्धी अग्निर्येन तादृशि, पुनः **मन्दितेन्दुमणिनिर्झरस्यन्दे** मन्दित -मान्द्यमापादित , इन्दुमणे -चन्द्रकान्तमणिसम्बन्धिनः , निर्झरस्य-सुधाप्रवाहस्य, स्यन्द -प्रस्रवणं येन तादृशे, पुनः **निष्प्रभीकृतदवदहनतेजसि** निष्प्रभीकृत मन्दीकृत, दवदहनस्य-दावाग्नेः , तेज -दीप्तिर्येन तादृशि, पुनः **विस्तारिततरुणतरुलतापल्लवलावण्ये** विस्तारित-वर्धित, तरुणानां-परिणतानां, तरूणां-वृक्षाणां, लतानां च, पल्लवानां नूतनपत्राणां, लावण्य-सौन्दर्यं येन तादृशे, **मुकुलितोलूकचक्षुरालोकसम्पदि** मुकुलिता-उपसंहृता, उलूकानां-दिवान्धपक्षिणां, चक्षुषो -नयनयो , आलोकसम्पत्-तेजस्सम्पत्तिर्येन तादृशे, पुनः **विकासितदरीगृहद्वारोदरे** विकासित-प्रकाशित, दरीगृहद्वारोदर-गुहागृहद्वारमध्यं येन तादृशे, पुनः **गुञ्जाफलेषु** कृष्णलाख्यलताफलेषु, **प्रकीर्ण इव** प्रसृत इव, पुनः **राजशुकचञ्चुकोटिषु** प्रशस्तशुकतुण्डाग्रभागेषु, **अङ्कुरित इव** सञ्जाताङ्कुर इव, पुनः **कृकवाकुचूडाचक्रेषु** कुक्कुटशिखामण्डलेषु, **पल्लवित इव** सञ्जातपल्लव इव, पुनः **सिंहकेसरसटासु** सिंहसम्बन्धिस्कन्धकेशजटासु, **मञ्जरित इव** सञ्जातमञ्जरीक इव, पुनः **कपिकुटुम्बिनीकपोलकूटेषु** मर्कटस्त्री गण्डस्थलोर्ध्वभागेषु, **फलित इव** सञ्जातफल इव, पुनः **हरितालस्थलीषु** हरितालाख्यरक्षमनःप्रदेशेषु **प्रसारित इव** विस्तारित इव, पुनः **शबरराजसुन्दरीसान्द्रनखदन्तक्षतेषु** शबरराजसुन्दरीणां-शबरजातीयनृपतिसु दरस्त्रीणां, सान्द्रनखदन्तक्षतेषु-निबिडनखदन्ताघातजनितव्रणेषु, **क्षुण्ण इव** पिष्ट इव, पुनः **पद्मरागसानुप्रभोल्लासेषु** पद्मरागाणां-रक्तमणीनां, य सानु -समस्थली, तत्सम्बन्धिद्युतिततिषु, **राशीकृत इव** पुञ्जित इव, पुनः **बन्धूककुसुमस्तबकभासि** बन्धूकसंज्ञकं यत् कुसुम-रक्तपुष्पं, तस्य स्तबकस्येव-गुच्छस्येव, भा -छविर्यस्य तादृशे, **बालातपे** रक्तातपे, **पयोधिमध्यशिखरिणां** समुद्रमध्यवर्तिपर्वतानां, **शिखासु** शिखरेषु, **निपतति सति** अवतरति सति; पुनः **जगति** भूमण्डले, **स्फुटालोके** स्फुटप्रकाशे, **जाते** सम्पन्ने सति [ ठ ]।

अथ अनन्तरम्, अत्युद्भुतम् अत्याश्चर्यावहम्, प्रभावादि द्युतिपुञ्जम्, अपश्यं दृष्टवानहम्, कीदृशम्? **तस्य** प्रकृतस्य, **दरीभूतः** पर्वतस्य, **परिसरात्** प्रान्तप्रदेशात्, **नातिदूर** किञ्चिद्दूरे, **वेलानिलेन** तटवायुना, **विलुलितं** विक्षिप्तं, **उज्जिहानम्** उद्गच्छन्तम्, **धातुधूलीपटलमिव** "सुवर्णरूप्यताम्राणि हरितालं मनःशिला। गैरिकाञ्जनकासीसं सीसलोहं सहिङ्गुलम्। गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवाः॥" इत्युक्ता ये धातवः , तेषां या धूल्य -रजांसि , तासां पटलमिव समूहमिव। पुनः **समन्ततः** सर्वतः , **समुद्भासितनभोमार्गम्** उद्भासितगगनमार्गम्, पुनः **उदयसन्ध्यायाः** सूर्योदयकालिकसन्ध्यायाः , **सागरेण** समुद्रेण, **क्षिप्तम्** अर्पितम्, **अर्घरत्नाञ्जलिमिव** अर्घरूपरत्नपूर्णाञ्जलिमिव, पुनः **क्वचित्** कस्मिंश्चिद् भागे, **विद्रुमरसद्रवारुणरागम्** विद्रुमरसस्य-प्रवालरसस्य, यो द्रव -पङ्क , तस्येव अरुण -रक्त , राग -वर्णो यस्य तादृशम्, पुनः **क्वचित्** कुत्रचिद्देशे, **तरुणहारीतपक्षहरिताभोगम्** तरुण -युवा, य हारीत -पक्षिविशेष , तस्य पक्ष इव हरिताभोग -हरितकान्तिविस्तारो यस्मिंस्तादृशम्, पुनः **क्वचित्** कुत्रचित् प्रदेशे, **कर्णिकारकुसुमपुञ्जपिञ्जरसन्निवेशम्** कर्णिकारसंज्ञकं यत् पुष्पं तत्पुञ्जवत्, पिञ्जर -पीत , सन्निवेश -संस्थानं यस्य तादृशम्, **क्वचित्** कुत्रापि भागे, **दह्यमानकृष्णागुरुधूमधूसरोदेशम्** दह्यमानस्य-तप्यमानस्य, कृष्णागुरो -श्यामागुरुद्रव्यस्य, धूमवत् धूसर -ईषत्पाण्डुरो , उद्देश -

रोद्देशम्, अतिभास्वरतया दुरालोकम्, आकुलाकुलेक्षणैरुत्थाय सर्वैः समकालमौर्वानलार्चिःशङ्कया निभालितं भालतटविनिहिताग्रहस्तच्छत्रकैः कैवर्तैः संवर्तकालसंध्यासदृशमत्यद्भुत प्रभाराशिमपश्यम् [ ड ] ।

दृष्ट्वा चोपजातकौतुकः किमेतदिति वितर्कयन्नेव तस्मादर्कमण्डलादिव मयूखनिवहमेकहेलया विनिर्गतम्, आगच्छदभिमुखमाकाशमार्गेण, सन्तानकनमेरुमन्दारकुसुमप्रायशेखरं, हरिचन्दनरसप्रायाङ्गरागं, कल्पद्रुमांशुकप्रायनिवसनम्, अनेकदिव्याभरणभूषितम्, आभरणमणिकिरणप्रभासंतर्पितेन प्रसर्पता सर्वतस्तप्ततपनीयद्रवाकारेण देहद्युतिप्राग्भारेण पिङ्गलीकृताखिलदिगन्तरालं सदावानलमिवान्तरिक्षमादधानम्, उज्ज्वालदावानलानुलग्नदग्धस्थलाभेन जलनिधिवेलावनान्यपहाय युगपत्प्रधावितेन पृष्ठतो वहता विलेपनामोदाकृष्टेन मधुलिहां पटलेन पश्चात्प्रयायिभिरुन्नीयमानगतिमार्गम् [ ढ ], आदराकृष्टवल्गैर्वारंवारमुच्छलज्जलच्छटास्पर्शपरिहाराय तरुणवारिदानामन्तरालेन नीयमानैरनुद्धूतधूलीपटलमश्रूयमाणमुखरखुरपुटारवमतिवेगवल्गद्भिः

---

ऊर्ध्वदेशो यस्य तादृशम्। पुन **अतिभास्वरतया** अतिदीप्रतया, **दुरालोक** दुर्दर्शम्। पुन **और्वानलार्चिःशङ्कया** वाडवाग्निज्वालाशङ्कया, **आकुलाकुलेक्षणै** अत्यन्तचकितनयनै, पुन **भालतटविनिहिताग्रहस्तच्छत्रकै** भालतटे-ललाटतटे, विनिहित-स्थापितम्, अग्रहस्तच्छत्र-हस्ताग्रभागरूप छत्र यैस्तादृशै, सर्वै, **कैवर्तै** धीवरै, उत्थाय, **समकालमेव** युगपदेव, **निभालित** विलोकितम्, पुन **संवर्तकालसंध्यासदृश** प्रलयकालिकसन्ध्यातुल्यम् [ ड ] ।

**च** पुन, **दृष्ट्वा** निरुक्तप्रभाराशिं दृष्टिगोचरीकृत्य, **उपजातकौतुक** उत्पन्नौत्सुक्य सन्, **एतत्** तेज, **किम्** कीदृशम्, इति **वितर्कयन्नेव** विचिन्तयन्नेव, **खेचरनरेन्द्रवृन्द** विद्याधरेन्द्रगणम्, **अद्राक्ष** दृष्टवानहम्, कीदृशम्? **अर्कमण्डलात्** सूर्यमण्डलात्, **मयूखनिवहमिव** किरणकलापमिव, **तस्मात्** प्रभामण्डलात्, **एकहेलया** युगपत्, **विनिर्गत** विनिःसृतम्। पुन आकाशमार्गेण, **अभिमुख** सम्मुखम्, **आगच्छत्** अवतरत्। पुन **सन्तानकनमेरुमन्दारकुसुमप्रायशेखर** सन्तानक नमेरु मन्दारा -देववृक्षविशेषा, तेषां यानि कुसुमानि-पुष्पाणि, तत्प्राय-तत्प्रचुरं, शेखर-शिरोमाल्य यस्य तादृशम्। पुन **हरिचन्दनरसप्रायाङ्गरागम्** हरिचन्दनरसप्राय -चन्दनविशेषरसप्रचुर, अङ्गराग -अङ्गलेपो यस्य तादृशम्। पुन **कल्पद्रुमांशुकप्रायनिवसनम्** कल्पद्रुमांशुकप्राय-कल्पद्रुमसम्बन्धिसूक्ष्मश्लक्ष्णवस्त्रप्रचुर, निवसन-वस्त्र यस्य तादृशम्। पुन **अनेकदिव्याभरणभूषित** विविधोत्कृष्टालङ्कारालङ्कृतम्। पुन **देहद्युतिप्राग्भारेण** शरीरकान्तिकलापेन, **पिङ्गलीकृताखिलदिगन्तराल** पिङ्गलीकृत-पिशङ्गीकृतम्, अखिलानां-समस्तानां, दिशाम्, अन्तराल मध्य यत्र तादृशम्, कीदृशेन? **आभरणमणिकिरणप्रभासन्तर्पितेन** आभरणमणीनाम्-अलङ्करणमणीनां, ये किरणा -रश्मय, तत्प्रभाभि, सन्तर्पितेन-संवर्धितेन, पुन **सर्वत** परित, **प्रसर्पता** प्रसरता **तप्ततपनीयद्रवाकारेण** तप्त यत् तपनीय-सुवर्णं, तस्य यो द्रव -पङ्क, तदाकारेण, अत एव **अन्तरिक्ष**-गगनमण्डल, **सदावानलमिव** दावाग्निसहितमिव, **आदधान** कुर्वाणम्। पुन **पश्चात्प्रयायिभि** पश्चात्प्रगामिजनै, **उन्नीयमानगतिमार्गम्** उन्नीयमान -अनुमीयमान, गतिमार्ग -गमनमार्गो यस्य तादृशम्, केन? **मधुलिहां** भ्रमराणां, पटलेन-समूहेन, कीदृशेन? **उज्ज्वालदावानलानुलग्नदग्धस्थलाभेन** उत्-ऊर्ध्वं, ज्वाला यस्य तादृशेन, दावानलेन दावाग्निना, अनुलग्न-सम्बद्ध, दग्ध च यत् स्थल-स्थान, तस्येव आभा-कान्तिर्यस्य तादृशेन, पुन **जलनिधिवेलावनानि** समुद्रतटवर्तिवनानि, **अपहाय** त्यक्त्वा, **युगपत्** एककाल, **प्रधावितेन** कृतसत्वरगतिकेन, पुन **पृष्ठत** पृष्ठभागे, **वहता** गच्छता, पुन **विलेपनामोदाकृष्टेन** विलेपनस्य-अङ्गोपलेपनद्रव्यस्य, आमोदेन-अतिसौरभेण, आकृष्टेन-वशीकृतेन [ ढ ] । पुन **प्रधानवाजिभि** मुख्यभूताश्वै, **उह्यमाननायकम्** उह्यमान -देशान्तरं नीयमान, नायको यस्य तादृशम्, कीदृशै? **आदराकृष्टवल्गै** आदरेण आकृष्टा वल्गा-मुखरज्जुर्यैस्तादृशै, पुन **वारंवारम्** अनेकवारम्, **उच्छलज्जलच्छटास्पर्शपरिहाराय** उच्छलन्त्या -उद्वेलन्त्या, जलच्छटाया -जलधाराया, स्पर्शपरिहाराय स्पर्शवर्जनाय, **तरुणवारिदानां** परिणतमेघानाम्, **अन्तरालेन** मध्येन, **नीयमानै** गम्यमानै, पुन **अनुद्धूतधूलीपटलम्** अनुद्धूतम्-अनुत्थितम्, धूलीपटल-धूलीसमूहो यस्मिंस्तादृश यथा स्यात् तथा, पुन **अश्रूयमाणमुखरखुरपुटारवम्** अश्रूयमाण, मुखरयो -शब्दायमानयो, खुरपुटयो -सम्पुटितखुरयो, आरव ध्वनिर्यस्मिंस्तादृश

स्वभावचञ्चलैः प्रधानवाजिभिरुह्यमाननायकम्, अदृश्यमानहरितच्छायामण्डलैश्चलद्भिरुद्दण्डैरातपत्रखण्डैरभिनवतापसलिलनिर्झरे नभःसरसि मूलभागनिर्लूननलिनीपलाशप्रकराणि पङ्कजवनानीव संचारयमाणम्, अचिरांशुतेजःस्तवकचन्द्रकितैरिन्द्रनीलकान्तिभिः तरुणजलदैरध्यासितोर्ध्वकदलिकाशिखरेषु समुच्छ्रितोद्दण्डमायूरातपत्रेष्विव द्विरदसारिसदनेषु निद्रायमाणकुमारम्, अच्छिन्नसंतानपवनप्रसारिताभिरतिभास्वरतया दिवापि प्रेङ्खदुल्कादण्डमिव व्योम दर्शयन्तीभिः कल्पतरुरत्नांशुकवैजयन्तीभिः समन्ततो ज्वलद्रथविमानकेतनम्, उदारनेपथ्यधारिणा गृहीतनानाप्रहरणेन विद्यानुभावसिद्धत्वाद् गतेरकृतपदविक्षेपमग्रतः प्रसर्पता समपादस्थितेन पदातिसंदोहेन कृतकलकलं [ ण ], पृष्ठतश्च वरकरेणुकारूढाभिरुपरिधृतकुन्दधवलातपत्रिकाभिः पुरःप्रधावमानकनकदण्डोड्डामरमायूरच्छत्रमण्डलाभिरुभयतः प्रचलितभुजलतारत्नवलयेन वाराङ्गनाजनेन सलीलमुद्धूयमानचामरकलापाभिरापपदीनचीनकञ्चुकावच्छन्नवपुषा निजनिजवाहनाधिरूढेन वृद्धान्तर्वंशिक-

---

यथा स्यात् तथा, अतिवल्गु अतिमनोहर, वल्गद्भिः गच्छद्भि । पुन स्वभावचञ्चलैः प्रकृतिचपलै । पुन अदृश्यमानहरितच्छायामण्डलैः अदृश्यमानम्–अप्रतीयमानम्, हरितच्छायामण्डल–हरितकान्तिकलापो येषा तादृशै, उद्दण्डैः ऊर्ध्वदण्डै, आतपत्रखण्डैः छत्रमण्डलै, अभिनवातपसलिलनिर्झरे अभिनव–नवीन, आतपात्मकाना सलिलाना–जलाना, निर्झर–प्रवाहो यस्मिंस्तादृशे नभःसरसि आकाशरूपसरसि, मूलभागनिर्लूननलिनीपलाशप्रकराणि मूलभागे–मूलप्रदेशे, निर्लून–छिन्न, नलिनीपलाशप्रकर–पद्मिनीपत्रसमूहो येषु तादृशानि, पङ्कजवनानि कमलवनानि, सञ्चारयमाणमिव सवाहयमानमिव, पुन द्विरदसारिसदनेषु द्विरदाना–गजाना, ये सारय–पर्याणानि, तद्रूपगृहेषु, निद्रायमाणकुमार निद्रायमाण–शयान, कुमार–युवराजो यस्मिंस्तादृशम्, कीदृशेषु ? तरुणजलदैः परिणतमेघै, अध्यासितोर्ध्वकदलिकाशिखरेषु अध्यासितम्–अधिष्ठितम्, ऊर्ध्वकदलिकानाम्–उपरितनवैजयन्तीना, शिखर–शिरोभागो येषा तादृशेषु, कीदृशै ? अचिरांशुतेजःस्तवकचन्द्रकितैः अचिरांशुतेजःस्तवकेन–विद्युत्तेजोगुच्छेन, चन्द्रकितै –सञ्जातमयूरपक्षस्थचन्द्राकारचिह्नै, पुन इन्द्रनीलकान्तिभिः मरकतमणितुल्यकान्तिभि, अत एव, समुच्छ्रितोद्दण्डमायूरातपत्रेष्विव समुच्छ्रित–समुन्नमितम्, उद्दण्डम्–ऊर्ध्वदण्ड, मायूर–मयूरसम्बन्धि, आतपत्र छत्रं येषु तादृशेष्विवेत्युत्प्रेक्षा । पुन कल्पतरुरत्नांशुकवैजयन्तीभिः कल्पतरुसम्बन्धिरत्नमयवस्त्ररूपपताकाभि, समन्ततः सर्वत, ज्वलद्रथविमानकेतनं ज्वलद्–दीप्यमानं, रथस्य विमानस्य च, केतन–पताकादण्डो यस्य तादृशम्, कीदृशीभि ? अच्छिन्नसन्तानपवनप्रसारिताभिः अच्छिन्नसन्तानेन–अविरतसन्ततिकेन, पवनेन–वायुना, प्रसारिताभिः–विस्तारिताभि, पुन अतिभास्वरतया अतिदीप्तिमत्तया, दिवापि दिनेऽपि, प्रेङ्खदुल्कादण्डमिव प्रेङ्खन्–प्रचलन्, उल्कादण्ड –निर्गच्छज्ज्वालारूपदण्डो यस्मिंस्तादृशमिवेत्युत्प्रेक्षा, व्योम गगनमण्डल, दर्शयन्तीभिः प्रलापयन्तीभि, पुन पदातिसन्दोहेन पादगामिगणेन, कृतकलकल कृतकोलाहलम्, कीदृशेन ? उदारनेपथ्यधारिणा उज्ज्वलकृत्रिमवेषधारिणा, पुन गृहीतनानाप्रहरणेन धृतविविधास्त्रेण, पुन गतेः गमनस्य, विद्यानुभावसिद्धत्वात् विद्याप्रभावसिद्धत्वात्, अकृतपदविक्षेपम् अकृतपादप्रक्षेपणं यथा स्यात् तथा, अग्रतः अग्रे, प्रसर्पता प्रचलता, पुन समपादस्थितेन अन्यूनानधिकवर्त्तिपादावलम्बितेन [ ण ] । च पुन पृष्ठतः पृष्ठभागे, प्रधानावरोधसुन्दरीभिः प्रधानान्तःपुरसुन्दरस्त्रीभि, अनुगम्यमानम् अनुस्रियमाणम्, कीदृशीभि ? वरकरेणुकारूढाभिः उत्तमहस्तिनीमारूढवतीभि, पुनः उपरिधृतकुन्दधवलातपत्रिकाभिः उपरि धृता गृहीता, कुन्दपुष्पवत् धवला–शुभ्रा, आतपत्रिका–लघुच्छत्रं याभिस्तादृशीभि, पुनः पुरः प्रधावमानकनकदण्डोड्डामरमायूरच्छत्रमण्डलाभिः पुरः–अग्रे प्रधावमान, कनकदण्डेन–सुवर्णमयदण्डेन, उड्डामरम्–उद्भटं, मायूरच्छत्रमण्डल–मयूरपक्षमयच्छत्रवृन्द यासां तादृशीभि, पुन उभयतः पार्श्वद्वये, प्रचलितभुजलतारत्नवलयेन प्रचलितम्–उद्वेलितं, भुजलतयो –बाहुलतयो, रत्नमय वलय–कङ्कणं यस्य तादृशेन, वाराङ्गनाजनेन पण्याङ्गनेन, सलीलं सविलासं, यथा स्यात् तथा, उद्धूयमानचामरकलापाभिः उद्धूयमान –उत्क्षिप्यमाण, चामरकलाप –चामरसमूहो यासां तादृशीभि, पुन वृद्धान्तर्वंशिकसमूहेन वृद्धान्तःपुराधिकारिगणेन, सर्वतः परितः,

समूहेन सर्वतः परिवृताभिरालोहितापाङ्गतरङ्गैर्मन्दतारकापरिस्पन्दैर्लोचनारविन्दैरनुभूतदीर्घरजनिजागराभिरिव विभाव्यमानाभिरलम्बितालकश्रेणिभिरलुप्तललाटतिलकैरल्पितौष्ठमुद्रालक्तकैराननेन्दुभिरसंपादितमनोभवाज्ञाभिरिव छायमानाभिः प्रधानावरोधसुन्दरीभिरनुगम्यमानम्, अनतिभूरिपरिवारपरिच्छदम्, उच्चलितमध्वना सुवेलाद्रेः खेचरनरेन्द्रवृन्दमग्राक्षम् [ त ] ।

दृष्ट्वा चाग्रतस्तं प्रभाराशिमत्यन्तदुरालोकं तं चापतन्तमभिमुखं खेचरलोकमुल्लसचित्तवृत्तिः प्रवर्तय पुरस्तान्नावमिति नियुज्य तारकं तत्क्षणमेव चलितस्तेन विस्मयस्तिमितचक्षुषा समस्तेनापि गगनचारिणा गणेन 'कोऽयं? कुतोऽयं? किमर्थमायातः? कथमिहातिदुर्गमायां नगोपकण्ठभूमावेकाकी प्रविष्टः? क्व यास्यति?' इति जल्पता परस्परमवलोक्यमानो गत्वा स्तोकमन्तरमधस्तात् तस्य भूधरस्य झटिति दृष्टवानष्टापदाद्रिशिखरभास्वराकारम्, उत्पातपवनधूननोपजातवेदना गर्भपातमिव संवर्तकाभ्रविपुताम्, अनवरतवारिधिसलिलशोषणोत्पन्नजाड्यस्य दाहशक्तिभ्रंशमिव वाडवाग्नेः, अमृतमथनोत्फालमन्दरास्फालितस्य रुचिरच्छटोद्गार-

---

परिवृताभिः परिवेष्टिताभिः, कीदृशेन? आप्रपदीनचीनकञ्चुकावच्छन्नवपुषा आप्रपदीन–पादाक्रान्त यावत् लम्ब्यमानो यः, चीनकञ्चुक–चीनदेशीयवस्त्रनिर्मितः कञ्चुकः, तेन अवच्छन्नम्–आच्छादितम्, वपुः–शरीरं यस्य तादृशेन, पुनः निजनिजवाहनाधिरूढेन स्वस्ववाहने कृताधिरोहणेन, पुनः आलोहितापाङ्गतरङ्गैः आलोहित–आरक्त, अपाङ्गतरङ्ग–नेत्रप्रान्तभागकान्तिप्रवाहो येषां तादृशैः, पुनः मन्दतारकापरिस्पन्दैः मन्द, तारकापरिस्पन्द–कनीनिकासञ्चारो येषु तादृशैः, लोचनारविन्दैः नयनकमलैः, अनुभूतदीर्घरजनिजागराभिरिव अनुभूता प्राप्ता, दीर्घायाम्–आयतायाम्, रजन्यां–रात्रौ, जागरः जागरणं याभिस्तादृशीभिरिव, विभाव्यमानाभिः प्रतीयमानाभिः, पुनः अलम्बितालकश्रेणीभिः वक्रकुटिलकेशपङ्क्तिभिः, पुनः अलुप्तललाटतिलकैः अध्वस्तभालस्थलकबिन्दुभिः, पुनः अल्पितौष्ठमुद्रालक्तकैः आल्पितम्–अप्रख्यापितम्, ओष्ठे, मुद्रालक्तकम्–मुद्रा मकरम्, आलक्तकम्–रक्तद्रवो येषु तादृशैः, आननेन्दुभिः मुखचन्द्रैः, असम्पादितमनोभवाज्ञाभिरिव न सम्पादिता–अपरिपालिता, मनोभवस्य–कामदेवस्य, आज्ञा अनुशासनं याभिस्तादृशीभिरिव, छायमानाभिः उत्प्रेक्ष्यमाणाभिः । पुनः कीदृशम्? अतिभूरिपरिवारपरिच्छदम् अतिभूरि–अत्यधिकः, परिवारः–अमात्यादिपरिजनः, परिच्छदः–उपकरणं च यस्य तादृशम् । पुनः सुवेलाद्रेः सुवेलसंज्ञपर्वतस्य, अध्वना मार्गेण, उच्चलितम् ऊर्ध्वं चलितम् [ त ] ।

च पुनः, अग्रतः अग्रे, अत्यन्तदुरालोकम् अतिदुर्दर्शम्, तं प्रकृतं, प्रभाराशिं तेजःपुञ्जम्, च पुनः, अभिमुखं सम्मुखम्, आपतन्तम् आगच्छन्तं, खेचरलोकं विद्याधरजनं, दृष्ट्वा दृग्गोचरीकृत्य, उल्लसच्चित्तवृत्तिः प्रमोदमानमनोवृत्तिः सन्, पुरस्तात् अग्रे, नावं, प्रवर्तय प्रेरय, इति इत्थं, तारकं तत्संज्ञकं नाविकं, नियुज्य आज्ञाप्य, तत्क्षणमेव तत्कालमेव, चलितः प्रस्थितः, विस्मयस्तिमितचक्षुषा विस्मयेन–आश्चर्येण, स्तिमितं निश्चलं, चक्षुः–नेत्रं यस्य तादृशेन, समस्तेनापि सकलेनापि, तेन प्रकृतेन, गगनचारिणा खेचराणां, गणेन समूहेन, अयं नरश्रेष्ठः, कः?, अयं कुतः कस्मात् स्थानात्, किमर्थं किम्प्रयोजनम्, आयातः आगतः? कथं केन प्रकारेण, अतिदुर्गमायाम् अतिदुःखेन गम्यायाम्, इह अस्यां, नगोपकण्ठभूमौ पर्वतप्रान्तभूमौ, एकाकी अद्वितीयः, प्रविष्टः कृतप्रवेशः सन्, क्व कुत्र, यास्यति गमिष्यति? इति परस्परम् अन्योऽन्यम्, जल्पता ब्रुवता, अवलोक्यमानः निरीक्ष्यमाणः, स्तोकं किञ्चित्, अन्तरं दूरं, तस्य प्रकृतस्य, भूधरस्य पर्वतस्य, अधस्तात् अधोभागे, झटिति शीघ्रं, गत्वा, एकं दिव्यं मनोहरम्, आयतनं गृहं, दृष्टवान् दर्शितवान्, कीदृशम्? अष्टापदाद्रिशिखरभास्वराकारम् अष्टापदपर्वतस्य शिखरवत्, भास्वरः–दीप्तः, आकारो यस्य तादृशम् । पुनः उत्पातपवनधूननोपजातवेदनानाम् उत्पातपवन–शुभाशुभसूचकधूलिधूसरवाताद्युपद्रवकारिवायुना, यत् धूननं–कम्पनं, तेन उपजातम् उत्पन्नं, वेदना–पीडा यासां तासाम्, संवर्तकाभ्रविपुषां प्रलयकालमेघवृष्टिबिन्दूनाम्, गर्भपातमिव गर्भस्य पतनमिव । पुनः अनवरतवारिधिसलिलशोषणोत्पन्नजाड्यस्य अनवरतं–निरन्तरं, वारिधेः समुद्रस्य, सलिलशोषणेन–जलशोषणेन उत्पन्नम्, जाड्यं–शैत्यं यस्य तादृशस्य, वाडवाग्नेः समुद्राग्नेः, दाहशक्तिभ्रंशमिव दाहसामर्थ्यनाशमिव । पुनः अमृतमथनोत्फालमन्दरा-

मिव पारावारस्य, प्रलयपर्जन्यगर्जितोपजनितप्रौढभेदायाः कन्दलोद्भेदमिव पातालस्वर्गवैडूर्यभूमेः, अतुलगारुडप्रायघटितोदग्रविकटपीठम्, अध्यासितपीठबन्धमध्यया रसातलत्रिपथगातरङ्गमालयेव गगनमवलोकयितुमुत्पतितया चन्द्रकान्तमणिशिलासोपानमालया विराजितोदारमण्डपद्वारावतारमार्गम्, अनेकमाणिक्यमत्तवारणकभूषितम् [थ], अनिमेषलोचनाभिरतिशयितविश्वकर्मकौशलं शिल्पनिर्माणमवलोकयितुममरलोकादुपागताभिः स्वर्गरमणीभिरिव मणिशिलाशालभञ्जिकाभिरध्यासिताभ्रंकषपुष्परागपाषाणस्तम्भशिखरम्, उपरि घूर्णन्तीभिरर्णवोदकपानकालीभिर्बालजलधरलेखाभिरापादिताञ्जनवर्तिकृत्यैर्ज्वलद्भिरुच्छिखैः पद्मरागकलशैः प्रकाशिताकालदीपोत्सवविलासम्, अविरलोद्गीर्णसुरचापचक्रकृतकलापापलापेषु वज्रमणिशलाकाजालकेषु कूजितानुमितनिलीननीलकण्ठम्, आशामुखव्यापिनि महानीलाश्मयोनेरामलसारकस्य घनदुर्दिनश्यामले प्रभाचक्रवाले बलाकायमानपवनलोलसितपताकम्, आभोगदूरोत्सारितदिशा तपनमण्डलमिवात्मनः कलशतां

---

**स्फालितस्य** अमृतमथने–समुद्रादमृतोद्धरणे, उत्फाल –उद्धत, यो मन्दर –मन्दराचल, तेन आस्फालितस्य–सङ्क्षोभितस्य, **पारावारस्य** समुद्रस्य, **रुधिरच्छटोद्गारमिव** रुधिरधारोद्गमनमिवेति चोत्प्रेक्षा। पुन **प्रलयपर्जन्यगर्जितोपजनितप्रौढभेदाया** प्रलयपर्जन्यस्य–प्रलयकालिकमेघस्य, गर्जितेन–गर्जनेन, उपजनित –उत्पादित, भेद –विदारण यस्यास्तादृश्या, **पातालस्वर्गवैडूर्यभूमेः** पातालस्वर्गसम्बन्धिमणिविशेषक्षेत्रभूतभूमे, **कन्दलोद्भेदमिव** नवाङ्कुरोद्गममिवेति चोत्प्रेक्षा। पुन **अतुलगारुडप्रायघटितोदग्रविकटपीठम्** अतुलेन–अनुपमेन, यद्वा अपरिमितेन, गारुडप्रायेण–मरकतमणिना, घटित–रचितम्, उदग्रम्–उन्नत, विकटं–विशाल च, पीठम् ऊर्ध्वभूमिर्यस्य तादृशम्। पुन **अध्यासितपीठबन्धमध्यया** ऊर्ध्वभूमिबन्धमध्यवर्तिन्या, **गगनम्** आकाशम्, **अवलोकितु** द्रष्टुम्, **उत्पतितया** उच्छलितया, **रसातलत्रिपथगातरङ्गमालयेव** पातालगङ्गातरङ्गावल्येवेत्युत्प्रेक्षा, **चन्द्रकान्तमणिशिलासोपानमालया** चन्द्रकान्तमणिरूपप्रस्तरमयाधिरोहणीपङ्क्त्या, **विराजितोदारमण्डपद्वारावतारमार्गं** विराजित –उद्भासित, उदारस्य–महत, मण्डपस्य गृहविशेषस्य, द्वारे, अवतारमार्गे –प्रवेशमार्गो यस्य तादृशम्। पुन **अनेकमाणिक्यमत्तवारणकभूषितम्** अनेकै –बहुभि, माणिक्यस्य मणिनिर्मितै, मत्तवारणकै –वरण्डकै, वरण्डि इति ख्यातैर्गृहावयवै, भूषित–शोभितम् [थ]। पुन **अनिमेषलोचनाभिः** अनिमेषदनयनाभि, अत एव **अतिशयितविश्वकर्मकौशलम्** अतिशयित–तिरस्कृत, विश्वकर्मण –तदाख्यशिल्पिदेवस्य, कौशल–नैपुण्य येन तादृश, **शिल्पनिर्माणं** शिल्परचनाम्, **अवलोकयितुं** द्रष्टुम्, **अमरलोकात्** देवलोकात्, **उपागताभिः** समीपमागताभि, **स्वर्गरमणीभिरिव** स्वर्गसम्बन्धिसुन्दरीभिरिवेत्युत्प्रेक्षा, **मणिशिलाशालभञ्जिकाभिः** मणिरूपप्रस्तररचितशिलापुत्रिकाभि, **अध्यासिताभ्रङ्कषपुष्परागपाषाणस्तम्भशिखरम्** अध्यासितम्–अधिष्ठितम्, अभ्रङ्कषस्य मेघस्पर्शिन, पुष्परागपाषाणस्तम्भस्य–पद्मरागमणिरूपप्रस्तरमयस्तम्भस्य, शिखरम्–उपरिभागो यस्य तादृशम्। पुन **उपरि** ऊर्ध्वं, **घूर्णन्तीभिः** भ्रमन्तीभि, **अर्णवोदकपानकालीभिः** समुद्रजलपानकृष्णवर्णाभि, **बालजलधरलेखाभिः** नवीनमेघपङ्क्तिभि, **आपादिताञ्जनवर्तिकृत्यैः** सम्पादिताञ्जनात्मकदीपदशाकार्यैं, **ज्वलद्भिः** दीप्यमानै, **उच्छिखैः** ऊर्ध्वशिखै, **पद्मरागकलशैः** पद्मरागाख्यमणिमयकुम्भै, **प्रकाशिताकालदीपोत्सवविलासं** प्रकाशित –प्रकटित, अकाले–स्वोचितकालाभावेऽपि, दीपाना–दीपावल्या, उत्सवविलास –उत्सवशोभा यस्मिंस्तादृशम्। पुन **अविरलोद्गीर्णसुरचापचक्रकृतकलापापलापेषु** अविरलोद्गीर्णेन–निरन्तरमुद्भासितेन, सुरचापचक्रेण–इन्द्रधनुर्गणेन, कृत, कलापस्य–मयूरशिखाया अपलाप –अपह्नवो येषु तादृशेषु, **वज्रमणिशलाकाजालकेषु** हीरकमणिमयशलाकासमूहेषु, **कूजितानुमितनिलीननीलकण्ठ** कूजितेन–अव्यक्तशब्देन अनुमित, निलीन –प्रच्छन्न, नीलकण्ठ मयूरो यस्मिंस्तादृशम्। पुन **आशामुखव्यापिनि** दिगन्तव्यापके, **घनदुर्दिनश्यामले** सान्द्रमेघच्छन्नदिनवत् कृष्णवर्णे, **महानीलाश्मयोनेः** महानीलाश्मा–महानीलमणि, योनि –उत्पत्तिस्थान यस्य तादृशस्य, **आमलसारकस्य** शिखरावयवविशेषस्य, **प्रभाचक्रवाले** प्रभामण्डले, **बलाकायमानपवनलोलसितपताकं** बलाकायमाना–बकपङ्क्तिवदाचरन्ती, पवनेन–वायुना, लोला–चञ्चला, सिता–श्वेता, पताका यस्मिंस्तादृशम्। पुन **आभोगदूरो-**

नेतुमुत्थितेन चुम्बिताम्बरशिखमतिप्रांशुना शिखरेण, विततशिखरश्रेणिना सागरवीचिमालास्फालवाचालतलशिलासोपानमालेन मूलदेशासीननानारूपजलचरजातिना स्वच्छतातिरेकादात्मकरतलस्थितवदवलोक्यमानापरभागावस्थितपदार्थजातेन शुद्धजातिस्फाटिकनिर्मितेन स्फुटस्फातिना प्राकारमण्डलेन कुण्डलितम्, अमलप्राकारभित्तिलग्नैः प्रतिबिम्बकैरिव निजैरनिलवेल्लितपताकापल्लवतया प्रांशुमुन्नतिप्रकर्षमारब्धसेवासमुचितोत्तरीयाञ्चलवीजनैरमरगिरिशृङ्गैरिव सर्वतः परिवृतं हिरण्मयैः सुरप्रासादैः [द], छन्दोविचितिशास्त्रमिव बृहत्या जगत्या भ्राजितं, युगान्तदिवसमिव विलसदनेकरूपकालिकान्तं, हेमन्तमिव समासन्नशिशिरवातायनालंकृतं,

---

टिप्पनकम्—छन्दोविचितिशास्त्रमिव बृहत्या जगत्या छन्दोजात्या, अन्यत्र महत्या देवकुलिकाधरया। युगान्तदिवसमिव विलसदनेकरूपकालिकान्तम् एकत्र विलासवद्नानारूपशङ्करम्, अन्यत्र देदीप्यमाननानारूपैकपङ्क्तिकमनीयम्। हेमन्तमिव समासन्नशिशिरवातायनालङ्कृतम् एकत्र निकटशीतलगवाक्षभूषितम्, ..। प्रौढयादिनमिवातिविषमपत्रभङ्गविस्मायितप्रेक्षकजनम् एकत्र दुर्विजेयपत्रकभञ्जनाश्चर्यितावलोककलोकम्, अन्यत्र दुर्लखनीयपत्रवल्लीरचनाभेदाश्चर्यितप्रेक्षकजनम् [ध]।

---

रसारितदिशा आभोगेन-विस्तारेण, दूरम्, उत्सारिता-उरिक्षप्ता, दिक् येन तादृशेन, अत तपनमण्डलं सूर्यबिम्बम्, आत्मनः स्वस्य, कलशतां कुम्भता, नेतुं प्रापयितुम्, उत्थितेनेव उद्गतेनेव, अतिप्रांशुना अत्युन्नतेन, शिखरेण शृङ्गेण, चुम्बिताम्बरशिखं चुम्बिता-स्पृष्टा, अम्बरशिखा-आकाशोपरिभागो येन तादृशम्। पुन. प्राकारमण्डलेन प्राकारसमूहेन मण्डलाकारप्राकारेण वा, कुण्डलित परिवेष्टितम्, कीदृशेन? विततशिखरश्रेणिना विस्तृतशिखरसमूहेन, पुन सागरवीचिमालास्फालवाचालतलशिलासोपानमालेन सागरवीचिमालाया.-समुद्रतरङ्गश्रेण्या, य आस्फाल-आस्फालन, तेन वाचालतला-शब्दायमानाध स्थला, शिलासोपानमाला-प्रस्तरमयी रोहिणीश्रेणी यस्य तादृशेन, पुन मूलदेशासीननानारूपजलचरजातिना मूलदेशे-अधोदेशे, आसीना-उपविशन्त्य, नानारूपा-अनेकरूपा, जलचरजातय-जलजन्तुजातीया जीवा यस्मिंस्तादृशेन, पुन स्वच्छतातिरेकात् उज्ज्वलतोत्कर्षात्, आत्मकरतलस्थितवत् स्वकरतलवर्तिवस्तुवत्, अवलोक्यमानापरभागावस्थितपदार्थजातेन अवलोक्यमान-दृश्यमानम्, अपरभागावस्थितम्-उत्तरभागावस्थित, पदार्थजातं-वस्तुसमूहो यस्मिंस्तादृशेन, पुन शुद्धजातिस्फाटिकनिर्मितेन शुद्धजाति-स्वच्छजातीय, यत् स्फाटिक-स्फटिकमणिगण, तद्रचितेन, पुन स्फुटस्फातिना स्फुटा स्फाति-विस्तारो यस्य तादृशेन। पुन हिरण्मयै. सुवर्णमयै, सुरप्रासादै. देवमन्दिरै, सर्वत. सर्वभागेषु, परिवृतं परिवेष्टितम्, कैरिव? अमलप्राकारभित्तिलग्नै उज्ज्वलप्राकारकुड्यसक्तै, निजैः स्वीयै, प्रतिबिम्बकैरिव प्रतिच्छायाभिरिव, पुन अनिलवेल्लितपताकापल्लवतया पवनोद्धूतपताकारूपपल्लवतया हेतुना, उन्नतिप्रकर्षम् उच्छ्रायोत्कर्षं, प्रांशुमिव लम्बुमिव, आरब्धसेवासमुचितोत्तरीयाञ्चलवीजनैः आरब्ध-प्रवर्तितं, सेवासमुचित-सेवायोग्यम्, उत्तरीयाञ्चलवीजनम्-उत्तरीयवस्त्राग्रभागेन वीजनं-पवनान्दोलन यैस्तादृशै, अमरगिरिशृङ्गैरिव सुमेरुशिखरैरिव [द]। पुन. कीदृशम्? छन्दोविचितिशास्त्रमिव छन्दोविचिति-छन्द सन्दोह, तत्सम्बन्धिशास्त्रमिव, यद्वा छन्दसा या विचिति-अन्वेषण, तत्सम्बन्धिशास्त्रमिव, बृहत्या प्रसृतया, जगत्या आयतनाधारभूम्या, पक्षे बृहती-जगतीसञ्ज्ञकच्छन्दोभ्यां, भ्राजितं शोभितम्, पुन युगान्तदिवसमिव प्रलयदिनमिव, विलसदनेकरूपकालिकान्तं विलसन्तीभि-विराजमानाभि, अनेकरूपाभि-नानाप्रकाराभि, आलीभि-पङ्क्तिभि, कान्त-सुन्दरम्, पक्षे विलसन्-विराजन्, नानारूपाभि-नानाप्रकाराभि, कालिकाभि-चण्डिकाभि, अन्त-ध्वंसो यत्र, यद्वा विलसद्भि, नानारूपै., अलिभि-भ्रमरै, [मार्कण्डेयपुराणान्तर्गतदुर्गासप्तशत्यां [illegible]] "तदाऽहं भ्रामरं रूपं कृत्वाऽसंख्येयषट्पदम्" इत्यत्र [illegible] भ्रमराख्य [illegible] भविता [illegible], कान्तं-मनोहरम्, यद्वा विलसन् शोभन् नानारूपः कालः, कान्त-विनाशो यत्र तादृशम्। पुन हेमन्तमिव हेमन्तऋतुमिव, समासन्नशिशिरवातायनालङ्कृत समासन्नै-अतिसमीपवर्तिभि, शिशिरं-शीतलै, वातायनै-गवाक्षै, पक्षे

प्रौढवादिनमिवातिविषमपत्रभङ्गविस्मायितप्रेक्षकजनम्, अनेकमाणिक्यखण्डखचितकाञ्चनशिलासंघातम्, एकं दिव्यमायतनम् [ध]।

उपजातविस्मयश्च विस्मृतनिमेषनिश्चलेन चक्षुषा तदवलोक्य सुचिरमकरवं मनसि—'फलाभिलाषिणा पुरुषेण नैकान्तो नीतिनिष्ठेन भवितव्यम्, अभिमते वस्तुनि दैवं प्रमाणीकृत्य सर्वात्मना प्रवर्तितव्यम्, अनुकूलविधिविहितसाहायकस्य साहसिकस्य सर्वदा शस्यसंपदिवानीतिरनीतिरपि फलति, येन सकलबुधजनोपहासपात्रमेषोऽपि यात्राविधिरीदृशस्य मे निर्वृतिलाभस्य कारणं संवृत्तः, यद्यपायभीरुतया नीतिमनुसरन्नाहमेतां भूमिमागमिष्यं कथमिदं कथापथोत्तीर्णरूपगुणलुप्तसुरपतिविमानकमनीयताप्रवादं प्रासादरत्नमद्रक्ष्यम् [न]। यदवलोकनेनाद्य विनिवृत्तमिवाह्लादकरपदार्थदर्शनकुतूहलं दृष्टेः, उपरत इवाद्भुतकथाकर्णनादरः कर्णयोः, नृत्यतीव हृदयमन्तः प्रहर्षेण, पुण्यभाजो जगति, यैः परित्यज्य राज्यमपि, गृहीत्वा पारिव्राज्यमपि, भुक्त्वा फलमूलमयमाहारलेशमपि, विषह्य दुःसहं वनवासक्लेशमपि, अङ्गीकृत्य बान्धवसुहृद्वियोगमपि, प्राप्य

---

टिप्पनकम्—**शस्यसम्पदिवानीतिरनीतिरपि फलति** अनीति -अनयोऽपि, अन्यत्र अनीति -ईतिरहिता [न]।

---

समासन्नाना शिशिराणा वाताना—वायूनाम्, आयनै -आगमनै, अलङ्कृत—भूषितम्। पुन **प्रौढवादिनमिव** निपुण वक्तारमिव विवादकर्तारमिव वा, **अतिविषमपत्रभङ्गविस्मायितप्रेक्षकजनम्** अतिविषमै -दुर्लेखनीयै, पत्रभङ्गै -पत्रवल्लीरचनाभि, पक्षे अतिविषमस्य-दुर्विजेयस्य, पत्रस्य-पत्रलिखितविचारस्य, भङ्गेन-भञ्जनेन खण्डनेनेति यावत्, विस्मायिता -आश्चर्यमनुभाविता, प्रेक्षकजना -दर्शकलोका येन तादृशम्। पुन **अनेकमाणिक्यखण्डखचितकाञ्चनशिलासंघातम्** अनेकेषा-नानाविधाना, माणिक्याना-रत्नाना, खण्डै खचित -व्याप्त, काञ्चनशिलासंघात -सुवर्णशिलासमूहो यस्मिंस्तादृशम् [ध]।

च पुन, **उपजातविस्मयः** उत्पन्नाश्चर्य, **विस्मृतनिमेषनिश्चलेन** विस्मृत -आश्चर्यव्यग्रतया स्मृतिपथादपगत, निमेष -स्पन्दो यस्य तादृशेन, अत एव निश्चलेन-स्थिरेण, **चक्षुषा** नेत्रेण, **तत्** आयतनं, **सुचिरं** दीर्घकालम्, **अवलोक्य** दृष्ट्वा, **मनसि** हृदि, **अकरवं** विचारितवानहम्, किमित्याह—"**फलाभिलाषिणा** फलेच्छुना, **पुरुषेण** जनेन, **एकान्ततः** नियमेन, **नीतिनिष्ठेन** नीत्यवलम्बिना, न **भवितव्य** भवितुमुचितम्, प्रत्युत **अभिमते** इष्टे, **वस्तुनि**, **दैवं** भाग्य, **प्रमाणीकृत्य** प्रमाणतयाऽऽस्थाय, **सर्वात्मना** सर्वतोभावेन, **प्रवर्तितव्यं** प्रवर्तितुमुचितम्, **अनुकूलविधिविहितसाहायकस्य** अनुकूलेन, विधिना—दैवेन, विहित—कृतं, साहायक—साहाय्य, यस्य तादृशस्य, **साहसिकस्य** साहसशालिजनस्य, **सर्वदा** सर्वकाले, **अनीतिः** अतिवृष्ट्यादिषड्विधेतिरहिता, **शस्यसम्पदिव** धान्यसमृद्धिरिव, **अनीतिरपि** नीतिविरुद्धकृतिरपि, **फलति** फल ददाति। **येन** यस्मात् कारणात्, **सकलबुधजनोपहासपात्रम्** अशेषविज्ञजनोपहासास्पदम्, **एषोऽपि** अयमपि, **यात्राविधिः** प्रयाणकार्यं, **मे** मम, **ईदृशस्य** एतादृशस्य, **निर्वृतिलाभस्य** सुखप्राप्ते, कारण, **संवृत्त** सम्पन्न, यदि अहम्, **अपायभीरुतया** विनाशभीरुतया, नीतिम्, **अनुसरन्** आश्रयन्, **एताम्** इमा, भूमिं न **आगमिष्यम्** आगतवानभविष्यम्, तर्हि **कथापथोत्तीर्णरूपगुणलुप्तसुरपतिविमानकमनीयताप्रवाद** कथापथोत्तीर्णै -वर्णनमार्गातिगामिभि, रूपगुणै -स्वरूपसौष्ठवै, लुप्त -निवारित, सुरपतिविमानस्य-इन्द्रसम्बन्धिव्योमयानस्य, कमनीयताया -सौन्दर्यस्य, प्रवादो येन तादृशम्, इद **प्रासादरत्न** प्रासादश्रेष्ठ, **कथं** केन प्रकारेण, **अद्रक्ष्यं** दृष्टवानभविष्यम् [न]। **अद्य** अस्मिन् दिने, **यदवलोकनेन** यद्दर्शनेन, **दृष्टेः** नेत्रस्य, **आह्लादकरपदार्थदर्शनकुतूहलम्** आनन्दजनकवस्तुदर्शनौत्सुक्य, **विनिवृत्तमिव** विध्वस्तमिव, पुन **कर्णयोः** श्रोत्रयो, **अद्भुतकथाकर्णनादर** आश्चर्यजनककथाश्रवणप्रीति, **उपरत इव** निवृत्त इव, पुन **प्रहर्षेण** प्रकृष्टहर्षवशेन, हृदयम्, **अन्त** अन्तर्देशे, **नृत्यतीव** नृत्य करोतीवेति सर्वत्रोत्प्रेक्षा। **जगति** लोके, **पुण्यभाज** ते पुण्यशालिन, सन्तीति शेष, **यै**, **राज्यमपि** लोकाधिपत्यमपि, परित्यज्य, प्रत्युत **पारिव्राज्यमपि** सन्यासमपि, गृहीत्वा, पुन **फलमूलमयम्** फलमूलात्मकम्, **आहारलेशमपि** भक्ष्यलवमपि, **भुक्त्वा** भक्षित्वा, पुन **दुस्सह** दुश्शक, **वनवासक्लेशमपि** वनवासदुःखमपि, **विषह्य** विशेषेण सोढ्वा,

पक्षिजातियोगमपि, कृतस्थितिभिरत्र कालः प्रेर्यते । वन्द्यवैभवः स कोऽपि भगवान् देवो वा दानवो वा येन सुकृतकर्मणा निर्मापितमिदम् । अस्य हि प्रारम्भसमये प्रवर्तितः प्रथममादरात् तेन संख्यातीतानां विश्वकर्मणां सर्गनिर्माणाय भगवान् प्रजापतिः, तदनु गत्वाऽलकापुरीमाबद्धवर्मणा रणपराजितस्य मनुष्यधर्मणः कृतं कात्स्न्र्येन कोशापहरणम्, अथ कदर्थितत्रयस्त्रिंशत्त्रिदशकोटिना समूल एवोत्पाटितः सुरशैल इति निश्चयो मे, नह्येकविश्वकर्मसमारब्धकर्मणा प्रकारान्तरोपार्जितधनेन स्थानादन्यतः समाहृतमणिशिलादारुणा कारयितुमतिभूयसापि कालेन कीर्तनमीदृशं शक्यम् । शङ्के चात्र निष्पाद्यमाने त्रिदिवशिल्पिनामभीक्ष्णमतितीक्ष्णकोटिभिष्टङ्किकाभिस्तक्ष्यमाणाभ्यः शिखरमणिशिलाभ्यः समन्ततः समुच्छलितानि यानि स्थूलशकलानि तैरेष लम्भितो रत्नाकराभिधानं लवणसिन्धुः [ प ] । इति चिन्तयत्येव मयि तत्कालसत्वरकैवर्तरभसप्रेरिता क्षणेनैव दक्षिणामायतनप्राकारभित्तिमाससाद नौः । आक्रम्य च क्रमेणातिरमणीयमस्याः पर्वतनितम्बसङ्गिनं पूर्वभागमवस्थितायां तत्र क्षणमात्रमविवाहिताध्वखेदो दिव्यदेवतायतनदर्शनप्रीतमनसमदृश्यमानुषप्रचारेषु मदमत्तविविधपक्षिकुलबद्धकोलाहलेषु नित्यविकचदेवद्रुमवनामोदवासितदिक्षु रत्नकूटाद्रिकटकदेशेष्वनुक्षण-

---

पुनः **बान्धवसुहृद्वियोगमपि** बन्धुमित्रविरहमपि, **अङ्गीकृत्य** स्वीकृत्य, पुनः **पक्षिजातियोगमपि** पक्षिजातीयैः सम्पर्कमपि, प्राप्य, **अत्र** अस्मिन् स्थाने, **कृतस्थितिभिः** कृतनिवासैः, **कालः**, **प्रेर्यते** व्यतीयते । **वन्द्यवैभवः** स्तुत्यैश्वर्यः, **कोऽपि** अविज्ञातनामा, **भगवान्** ऐश्वर्यशाली, **स देवो वा, दानवो वा** राक्षसो वा, अस्तीति शेषः, **सुकृतकर्मणा** पुण्यकर्मणा, **येन**, **इदम्** आयतनं, **निर्मापितं** कारितम् । **हि** यतः, **अस्य** आयतनस्य, **प्रारम्भसमये** प्रारम्भावसरे, **तेन** निर्मापकेण भगवता, **प्रथमं** पूर्वं, **संख्यातीतानाम्** असंख्यानां, **विश्वकर्मणां** शिल्पकुशलदेवानां, **सर्गनिर्माणाय** सृष्टिरचनार्थं, **भगवान्** सर्वैश्वर्यवान्, **प्रजापतिः** ब्रह्मा, **प्रवर्तितः** प्रेरितः; **तदनु** ततः पश्चात्, **अलकापुरीं** कुबेरसम्बन्धिनीमलकानाम्नीं पुरीं, **गत्वा**, **आबद्धवर्मणा** धृतकवचेन सता तेन, **रणपराजितस्य** रणे-युद्धे, पराजयं प्रापितस्य, **मनुष्यधर्मणः** कुबेरस्य, **कात्स्न्र्येन** साकल्येन, **कोशापहरणं** कोशलुण्ठनं कृतम्, **अथ** अनन्तरं, **कदर्थितत्रयस्त्रिंशत्त्रिदशकोटिना** कदर्थिताः-पराजिताः, त्रिदशानां-देवानां, त्रयस्त्रिंशत्-त्रयधिका त्रिंशत्, कोट्यो येन तादृशेन सता, **समूल एव** मूलसहित एव, **सुरशैलः** सुमेरुः, **उत्पाटितः** उत्खातः, **इति** अयं, **मे** मम, **निश्चयः** विश्वासः, वर्तत इति शेषः । **हि** यतः, **एकविश्वकर्मसमारब्धकर्मणा** एकेन, विश्वकर्मणा-शिल्पिदेवविशेषेण, समारब्धं-प्रवर्तितं, कर्म-निर्माणव्यापारो येन तादृशेन, पुनः **प्रकारान्तरोपार्जितधनेन** प्रकारान्तरेण-उपायान्तरेण साधारणप्रकारेण, उपार्जितं धनं येन तादृशेन, पुनः **अन्यतः** उपायान्तरात्, **स्थानात्**, **समाहृतमणिशिलादारुणा** समाहृताः-सञ्चिताः, मणिशिलाः-मणिरूपाः शिलाः, दारूणि-काष्ठानि च, येन तादृशेन, पुरुषेण, **अतिभूयसापि** अत्यधिकेनापि, **कालेन**, **ईदृशम्** एवंविधं, **कीर्तनं** मन्दिरं, **कारयितुं** निर्मापयितुं, **न शक्यं** साधयितुम् । **च** पुनः, **शङ्के** सम्भावयामि, **अत्र** अस्मिन् आयतने, **निष्पाद्यमाने** निर्मीयमाणे, **त्रिदिवशिल्पिनां** स्वर्गे शिल्पिनां, विश्वकर्मणामिति यावत्, **अतितीक्ष्णकोटिभिः** अत्यन्ततीक्ष्णाग्रभागाभिः, **टङ्किकाभिः** शिलातक्षणयन्त्रविशेषैः, **तक्ष्यमाणाभ्यः** तनूक्रियमाणाभ्यः, **शिखरमणिशिलाभ्यः** शिखरस्थितमणिशिलाखण्डेभ्यः, **समुच्छलितानि** समुत्पतितानि यानि **स्थूलशकलानि** स्थूलखण्डानि, तैः, **एष लवणसिन्धुः** लवणसमुद्रः, **रत्नाकराभिधानं** रत्नाकरेति सार्थकसंज्ञां, **लम्भितः** प्रापितः" [ प ] । मयि, **इति** इत्थं, **चिन्तयत्येव** आलोचयत्येव सति, **तत्कालसत्वरकैवर्तरभसप्रेरिता** तत्काले-तत्क्षणं, सत्वरेण-त्वरान्वितेन, कैवर्तेन-धीवरेण, रभसेन-वेगेन, प्रेरिता-प्रचालिता, **नौः**, **दक्षिणाम्**, **आयतनप्राकारभित्तिं** मन्दिरप्राकारकुड्यम्, **आससाद** आजगाम । **च** पुनः, **अस्याः** दक्षिणप्राकारभित्तेः, **अतिरमणीयम्** अत्यन्तसुन्दरम्, **पर्वतनितम्बसङ्गिनं** पर्वतमध्यभागसंलग्नं, **पूर्वभागं**, **क्रमेण**, **आक्रम्य** अधिष्ठाय, **अवस्थितायां**, **तत्र** नावि, **क्षणमात्रम्**, **अविवाहिताध्वखेदः** [illegible], **तारक** सार्थवाहकेतुना, **मनोरमम्** उपवनम्, **अहम्** । **आयतनदर्शनप्रीतमनसं** निष्क-

क्षिप्तविस्मयस्मेरलोचनं तारकमवोचम्—'सखे! तारक! लङ्घितो निर्विघ्नमेवास्माभिरेष जलनिधिशैलान्तरालवर्ती सर्वद्वीपसांयात्रिकाणाममार्गो मार्गः, समाक्रान्ता सुखेन दिव्यजनसंचारपूतेयं भूमिगोचराणामभूमिर्भूमिः, आसादितमिदं सर्वसुन्दरपदार्थानामधिष्ठानं स्थानम्, अवलोकितं लोकत्रयतिलकमेतत् सकलकौतुकानामायतनमायतनम्, सर्वथा पुण्यभाजो वयम्, जातं जन्म सफलम्, उत्तिष्ठ तूर्णम्, अनुतिष्ठ सांप्रतं कालोचितं कृत्यम्, उपसृत्य पर्वतनितम्बादितः समाहर प्रत्यग्रविकसितानि संतानकप्रभृतीनां पुण्यपादपानां कुसुमानि, पानीयं च निर्झरादानय स्वादु, येन संपादितपाणिपादशौचाः प्रविश्य पश्यामः पूजयामश्च भगवन्तमन्तः प्रतिष्ठितमस्य देवतायतनस्य देवम्। अत्र हि विलोकिते साक्षादभ्यर्चिते स्वहस्तेन स्तुते च परमया भक्त्या महार्थाभिः स्तुतिभिरेषा विशेषतो नः फलवती भविष्यति यात्रा' इति [ फ ]। स एवमुक्तो विहस्य मां प्रत्यभाषत—'कुमार! सर्वं संपाद्यते, किं [तु] पुनरिदं विज्ञापयामि, कथमिह प्रवेष्टव्यं, यत्तावदिदमवलोक्यते पुरस्तादस्य गोपुरप्रतिबद्धमम्बरोत्तम्भिना मणिस्तम्भतोरणेन तिरस्कृततरणिरथसंचारं द्वारम्, अनेन योऽवतारः

---

प्रासाददर्शनप्रसक्तहृदयम्, पुनः **रत्नकूटाद्रिकटकप्रदेशेषु** रत्नकूटाख्यपर्वतनितम्बप्रदेशेषु, **अनुक्षणक्षिप्तविस्मयस्मेरलोचनम्** अनुक्षणं–प्रतिक्षणं, क्षिप्ते–प्रेरिते, विस्मयस्मेरे–आश्चर्यविस्फारे, लोचने येन तादृशम्, कीदृशेषु तेषु? **अदृश्यमानुषप्रचारेषु** अदृश्यमनुष्यगमनागमनेषु, पुनः **मदमत्तविविधपक्षिकुलबद्धकोलाहलेषु** मदमत्तैः–मदान्वितैः, विविधपक्षिकुलैः–नानाविधपक्षिगणैः, बद्धः–निरन्तरं कृतः, कोलाहलो येषु तादृशेषु, पुनः **नित्यविकचदेवद्रुमवनामोदवासितदिक्षु** नित्यम्–अनवरतं, विकचाः–पुष्पिताः, ये देवद्रुमाः–देववृक्षाः, तद्वनसम्बन्धिना, आमोदेन–अत्युत्कृष्टसौरभेण, वासिताः–सुरभिताः, दिशो यैस्तादृशेषु। किमवोचदित्याह—**सखे!** मित्र!, तारक!, **जलनिधिशैलान्तरालवर्ती** समुद्रपर्वतमध्यवर्ती, **सर्वद्वीपसांयात्रिकाणां** सर्वेषां द्वीपमार्गेण पोतिकानाम्, **अमार्गः** अगम्यः, एष मार्गः, निर्विघ्नमेव, **लङ्घितः** अतिक्रान्तः। पुनः **दिव्यजनसञ्चारपूता** दिव्यानां–दिवि–स्वर्गे भवानां, जनानां, सञ्चारेण–प्रचारेण, पूता–पवित्रिता, **भूमिगोचराणां** भूतलवर्तिनाम्, **अभूमिः** संचाराविषयभूता, इयं, **भूमिः** पृथ्वी, **सुखेन** आनन्देन, **समाक्रान्ता** समधिष्ठिता। पुनः **सर्वसुन्दरपदार्थानाम्** अशेषमनोहरवस्तूनाम्, **अधिष्ठानं** क्षेत्रभूतम्, इदं स्थानं, **समासादितं** प्राप्तम्, पुनः **लोकत्रयतिलकं** त्रिभुवनश्रेष्ठं, **सकलकौतुकानाम्** अशेषोत्सवानाम्, अशेषाश्चर्याणां वा, **आयतनम्** आस्पदम्, एतत्, **आयतनं** प्रासादः, **अवलोकितं** दृष्टम्। वयं, **सर्वथा** सर्वप्रकारेण, **पुण्यभाजः** पुण्यवन्तः, स्म इति शेषः। **जन्म** अस्माकम् उत्पत्तिः, **सफलं** सार्थकं, **जातम्** अभूत्। **तूर्णं** शीघ्रम्, **उत्तिष्ठ** व्याप्रियस्व। **सांप्रतम्** अधुना, **कालोचितम्** एतत्कालयोग्यं, **कृत्यं** कार्यम्, **अनुतिष्ठ** कुरु। **इतः** अस्मात्, **पर्वतनितम्बात्** पर्वतमध्यभागात्, **अपसृत्य** बहिर्गत्वा, **प्रत्यग्रविकसितानि** अचिरविकसितानि, **सन्तानकप्रभृतीनां** सन्तानकादीनां, **पुण्यपादपानां** पुण्यवृक्षाणां, दिव्यवृक्षाणामिति यावत्, **कुसुमानि** पुष्पाणि, **समाहर** सञ्चिनु, **च** पुनः, **निर्झरात्** प्रवाहात्, **स्वादु** मिष्टं, **पानीयं** जलम्, आनय, **येन** पानीयेन, **सम्पादितपाणिपादशौचाः** कृतहस्तपादप्रक्षालनाः सन्तः, **प्रविश्य** प्रकृतायतनाभ्यन्तरं गत्वा, **भगवन्तम्** ऐश्वर्यशालिनम्, अस्य **देवतायतनस्य** देवमन्दिरस्य, **अन्तः प्रतिष्ठितं** मध्ये प्रतिष्ठितं, देवं, **पश्यामः** दृष्टिगोचरीकुर्मः, **च** पुनः, **पूजयामः** आराधयामः, **हि** यतः, **अत्र** अस्मिन् देवे, **साक्षात्** प्रत्यक्षरूपेण, **विलोकिते** दृष्टे सति, पुनः **स्वहस्तेन** निजकरेण, **अभ्यर्चिते** सम्यक् पूजिते सति, **च** पुनः, **परमया** उत्कृष्टया, **भक्त्या** प्रीत्या, **महार्थाभिः** उत्कृष्टार्थाभिः, **स्तुतिभिः** स्तोत्रैः, **स्तुते** सति, **एषा** इयं, **नः** अस्माकं, यात्रा, **विशेषतः** अत्यन्तं, **फलवती** सफला भविष्यति, इति [ फ ]। **एवम्** अनेन प्रकारेण, **उक्तः** कथितः, **सः** तारकः, **विहस्य** विशेषेण हसित्वा, **मां प्रत्यभाषत** प्रत्युक्तवान्, किमित्याह–कुमार! **सर्वं** भवदुपदिष्टं समस्तं कार्यं, **सम्पाद्यते** अनुष्ठीयते, **किं** किन्तु, **इदं** पुनः, **विज्ञापयामि** आवेदयामि, **इह** अस्मिन् आयतने, **कथं** केन प्रकारेण, **प्रवेष्टव्यं** प्रवेष्टुं शक्यम्, **अस्य** आयतनस्य, **पुरस्तात्** अग्रे, **गोपुरप्रतिबद्धं** पुरद्वाराश्रितम्, **अम्बरोत्तम्भिना**

स दूरमुभयतः प्रसृतेन टङ्कच्छिन्नपर्वतकटकसङ्गिना प्राकारेणैव वारितः, यानि त्वस्य पार्श्वतः संभवन्ति प्रतोलिकासु क्षुद्रद्वारकाणि तान्यपि नभस्तलनिर्विशेषभित्तेरस्यैव प्राकारस्य प्रकर्षप्राप्तेन स्वच्छतागुणेन दुरुपलक्ष्यतां नीतानि, तदेतदधुना प्राप्तकालम्—अत्रैव स्थिताः प्रतिपालयामः क्षणमात्रं, यावदस्माद् देवतायतनात् कोऽपि भूगोचरः खेचरो वा निर्याति, योऽस्मभ्यमस्मिन्नवतरणमार्गमुपदिशति, अस्य चावश्यमभ्यन्तरे केनापि भवितव्यम्, अचिरनिर्वृत्तयात्रोत्सवं हीदमुद्भाव्यते लिङ्गैः, तथाहि—अत्र तुङ्गत्वादधिकसंसृज्यमानसमीरणेष्वपि द्वारतोरणेषु सान्द्ररुचयश्चन्दनप्रवालवन्दनमालाः, प्रत्यग्ररचिताभिश्चीनांशुकपताकाभिः पल्लवितशिखराणि चामीकरचक्रदोलायन्त्राणि [ च ], गुणनिकाप्रासादस्य च पृष्ठवेदिकायामिन्द्रनीलमय्यामासादितप्रकटपरभागानि पिशुनयन्ति वारसुन्दरीवृन्दस्य रासविभ्रमभ्रमणमभिनवमम्लानयावकपङ्काङ्कानि पदमुद्रापरिपाटिमण्डलानि, सततमास्फालितानां च वादित्राणामारवेण विद्रावितानि त्रासात् समासन्नतरुशाखाशिखासु कृतस्थितीनि नाद्यापि निकटीभवन्ति शिखरप्रकोटरकुलायशायीनि पारावतपतत्रिकुलानि,

---

टिप्पनकम्—प्रकटपरभागानि प्रकाशितशोभानि । प्रततं विस्तीर्णं सन्ततं वा । कुलायः-पक्षिगृहम् । चङ्क्रूर्यमाणानि भृशं गच्छन्ति, व्यात्युक्षी परस्परसेचनम् [ भ ] ।

---

गगनमण्डलावरोधिना, मणिस्तम्भतोरणेन मणिमयस्तम्भावलम्बिबहिर्द्वारेण, तिरस्कृततरणिरथसञ्चारं तिरस्कृतः-निवारितः, तरणिरथसञ्चारः-सूर्यरथप्रचारो येन तादृशम्, यत् यतः, तावद् वाक्यालङ्कारे, इदं, द्वारं निश्चायतनप्रवेशनिर्गमस्थानम्, अवलोक्यते दृश्यते । अनेन द्वारेण, यः, अवतारः प्रवेशः, स दूरं दूरपर्यन्तम्, उभयतः भागद्वये, प्रसृतेन विस्तृतेन, टङ्कच्छिन्नपर्वतकटकसङ्गिना टङ्केन-तक्षणशलाकया, छिन्नं-नष्टं, यत् पर्वतकटकं-पर्वतनितम्बः, तत्सङ्गिना-तत्सदृशेन, प्राकारेणैव, वारितः अवरुद्धः । अस्य द्वारस्य, पार्श्वतः पार्श्वे, प्रतोलिकासु रथ्यासु, यानि तु क्षुद्रद्वारकाणि लघुद्वाराणि, सम्भवन्ति सम्भावनागोचरीभवन्ति, तान्यपि, नभस्तलनिर्विशेषभित्तेः गगनतलाविशेषकुड्यस्य, अस्यैव प्राकारस्य, प्रकर्षप्राप्तेन उत्कर्षमापन्नेन, स्वच्छतागुणेन उज्ज्वलतागुणेन, दुरुपलक्ष्यतां दुःखेनोपलक्षणीयतां, नीतानि प्रापितानि । तत् तस्माद्धेतोः, अधुना, एतत् इदमेव कार्यं, प्राप्तकालं प्राप्तावसरं, वर्तत इति शेषः, यत्, अत्रैव अस्मिन्नेव स्थाने, स्थिताः सन्तः, क्षणमात्रं, प्रतिपालयामः प्रतीक्षामहे, यावत् अस्मात् प्रत्यक्षभूतात्, देवतायतनाद् देवमन्दिरात्, कोऽपि, भूगोचरः भूमिवास्तव्यः, मानव इत्यर्थः, खेचरो वा देवो वा, निर्याति निर्गच्छति, यः, अस्मभ्यम्, अस्मिन् आयतने, अवतरणमार्गं प्रवेशमार्गम्, उपदिशति उपदेक्ष्यति, च पुनः, अस्य आयतनस्य, अभ्यन्तरे मध्ये, केनापि, अवश्यं निश्चितं, भवितव्यं भवितुं स्थातुमुचितम् । हि यतः, लिङ्गैः वक्ष्यमाणलक्षणैः, इदम् आयतनम्, अचिरनिर्वृत्तयात्रोत्सवम् अचिरं-शीघ्रमेव, निर्वृत्तः-सम्पन्नः, यात्रोत्सवः-लोकयात्राप्रयुक्त उत्सवो यस्मिंस्तादृशम्, उद्भाव्यते प्रकाश्यते । तथाहि-अत्र अस्मिन् आयतने, तुङ्गत्वात् उच्चत्वात्, अधिकसंसृज्यमानसमीरणेष्वपि अधिकं यथा स्यात् तथा, संसृज्यमानाः-सम्बध्यमानाः, समीरणाः-पवनो येषु तादृशेष्वपि, द्वारतोरणेषु द्वारदेशवर्तिबहिर्द्वारेषु, सान्द्ररुचयः अमन्दकान्तयः, चन्दनप्रवालवन्दनमालाः चन्दनपल्लवनिर्मितवन्दनमालाः; पुनः प्रत्यग्ररचिताभिः अभिनवनिर्मिताभिः, चीनांशुकपताकाभिः चीनदेशीयवस्त्रनिर्मितपताकाभिः, पल्लवितशिखराणि व्याप्तोर्ध्वदेशानि, चामीकरचक्रदोलायन्त्राणि सुवर्णमयचक्राकारदोलायन्त्राणि [ ▮ ] । च पुनः, गुणनिकाप्रासादस्य नृत्यगृहस्य, इन्द्रनीलमय्यां नीलमणिनिर्मितायां, पृष्ठवेदिकायां पृष्ठवेदिकायाम्, आसादितप्रकटपरभागानि प्राप्तस्फुटोत्कर्षाणि, अम्लानयावकपङ्काङ्कानि उज्ज्वलालक्तकद्रवचिह्नितानि, पदमुद्रापरिपाटिमण्डलानि चरणचिह्नश्रेणीमण्डलानि, वारसुन्दरीवृन्दस्य वेश्यागणस्य, अभिनवं नवीनं, रासविभ्रमभ्रमणं रासक्रीडाविलासभ्रमणं, पिशुनयन्ति सूचयन्ति । च पुनः, सततं निरन्तरं, आस्फालितानाम् आहतानां, वादित्राणां वाद्यानाम्, आरवेण शब्देन, विद्रावितानि अपसारितानि, पुनः त्रासात् भयहेतोः,

झङ्कारमुखरितमण्डपद्वारदेशानि च सूचयन्त्यवचूलकुसुमस्रजां प्राचुर्यमग्रतश्चञ्चूर्यमाणानि चञ्चरीकचक्रवालानि, क्रीडारसाक्षिप्तेन च कुर्वता व्यात्युक्षीमितस्ततः कनकशृङ्गैर्भुजङ्गलोकेन क्षिप्तमेतान्यपि क्षरन्ति विरलविरलैर्बिन्दुभिः कुङ्कुमारुणं केलिपुष्करिणीनां वारि प्राकारमूलमरकतप्रणालानि' [ भ ] । इति व्याहरत्येव तस्मिन्नकस्मादग्रतो दिगन्तसर्पी, तर्पयन्निव सुधारसस्रोतसा श्रुतिविवरमग्रचञ्चुनिश्चलधृतार्धोपभुक्तशैवालप्रवालैर्युगपदावलितकण्ठनालमाकर्णितः सोत्कण्ठैरायतनवापीकलहंसैः, सत्वरोपसृतवेलासरित्सारसरसितसम्भिन्नेन विस्तारितस्तारेण जघनपुलिनसारसीनां रसनानां शिञ्जितेन, दोलायमानभुजलतोल्लासितेन प्रचलीकृतः प्रतिवेलविघटमानसंनिवेशानां कनककङ्कणानां क्वणितेन, मेखलागुणस्खलनविशृङ्खलेन मुखरितो वल्गदुच्चकुचमण्डलान्दोलितानामायामिना मुक्ताहाराणां रणितेन, तारतरोच्चारेण गतिरभसविच्युतानामासाद्यासाद्य

---

टिप्पनकम्—**तारतरोच्चारेण** दीर्घतरोच्चारणेन । तल्लीन–कुशम् । सक्रम –मार्गः । स्त्रैणस्य स्त्रीसमूहस्य । **मसृणतारः** कोमलोच्चः [ म ] ।

---

**समासन्नतरुशाखाशिखासु** समीपवर्तिवृक्षविटपाग्रभागेषु, **कृतस्थितीनि** कृतनिवासानि, **शिखराग्रकोटरकुलायशायीनि** निरुकायतनशिखरदेशाग्रवर्तिरन्ध्रनिर्मितनीडाधिकरणकशयनशीलानि, **पारापतपतत्रिकुलानि** कपोतजातीयपक्षिगणा, **अद्यापि** अधुनापि, न **निकटीभवन्ति** निकटमुपसर्पन्ति । पुन **झङ्कारमुखरितमण्डपद्वारदेशानि** झङ्कारै –ध्वनिविशेषै , मुखरित –वाचालित , मण्डपस्य द्वारदेशो यैस्तादृशानि, **अग्रत** अग्रभागे, **चञ्चूर्यमाणानि** पुन पुनरतिशयेन वा भ्रमन्ति, **चञ्चरीकचक्रवालानि** भ्रमणमण्डलानि, **अवचूलकुसुमस्रजा** द्वारदेशाधोऽवनतपुष्पमालाना, **प्राचुर्यम्** आधिक्य, **सूचयन्ति** प्रख्यापयन्ति । **च** पुन , **क्रीडारसाक्षिप्तेन** क्रीडाकौतुकाकृष्टेन, **इतस्तत** अत्र तत्र, **व्यात्युक्षीम्** अन्योऽन्य सेचन, कुर्वता, **भुजङ्गलोकेन** विटजनेन, **कनकशृङ्गै** सुवर्णमयजलोत्क्षेपणयन्त्रै , **क्षिप्तं** प्रक्षीर्णं, **केलिपुष्करिणीनां** जलक्रीडार्थेनभूतसमचतुरस्रखातजलाशयाना, **कुङ्कुमारुण** कुङ्कुमरक्त, **वारि** जल, **प्राकारमूलमरकतप्रणालानि** प्राकाराधस्त्वनेन्द्रनीलमणिमयप्रणाल्य , **विरलविरलैः** विरलप्रकारकै , विच्छिन्नधारैरिति यावत्, **बिन्दुभिः** जलकणरूपै , **क्षरन्ति** स्यन्दयन्ति [ भ ] । **इति** इत्थ, **तस्मिन्** तारके, **व्याहरत्येव** कथयति सत्येव, **अकस्मात्** अतर्कितम्, **अग्रत** अग्रभागे, **मसृणतार** कोमलोच्च , **प्रतिक्षण** क्षणे क्षणे, **अधिगताधिकाधिकव्यक्तीना** प्राप्तात्यन्तप्राकट्याना, **नूपुराणा** पादभूषणाना, **झात्कारः** झणत्कार , **उच्चचार** उच्चरितवान्, कीदृश ? **दिगन्तसर्पी** दिगन्तविस्तारी । पुन **सुधारसस्रोतसा** अमृतरसप्रवाहेण, **श्रुतिविवर** कर्णकुहर, **तर्पयन्निव** प्रीणयन्निव, **अग्रचञ्चुनिश्चलधृतार्धोपभुक्तशैवालप्रवालै** अग्रचञ्चुना–चञ्च्वग्रभागेन, धृतानि–गृहीतानि, अर्धोपभुक्तानि–अर्धचर्वितानि, शैवालप्रवालानि–जलीयतृणनूतनपत्राणि यैस्तादृशै , **सोत्कण्ठैः** उत्सुकै , **आयतनवापीकलहंसैः** निरुक्तगृहदीर्घिकाकादम्बै , **युगपदावलितकण्ठनाल** युगपत्–एककालावच्छेदेन, आवलितम्–ईषद्वक्रितं, कण्ठनाल–ग्रीवाकाण्ड यस्मिंस्तादृश यथा स्यात् तथा, **आकर्णितः** श्रुत , पुन **सत्वरोपसृतवेलासरित्सारसरसितसम्भिन्नेन** सत्वरं–शीघ्रम्, उपसृतै –उपगतै , वेलासरित्सारसाना–तटवर्तिनदीसम्बन्धिना पक्षिविशेषाणा, रसितै –कूजितै , सम्भिन्नेन–सम्मिश्रणेन, **जघनपुलिनसारसीनां** कटिपुरोभागात्मकसैकतवर्तिसारसाख्यपक्षिणीरूपाणा, **रसनानां** काञ्चीनां, **तारेण** उच्चेन, **शिञ्जितेन** ध्वनिना, **विस्तारित** वर्धित । पुन **दोलायमानभुजलतोल्लासितेन** आन्दोल्यमानबाहुरूपलतोपजनितेन, **प्रतिवेलविघटमानसन्निवेशानां** प्रतिक्षणविश्लिष्यमाणसस्थानाना, **कनककङ्कणानां** सुवर्णमयकरभूषणाना, **क्वणितेन** झणत्कारेण, **प्रचलीकृत** प्रचुरीकृत । पुन **मेखलागुणस्खलनविशृङ्खलेन** काञ्चीरज्जुस्खलनत परिपाटीशून्येन, **वल्गदुच्चकुचमण्डलान्दोलिताना** वल्गता–उद्वेलता, उच्चकुचमण्डलेन–उन्नतस्तनमण्डलेन, आन्दोलितानां–कृतान्दोलनाना, **मुक्ताहाराणां** मुक्तामणिमालाना, **आयामिना** दीर्घेण, **रणितेन** ध्वनितेन, **मुखरित** वाचाल । पुन **गतिरभसविच्युतानां** गमनवेगस्खलितानाम्, पुन **सोपानमणिफलकम्** अधिरोहिणीमणिपट्टकम्, आसाद्य आसाद्य, **आवद्धफालानां** धृतोत्प्लुतीना, **सीमन्तकालङ्कारमाणिक्यानां** केशवेशालङ्करणरत्नाना, **जवावतरणजन्मना** जवेन–वेगेन, यत् अवतरणम्–अधस्तादागमन, तज्जन्मना–तज्जन्येन, **तारतरोच्चारेण** दीर्घतरोच्चारणेन, **स्वनसन्तानेन** ध्वनिसमूहेन,

सोपानमणिफलकमावद्धफलानां सीमन्तकालंकारमाणिक्यानां जवावतरणजन्मना स्वादूकृतः स्तनसंतानेन, तलिनताडिततन्त्रीध्वनिकलेन च वहुलितः विलोलकुसुमापीडहेलोत्पतितानां गुञ्जतां वियति वद्धमण्डलानामलिगणानां गुङ्कृतेन, प्रत्यासन्न एव प्राकारान्तरितदर्शनस्य प्रतिक्षणमधिगताधिकाधिकव्यक्तीनां मधुरगम्भीरेण चरणपातधमधमारवेण सवर्धितः सविधमागच्छतः सोपानसक्रमेण स्त्रैणस्य मसृणतारो नूपुराणामुच्चचार झात्कारः [ म ] ।

तदनुसारप्रहितलोचनश्च पुरः प्राकारशिखरे पुञ्जीभूताः, नातिदूरवर्तिनीः, अतिभास्वरतया कार्तस्वरपताका इव पातालादुद्यतो रविरथस्योल्लसिताः, विद्युत इवोदधिजलमवगाहमानैर्घनैरपघनेभ्यो विश्लेषिताः, दिव्यौषधीरिव मथनोत्थितस्य धन्वन्तरेर्विस्मृताः, कल्पलता इव पारिजातजन्मभूमिमवलोकयितुममरकाननादागताः, दीधितीरिवास्तसमये गभस्तिमालिनो विगलिताः, कुलिशार्चिष इव सपक्षपर्वतान्वेषणाय समुद्रमायाताः, कनककमलिनीमृणालिका इवानिर्वाणसुरवारणकवलदानार्थमिन्द्राधोरणैरुपसगृहीताः, समुद्रजलदेवता इव प्रभातमारुतोद्वेगादातपं सेवितुमुत्थिताः, हस्तदीपिका इव धनदाधिराजस्य, अवचूलरत्नमालिका इव नभस्तल-

टिप्पनकम्—अपघन-अङ्गम् । अनिर्वाण –मत्तः [ य ] ।

स्वादूकृत. धोत्रास्वाद्यतामापादित । च पुन , तलिनताडिततन्त्रीध्वनिकलेन तलिनं-स्तोकं यथा स्यात् तथा, ताडिता या तन्त्री -वीणागुणः , तस्या यो ध्वनिस्तेन, कलेन-मधुरेण, विलोलकुसुमापीडहेलोत्पतितानां विशेषेण लोल-चञ्चलं यत्, कुसुमापीड-पुष्पशिरोमाल्य, तस्मात् हेलया-लीलया, उत्पतितानाम्-उड्डीनानां, गुञ्जतां शब्दायमानानां, वियति आकाशे, वद्धमण्डलानां वद्धश्रेणीनाम्, अलिगणानां भ्रमरवृन्दानां, गुङ्कृतेन ध्वनिविशेषेण, वहुलित. वर्धित । पुन प्रत्यासन्न एव निकटस्थ एव, प्राकारान्तरितदर्शनस्य प्राकारावरुद्धदर्शनस्य, सोपानसक्रमेण सोपानमार्गेण, सविधं निकटम्, आगच्छत , स्त्रैणस्य स्त्रीसमूहस्य, मधुरगम्भीरेण मधुरसान्द्रेण, चरणपातधमधमारवेण पादप्रक्षेपणजनितध्वनिविशेषेण, सवर्धित. सम्यग्वर्धित [ म ] ।

च पुन , तदनुसारप्रहितलोचन. तदनुसारेण-तदनुसन्धानेन, व्यापारितनयन , पुर. अग्रे, झटिति शीघ्रं, कन्यका. कुमारिका , अद्राक्षं दृष्टवानहम्, कीदृशी ? प्राकारशिखरे प्राकारोपरि, पुञ्जीभूता. एकत्र । पुन नातिदूरवर्तिनीः किञ्चिन्निकटवर्तिनी । पुन अतिभास्वरतया अत्युज्ज्वलतया, पातालात्, उद्यत. उद्गच्छत , रविरथस्य सूर्यरथसम्बन्धिनी , उल्लसिता. उच्छ्रिता , कार्तस्वरपताका इव सुवर्णपताका इव । पुन उदधिजल समुद्रजलम्, अवगाहमाने. प्रविशद्भि , घनैः मेघै , अपघनेभ्यः स्वशरीरावयवेभ्य , विश्लेषिता. वियुक्ता , विद्युत इव तडित इव । पुन मथनोत्थितस्य सागरालोडनोद्भूतस्य, धन्वन्तरे वैद्यस्य, विस्मृता. स्मृतिपथच्युता , दिव्यौषधीरिव दिव्या –मनोहरा स्वर्गीया , ओषधीरिव । पुन पारिजातजन्मभूमि पारिजातस्य-उत्पत्तिस्थानस्य, [illegible] अवलोकयितुं द्रष्टुम्, अमरकाननात् नन्दनवनात्, आगता , कल्पलता इव । पुन अस्तसमये [illegible], गभस्तिमालिन. सूर्यस्य, विगलिता. भ्रष्टा , दीधितीरिव कान्तीरिव । पुन सपक्षपर्वतान्वेषणाय पक्षसहित[illegible], समुद्रम्, आयाता. आगता , कुलिशार्चिष इव वज्राग्निज्वाला इव । पुन अनिर्वाणसुरवारणकवलदानार्थम् [illegible], कवलदानार्थं-ग्रासप्रदानार्थम्, इन्द्राधोरणैः इन्द्रहस्तिपकैः, उपसगृहीताः सञ्चिता , कनककमलिनीमृणालिका इव [illegible] इव । पुन प्रभातमारुतोद्वेगात् [illegible], आतपं सूर्यप्रकाशं, सेवितुम्, उत्थिता ऊर्ध्वमागता , समुद्रजलदेवता इव [illegible] इव । पुन. धनदाधिराजस्य कुबेरस्य , हस्तदीपिका इव [illegible] । पुन नभस्तलवितानकस्य [illegible], अवचूलरत्नमालिका इव [illegible] इव । [illegible] , [illegible] –

वितानकस्य, काश्चित् सुवर्णचम्पककलिकासवर्णाः [ य ], काश्चिदसितोत्पलदलश्यामावदातत्विषः कस्तूरिकातिलककलङ्कितैराननेन्दुभिः शतचन्द्रमिव गगनतलमादधानाः, विकासिभिर्नयनविक्षेपैरुच्छलच्छफरसहस्रानिव सागरोद्देशानुपदर्शयन्तीः, आशामुखव्यापिना मुखामोदेन प्रवृत्तामृतमथनमिव तं प्रदेशमादधानाः, विलेपनपरिमलेनान्यमिव पारिजातोद्गममातन्वतीः, आभोगशालिभिः पयोधरोत्सेधैः पर्वतमयमपरमिव सेतुमासूत्रयन्तीः, विभ्रमावलोकितैरुदधिमिव मर्यादालङ्घनमध्यापयन्तीः, भ्रूविभ्रमैर्मन्मथमिव धनुर्वेदं शिक्षयन्तीः, अखिलजगदाक्षेपकारिरूपाः कन्यका झगित्यद्राक्षम् [ र ]। तासां च मध्ये शब्दविद्यामिव विद्यानाम्, कौशिकीमिव रसवृत्तीनाम्, उपजातिमिव छन्दोजातीनाम्, जातिमिवालङ्कृतीनाम्, वैदर्भीमिव रीतीनाम्, प्रसत्तिमिव काव्यगुणसंपदाम्, पञ्चमश्रुतिमिव गीतीनाम्, रसोक्तिमिव भणितीनाम्, अधिकमुद्भासमानाम्, अवहुदिवसोपारूढयौवनामूर्धस्थिताम्, आसन्नवेत्रधारीस्कन्धविन्यस्तवामहस्तकिसलयाम्, उभयतः सलीलमुद्धूयमानचामरकलापाम्, अवलम्ब्यमानस्थूलमुक्ताफलावचूलेन जलधिफेनपटलेनेव परस्परानुलग्नविगलज्जलबिन्दुना गगनमुत्पतितेन श्वेतातपत्रेण वारितातपाम्, अशोकतरुपल्लवताम्रतलस्य चरणपङ्कजयुगलस्य

---

तत्कोरकस्य, समानवर्णा –तुल्यवर्णा, एवंविधा, **काश्चित्** कतिपया [ य ]। पुन **असितोत्पलदलश्यामावदातत्विषः** असित–कृष्ण, यत् उत्पल–कमल, तद्दलस्येव–तत्पत्रस्येव, श्यामा–कृष्णा, अवदाता–उज्ज्वला च, त्विट्–कान्तिर्यासा तादृशी, **काश्चित्** कतिचित् तु, **कस्तूरिकातिलककलङ्कितै.** मृगनाभिस्निग्धचूर्णतिलकलाञ्छितै, **आननेन्दुभिः** मुखचन्द्रै, **गगनतलम्** आकाशमण्डल, **शतचन्द्रमिव** शतसंख्यकचन्द्रोद्भासितमिव, **आदधाना.** जनयन्ती, **विकासिभिः** विस्तारिभि, **नयनविक्षेपै.** नेत्रविस्फारणै, उन्मीलितनेत्रैरिति यावत्, **सागरोद्देशान्** समुद्रोर्ध्वदेशान्, **उच्छलच्छफरसहस्रानिव** उच्छलत्–उत्सर्पत्, शफराणां–मत्स्यविशेषाणा, सहस्रं येषु तादृशानिव, **उपदर्शयन्ती.** प्रत्याययन्ती। पुन **आशामुखव्यापिना** दिगन्तविस्तारिणा, **मुखाऽऽमोदेन** मुखोत्कटसौरभेण, तं समुद्रसम्बन्धिन, प्रदेश, **प्रवृत्तामृतमथनमिव** प्रारब्धामृतमन्थनमिव, **आदधाना.** आपादयन्ती। पुन **विलेपनपरिमलेन** अङ्गोपलेपनद्रवसौरभेण, **अन्यम्** अभिनव, **पारिजातोद्गममिव** पारिजातवृक्षाङ्कुरमिव, **आतन्वती.** विस्तारयन्ती सूचयन्तीरिति यावत्। पुन **आभोगशालिभि.** विस्तारशालिभि, **पयोधरोत्सेधै** स्तनोन्नतिभि, **पर्वतमय** पर्वतात्मकम्, **अपरम्** अन्य, **सेतुमिव** समुद्रबन्धमिव, **आसूत्रयन्ती.** आबध्नती। पुन **विभ्रमावलोकितै.** सविलासविलोकनै, **उदधिं** समुद्र, **मर्यादालङ्घनमिव** स्वमर्यादातिक्रममिव, **अध्यापयन्ती.** शिक्षयन्ती। पुन **भ्रूविभ्रमै** भ्रूविलासै, **मन्मथं** कामदेव, **धनुर्वेदमिव** धनुर्विद्यामिव, शिक्षयन्ती। पुन **अखिलजगदाक्षेपकारिरूपाः** समस्तजगत्तिरस्कारिस्वरूपा [ र ]।

**च** पुन, **तासा** कन्यकाना, मध्ये, **द्विरष्टवर्षवयसम्** द्विगुणिताष्टवर्षवयस्का, षोडशवर्षवयस्कामित्यर्थ, **दिव्यरूपा** मनोहराकारा, **कन्यका** कुमारिकाम्, **अद्राक्ष** दृष्टवानहम्, कीदृशीम्? **विद्याना** चतुर्दशविद्याना, मध्ये, **शब्दविद्यामिव** व्याकरणविद्यामिव, पुन **रसवृत्तीना** 'भारती सात्वती चैव, कौशिक्यारभटी तथा। चतस्रो वृत्तयश्चैता, यासु नाट्य प्रतिष्ठितम्"। इति भरतोक्तनाट्यरसरीतीना, मध्ये **कौशिकीमिव** कौशिकी रीतिमिव, पुन **छन्दोजातीना** छन्द सामान्यमध्ये, **उपजातिमिव** तत्संज्ञक छन्दोविशेषमिव, पुन **अलङ्कृतीनाम्** अलङ्काराणा मध्ये, **जातिमिव** जातिनामालङ्कारमिव, पुन **रीतीना** गौडीपाञ्चालीवैदर्भीरूपाणा श्रव्यकाव्यसम्बन्धिसङ्घटनाना मध्ये, **वैदर्भीमिव** तदाख्योत्तमरीतिमिव, पुन **काव्यगुणसम्पदा** काव्यसम्बन्धिगुणसम्पत्तीना मध्ये, **प्रसत्तिमिव** प्रसादरूपोत्तमगुणमिव, पुन **गीतीना** स्वराणा मध्ये, **पञ्चमश्रुतिमिव** पञ्चमाख्यस्वरविशेषमिव, पुन **भणतीना** वाचा मध्ये, **रसोक्तिमिव** रसविशिष्टवाचमिव, **अधिकम्** अत्यन्तम्, **उद्भासमानाम्** उज्ज्वलन्तीम्। पुन **अवहुदिवसोपारूढयौवनामूर्धस्थिता** अचिरोत्पन्नयौवनानां–नवयौवनानामित्यर्थ, मूर्धनि–सर्वत उपरि निषण्णाम्। पुन **आसन्नवेत्रधारीस्कन्धविन्यस्तवामहस्तकिसलयाम्** आसन्नाया –पार्श्वस्थिताया, वेत्रधार्या –चेट्या, परिचारिकाया इति यावत्, स्कन्धे विन्यस्त–स्थापित, वामहस्तरूप किसलय–पल्लव यया तादृशीम्। पुन **उभयत** पार्श्वद्वये, **सलील** सक्रीड यथा स्यात् तथा, **उद्धूयमानचामरकलापाम्** उद्धूयमान –वीज्यमान, चामरकलाप –चामरगणो यस्यास्तादृशीम्। पुन **श्वेतातपत्रेण** श्वेतच्छत्रेण, **वारितातपा** वारित –

विलासचलनेषु सर्वतः प्रसरतातिसंनिहितमुखरमणिनूपुरस्वनेन प्रभासंतानेन श्रूयमाणराजहंसरवमाकाशकमलिनीवनमिवोद्विकासमुपदर्शयन्तीम् [ल], अङ्गुलिप्रणयिपद्मरागोर्मिकारागसंवर्धितप्रभासमृद्धिभिः समन्ततः प्रसरन्तीभिरभिनवातपताम्राभिरङ्घ्रिनखमयूखलेखासंततिभिर्दाशरथिशरकृशानुकर्शितत्विषामुदधिविद्रुमलतावनानामुज्जीवनाय कुङ्कुमरसवारिकुल्यासहस्राणीव प्रवर्तयन्तीम्, अच्छकुङ्कुमरसपिञ्जरेण मसृणमाणिक्यवलयश्रेणिना जङ्घाकाण्डयुगलेन गिरितटाघातकुण्ठितमणिप्रतिममनङ्गकरिकलभदन्तद्वितयमाक्षिपन्तीम्, उभयथापि परिमण्डलोरुणा द्विधापि निबिडकक्षाबन्धबन्धुरेण नितम्बिना जघनबिम्बेन प्रयत्ननिवसितमप्यदृश्यत्वाद्विद्यमानकल्पं कल्पपादपांशुकं कलयन्तीम् [व], आच्छादितोदरवलित्रयस्य हसितहारीतपक्षहरितत्विषः कञ्चुका-

---

टिप्पनकम्—ऊर्मिका-मुद्रिका। कुल्या-सारणि। उभयथापि परिमण्डलोरुणा द्वाभ्यां प्रकाराभ्याम्, परिमण्डलोरुणा-वृत्तबृहज्जङ्घेन वृत्तविस्तीर्णेन च। द्विधापि निचितकक्षाबन्धबन्धुरेण घनकाञ्चीबन्धचारुणा निबिडपुरककक्षाबन्धमनोज्ञेन च। नितम्बिना प्रशस्तपश्चात्कटीभागेन [व]।

---

अवरुद्ध, आतपो यस्मात्तादृशीम्, कीदृशेन? अवलम्बमानस्थूलमुक्ताफलावचूलेन अवलम्बमान-अवनमत्, स्थूलमुक्ताफलाना-स्थूलमुक्तामणीनाम्, अवचूल-प्रान्तविलम्बिजालको यस्मिंस्तेन, केनेव?, परस्परानुलग्नविगलज्जलबिन्दुना परस्परानुलग्ना-परस्परसंश्लिष्टा, विगलन्त-क्षरन्त, जलबिन्दव-पानीयकणा यत्र तादृशेन, गगनम् आकाशम्, उत्पतितेन उड्डीनेन, जलधिफेनपटलेनेव समुद्रफेनपुञ्जेनेत्युत्प्रेक्षा। पुन अशोकतरुपल्लवाताम्रतलस्य अशोकवृक्षपल्लववत्, आताम्रम्-आरक्त, तलम् अध प्रदेशो यस्य तादृशस्य, चरणपङ्कजयुगलस्य पादपद्मद्वयस्य, विलासचलनेषु सविलासविक्षेपेषु, सर्वत· परित, प्रसरता व्याप्नुवता, पुन अतिसंनिहितमणिनूपुरस्वनेन अतिसंनिहित-अतिनिकट, मणिनूपुरस्वन-मणिमयनूपुरध्वनिर्यस्य तादृशेन, प्रभासन्तानेन द्युतिराशिना, श्रूयमाणराजहंसरवं श्रूयमाण, राजहंसरव-राजहंसशब्दो यस्मिंस्तादृशम्, आकाशकमलिनीवनम् आकाशस्थकमलिनीगहनम्, उद्विकासमिव उत्-उत्कृष्टो विकासो यस्य तादृशमिव, उपदर्शयन्तीं दृष्टिगोचरतां नयन्तीम् [ल]। पुन अङ्घ्रिनखमयूखलेखासन्ततिभिः पादसम्बन्धिनखकिरणपङ्क्तिसमूहै, कुङ्कुमरसवारिकुल्यासहस्राणीव कुङ्कुमरसरूप यद्वारि-जलं, तत्कुल्याना-तत्प्रणालिकानां, सहस्राणीव प्रवर्तयन्तीं प्रवाहयन्तीम्, कीदृशीभिस्तत्सन्ततिभि? अङ्गुलिप्रणयिपद्मरागोर्मिकारागसंवर्धितप्रभासमृद्धिभिः अङ्गुलिप्रणयिन्या-अङ्गुलिसङ्गिन्या, पद्मरागोर्मिकाया-पद्मरागमणिमयाङ्गुलीयकस्य, रागेण-रक्ततया, संवर्धिता-सम्यग्वर्धिता, प्रभासमृद्धि-द्युतिसम्पत्तिर्यासां तादृशीभि, पुन· समन्ततः परित, प्रसरन्तीभि· स्फुरन्तीभि, पुन अभिनवातपताम्राभि· बालातपवद् रक्ताभि, कस्मै प्रवर्तयन्तीम्? दाशरथिशरकृशानुकर्शितत्विषां दाशरथे-रामस्य, शरकृशानुना-बाणाग्निना, कर्शिता-कृशतामापादिता, त्विट्-कान्तिर्येषां तादृशानाम्, उदधिविद्रुमलतावनानां समुद्रसम्बन्धिप्रवाललतागहनानाम्, उज्जीवनाय। पुन अच्छकुङ्कुमरसपिञ्जरेण स्वच्छकुङ्कुमद्रववत् पीतवर्णेन मसृणमाणिक्यवलयश्रेणिना मसृणा-स्निग्धा, माणिक्यवलयश्रेणि-रत्नवलयपङ्क्तिर्यस्मिंस्तादृशेन, जङ्घाकाण्डयुगलेन जङ्घाकाण्डद्वयेन, गिरितटाघातकुण्ठितमणिप्रतिमं गिरितटाघातेन-पर्वतप्रदेशाघातेन, कुण्ठता-प्रतिहता, मणिप्रतिमा-मणिनिर्मितो गजदन्तवप्रो यस्य तादृशम्, अनङ्गकरिकलभदन्तद्वितयं कामदेवहस्तिशावकदन्तद्वयम्, आक्षिपन्तीं निन्दन्तीम्। पुन उभयथापि उभयप्रकारेण परिमण्डलोरुणा, परिमण्डलोरुणा परिमण्डलौ-वर्तुलौ, ऊरू-जानूपरिभागौ यस्य तादृशेन, परिमण्डल-वर्तुलम्, उरु बृहत्, तादृशेन च, पुन द्विधापि प्रकारद्वयेनापि, भागद्वयेऽपीत्यर्थ, निबिडकक्षाबन्धबन्धुरेण ... च, नितम्बिना प्रशस्तकटिपश्चाद्भागसंबन्धशालिना, जघनबिम्बेन कटिपुरोभागमण्डलेन, प्रयत्ननिवसितमपि प्रयत्नपरिहितमपि, कल्पपादपांशुकं कल्पवृक्षवस्त्रम्, अदृश्यत्वात्, अविद्यमानकल्पम् अविद्यमानतुल्यं, कलयन्तीं धारयन्तीम् [व]। पुनः आच्छादितोदरवलित्रयस्य आच्छादितम्, उदरगम्भीरवलित्रयं-रेखात्रयं येन तादृशस्य,

प्रपल्लवस्य चञ्चलतया प्रतिक्षणमवेक्ष्यमाणविपुलनाभिमण्डलां प्रसृततनुतरङ्गपर्यायोत्क्षिप्तपद्मिनीदलोपलक्ष्यमाणसुकुमारावर्तामिवोद्याननदिकाम्, अनन्यजनिवासवेश्मनो जघनमण्डलस्योपरि परिस्फुरन्तीमायतारुणां नाभिचक्रचुम्बिनो हारनायकस्यांशुलेखां विभ्रमपताकामिव रोमराजिमरकतदण्डिकाशिखरलग्नामुद्वहन्तीम् [श], मेरुमत्सरिणा दूरदर्शिताभोगसंक्षोभितसुरासुरेण विन्ध्यगिरिणेव प्रतिदिनं प्रवर्धमानेन स्तनभरेण निरुध्यमानवदनचन्द्रालोकाम, अचिरावतीर्णेन निर्भरमदभृता यौवनवनगजेनेव दूरविक्षिप्तस्य लावण्यपयसो वीचिवलयैरिव सबुद्बुदैरविरलप्रत्युप्तवज्रोपलगणैः कनककङ्कणैरधिष्ठितकोमलप्रकोष्ठकन्दलाम् [ ष ], सुदर्शनोपेतेन वैकुण्ठेनेव कण्ठनालेन तुलितशङ्खाम्, प्रकटिताद्भ्रविभ्रमेण प्रथमयौवनावतारमरुता तरलितायतापाङ्गतरङ्गयोरन्तस्तरचारुतारकयोः क्षीरधवलयोरीक्षणमहानदीप्रवाहयोर्जलतुषारजालकमिवोच्छलितमच्छमुक्ताफलस्तम्भमुभय-

---

टिप्पनकम्—सुकुमार -चारु । अनन्यज -काम [श]। सुदर्शनोपेतेन वैकुण्ठेनेव कण्ठनालेन तुलितशङ्खाम् एकत्र चक्रोपेतेन, अन्यत्र शोभनदर्शनयुक्तेन, तुलितशङ्खाम्-अनुकृतशङ्खाम् [ ष ]।

---

पुन **हसितहारीतपक्षहरितिम्न**· हसित -तिरस्कृत , हारीतस्य-पक्षिविशेषस्य, पक्षस्य पक्षसम्बन्धी हरितिमा-हरितवर्णो येन तादृशस्य, **कञ्चुकाम्रपल्लवस्य** चोलकाख्यलरूपपल्लवस्य, चञ्चलतया, प्रतिक्षणम्, **अवेक्ष्यमाणनाभिमण्डलाम्** अवेक्ष्यमाण-दृश्यमान, नाभिमण्डल यस्यास्तादृशीम्, अत एव **प्रसृततनुतरङ्गपर्यायोत्क्षिप्तपद्मिनीदलोपलक्ष्यमाणसुकुमारावर्ता** प्रसृतेन-चञ्चलितेन, तनुतरङ्गपर्यायेण-अनुद्धततरङ्गक्रमेण, उत्क्षिप्ते उद्वेलिते , पद्मिनीदले -कमलिनीपत्रे , उपलक्ष्यमाण -दृश्यमान , सुकुमार -चारु , आवर्त -जलभ्रमो यस्यास्तादृशीम्, **उद्याननदिकामिव** क्रीडाकानननदीमिव। पुन **अनन्यजनिवासवेश्मन**· अनन्यजस्य-स्वयमेवोत्पादिन कामदेवस्येत्यर्थ , निवासवेश्मन -निवासगृहरूपस्य, जघनमण्डलस्य, उपरि **स्फुरन्तीम्** उल्लसन्तीम्, पुन **आयतारुणाम्** आयता विस्तृताम्, अरुणा-रक्ता च, **नाभिचक्रचुम्बिनः** नाभिमण्डलस्पर्शिन , **हारनायकस्य** हारमध्यवर्तिमणे , **अंशुमाला** किरणश्रेणीं, **उद्वहन्तीं** धारयन्तीम्, कीदृशीमिव **रोमराजिमरकतदण्डिकाशिखरलग्ना** रोमराजिरूपा-रोमावलीरूपा, या मरकतदण्डिका-इन्द्रनीलमणिस्तम्भ , तच्छिखरलग्ना-तदुपरिस्थिता, **विभ्रमपताकामिव** विलासवैजयन्तीमिव [ श ]। पुन **मेरुमत्सरिणा** सुमेरुस्पर्धिना, पुन **दूरदर्शिताभोगसंक्षोभितसुरासुरेण** दूरदर्शितेन-दूरादेव दृष्टिगोचरता नीतेन, आभोगेन-विस्तारेणसंक्षोभितौ-सम्भ्रमितौ, सुरासुरौ-देवदानवौ येन तादृशेन, पुन **विन्ध्यगिरिणेव** विन्ध्याचलेनेव, **प्रतिदिनं** दिने दिने, **प्रवर्धमानेन** अतिवृद्धिमापद्यमानेन, **स्तनभरेण** स्तनभारेण, **निरुध्यमानवदनचन्द्रालोका** निरुध्यमान -निवार्यमाण , वदनचन्द्रस्य-मुखरूपचन्द्रस्य, आलोक -प्रकाशो यस्यास्तादृशीम्। पुन **अचिरावतीर्णेन** अचिर शीघ्रमेव, अवतीर्णेन-प्रविष्टेन, **निर्भरमदभृता** अत्यन्तमदशालिना, **यौवनवनगजेनेव** तारुण्यरूपवनहस्तिनेव, **दूरविक्षिप्तस्य** दूरमुत्पातितस्य, **लावण्यपयस**· सौन्दर्यजलस्य, **सबुद्बुदै**· विकृतबिन्दुविशिष्टै , **वीचिवलयैरिव** तरङ्गसन्तानैरिवेत्युत्प्रेक्षा **अविरलप्रत्युप्तवज्रोपलगणै**· अविरल-निरन्तरं यथा स्यात् तथा, प्रत्युप्त -सन्निवेशित वज्रोपलगण -हीरकमणिगणो येषु तादृशै , **कनककङ्कणै**· सुवर्णवलयै , **अधिष्ठितकोमलप्रकोष्ठकन्दलाम्** अधिष्ठित-व्याप्त, कोमलयो प्रकोष्ठयो -मणिबन्धयो , कन्दल मूल यस्यास्तादृशीम् [ ष ]। पुन **वैकुण्ठेनेव** विष्णुनेव, **सुदर्शनोपेतेन** सुन्दरदर्शनेन, पक्षे सुदर्शनाख्यचक्रवता, **कण्ठनालेन** कण्ठकाण्डेन, **तुलितशङ्खाम्** उपमितशङ्खाम्, पक्षे धृतशङ्खाम्। पुन **प्रकटिताद्भ्रविभ्रमेण** आविष्कृतबहुविलासेन, **प्रथमयौवनावतारमरुता** प्रथमयौवनप्रवेशपवनेन, **तरलितायतापाङ्गतरङ्गयो**· तरलितौ चञ्चलितौ, आयतौ दीर्घौ, अपाङ्गावेव नेत्रप्रान्तभागावेव, तरङ्गौ ययोस्तादृशयो पक्षे तरलितापाङ्गवत् कल्लोला ययोस्तादृशयो , पुन **अन्तस्तरचारुतारकयो**· अन्त -मध्ये, तरलौ-प्लवमाने, चारुतारके-सुन्दरकनीनिके, पक्षे चारु-सुन्दरं, तारम्-उज्वल, क-जल ययोस्तादृशयो , **क्षीरधवलयो**· दुग्धवत् स्वच्छयो , पक्षे क्षीरेण-जलेन, शुभ्रयो , **ईक्षणमहानदीप्रवाहयो**· नयनगङ्गाप्रवाहयो , **उच्छलितम्** उत्पतित, **जलतुषारजालकमिव** जलनिर्मितहिमगवाक्षमिव **उभयश्रवण**-

श्रवणशिरसावलम्बिनं बिभ्राणाम् [ स ], अविरलावदातदन्तकुड्मलममलगण्डफलकमनिलविलुलितविनीलालकालिकमनीयमनिभृतभ्रूलताविलासमुन्नतनासावंशमभिनवप्रवालपाटलाधरमुत्कलितकालागुरुतिलकशोभमाबद्धनिबिडपुष्पापीडमाक्रीडमिव रतिपतेरुभयकर्णपाशदोलायमानमाणिक्यदन्तपत्रं वदनशतपत्रमुद्वहन्तीम्, उदधिनापि तरङ्गचलिततनुशीकरक्षोदजालकेन करविधूतश्वेतचामरेणेवोपवीज्यमानाम्, प्रत्युपसापि गगनमरकतस्थालनिहितदिनकरप्रदीपेन प्रस्तुतारात्रिकेणेव कृतोपस्थानाम्, दिगन्तैरपि दूरमुल्लसितैः साभिलाषैरिव

---

तरलितायतापाङ्गतरङ्गयोः अन्तस्तरच्चारुतारकयोः क्षीरधवलयोः [ ईक्षणमहानदीप्रवाहयोः ] ईक्षणे-नेत्रे एव महानदीप्रवाहौ तयोः, कीदृशोः? तरलितायतापाङ्गतरङ्गयोः-चञ्चलीकृतौ दीर्घनेत्रत्रिभागावेव तरङ्गौ ययोस्तौ तयोक्तौ तयोः, अन्यत्र तरलितापाङ्गवत् कल्लोला ययोस्तौ तथोक्तौ तयोः, तथा अन्तस्तरच्चारुतारकयोः-एकत्र मध्यचञ्चच्छोभनतारिकयोः, अन्यत्रमध्यतरन्मनोज्ञोज्ज्वलजलयोः, क्षीरधवलयोः समानविशेषणम् [ स ]। अविरलावदातदन्तकुड्मलं दन्ता एव दन्तवच्च कुड्मलानि-अविकसितकुसुमानि यत्र तत् तथोक्तम्। अमलगण्डफलकम् एकत्र निर्मलप्रशस्तकपोलम्, अन्यत्र निर्मलकपोलवत् फलानि यत्र तत् तथोक्तम्। अनिलविलुलितनीलालकालिकमनीयं वातचलितकृष्णकुटिलकेशा एव अलयः-भ्रमराः, तैरेकत्र, अन्यत्र अलकवद् ये भ्रमराः, तैः कान्तम्। अनिभृतभ्रूलताविलासं चञ्चलभ्रूविब्बोकम्, चञ्चलभ्रूलतावद् वीनां-पक्षिणां, लासः-लसनं यत्र तत् तथोक्तम्। उन्नतनासावंशाम् उच्चप्रशस्तनासिकम्, उन्नतवंशं च। अभिनवप्रवालपाटलाधरं नूतनपल्लववद् रक्तोऽधरो यत्र तत् तथोक्तम्, अन्यत्र प्रवाला एव रक्ताधरो यत्र यत्र तत् तथोक्तम्। [ उत्कलितकालागुरुतिलकशोभं ] उत्कलितकालागुरुविशेषकविभूषम्, अन्यत्र उत्कलितकालागुरुतिलकवृक्षशोभम्। आबद्धनिबिडपुष्पापीडम् एकत्र रचितगाढकुसुमसंघात [......म्, आ ] क्रीडमिव क्रीडापर्वतमिव [ ह ] ॥

---

ोप्यमाणपटुविलेपनामोदाम् [ ह ], वेलावनतरुभिरपि विबुद्धशकुनिकृतकोलाहलैरुद्भूतमदनोन्मादैरिव परि-
ाम्, अन्तरिक्षेणापि गलदवश्यायबिन्दुना बद्धस्मरस्वेदेनेवोत्सङ्गिताम्, निशान्तमरुताप्याकृष्टकमल-
प्रचयेन रोमाञ्चिताङ्गेनेवालिङ्गिताम्, मदशक्तिमिव मन्दरान्दोलनात् पलायितां मदिरायाः, निष्यन्दधारा-
व मुष्टिनिपीडनाद् विगलितामनङ्गेक्षुचापयष्टेः, 'द्विरष्टवर्षवयसं दिव्यरूपां कन्यकामद्राक्षम् [ क्ष ]। इति
थारसाक्षिप्तचेतसि स्ववृत्तान्तमावेदयति समरकेतौ निश्चलपक्ष्मलेखे लिखित इव पश्यति तदीयमुखमभि-
मुखप्रहितदृशि सभ्यलोके श्लथीकृतान्तरकथेष्वाकर्णयत्सु सकुतूहलमन्तरान्तराविस्तारितहर्षकोलाहलेषु कमल-
गुप्तप्रभृतिषु प्रधानराजपुत्रेषु प्रचलितशिरसि सप्रपञ्चमाकर्णयति सरसतां कथापञ्जरस्य मञ्जीरमुख्ये वन्दिवृन्दे
सहसैव हर्षोत्फुल्ललोचना प्रविश्य प्रतीहारी हरिवाहनं व्यजिज्ञपत्—'कुमार ! युवराजवार्ताद्भुतश्रवणेन पीत-
मतिचिरं कर्णामृतम्, इदानीमीक्षणामृतं क्षणमेकमास्वाद्यताम् !' इत्युदीर्य दूरावनतपूर्वकाया दक्षिणेन करेणा-
दाय सादरमुपरितनवसनपल्लवप्रान्तसंयतं दिव्यं चित्रपटमुपनिन्ये [ ज्ञ ] ॥

---

**प्रत्युषसापि** प्रभातेनापि, **गगनमरकतस्थालनिहितदिनकरप्रदीपेन** गगनरूपम्–आकाशरूपं, यत् मरकतस्थालम्–
इन्द्रनीलमणिमयं स्थालं, तत्र निहितेन–धृतेन, दिनकररूपेण–सूर्यरूपेण, प्रदीपेन, **प्रस्तुतारात्रिकेणेव** प्रवर्तितनीराजनेनेव,
**कृतोपस्थानां** कृताराधनाम्। पुनः दूरम्, **उल्लसितैः** उत्थितैः, **दिगन्तैरपि** दिङ्मुखैरपि, **साभिलाषैरिव** सस्पृहैरिव,
**प्रतीष्यमाणपटुविलेपनामोदां** प्रतीष्यमाणः–अभिलष्यमाणः, गृह्यमाण इत्यर्थः, पटुः–उत्कटः, विलेपनामोदः–विलेपनगन्धो
यस्यास्तादृशीम् [ ह ]। पुनः **विबुद्धशकुनिकृतकोलाहलैः** विबुद्धैः–प्रबुद्धैः, शकुनिभिः–पक्षिभिः, कृतः कोलाहलो येषु
तादृशैः, **वेलावनतरुभिरपि** तटस्थवनवृक्षैरपि, **उद्भूतमदनोन्मादैरिव** आविर्भूतकामोन्मादैरिव, **परिवृतां** परिवेष्टिताम्।
पुनः **अन्तरिक्षेणापि** आकाशेनापि, **गलदवश्यायबिन्दुना** स्रवत्तुषारबिन्दुना, **बद्धस्मरस्वेदेनेव** धृतकामविकारात्मक-
घर्मोदकेनेव, **उत्सङ्गितां** क्रोडीकृताम्। पुनः **मन्दरान्दोलनात्** मन्दराचलालोडनात्, **पलायिताम्** अपसृताम्,
**मदिरायाः**, **मदशक्तिमिव** मनोविकारताशक्तिमिवेत्युत्प्रेक्षा। पुनः **मुष्टिनिपीडनात्** मुष्ट्या निष्कर्षणात्, **अनङ्गेक्षु-**
**चापयष्टेः** अनङ्गसम्बन्धीक्षुरूपधनुर्यष्टेः, **विगलितां** च्युता, **निष्यन्दधारामिव** रसप्रस्रवणधारामिव [ क्ष ]। **इति**
इत्थं, **कथारसाक्षिप्तचेतसि** कथाकौतुकाकृष्टहृदये, **समरकेतौ** तदाख्यप्रकृतनृपकुमारे, **स्ववृत्तान्तं** स्वकीयवार्ताम्,
**आवेदयति** विज्ञापयति सति, **लिखित इव** चित्रित इव, **निश्चलपक्ष्मलेखे** निर्निमेषनयनरोमावलीके, पुनः **अभिमुख-**
**प्रहितदृशि** अभिमुखव्यापारितलोचने, **सभ्यलोके** सभासज्जने, **तदीयमुखं** समरकेतुमुखं, पश्यति सति, पुनः **श्लथी-**
**कृतान्तरकथेषु** शिथिलितमध्यवर्तिकथानकेषु, पुनः **सकुतूहलं** सौत्सुक्यम्, **अन्तरा अन्तरा** मध्ये मध्ये, **विस्तारित-**
**हर्षकोलाहलेषु** विस्तारितहर्षजन्यकलकलेषु, **कमलगुप्तप्रभृतिषु** कमलगुप्तप्रमुखेषु, **आकर्णयत्सु** तत्कथां शृण्वत्सु,
**प्रचलितशिरसि** प्रकम्पितमस्तके, **मञ्जीरमुख्ये** मञ्जीरप्रभृतौ, **वन्दिवृन्दे** वन्दिगणे, **कथापञ्जरस्य** कथाविस्तारस्य,
**सप्रपञ्चं** सविस्तर, **सरसतां** रसवत्ताम्, **आकर्णयति** श्रवणेनास्वादयति सति, **हर्षोत्फुल्ललोचना** आनन्दोल्लसित-
नयना, **प्रतीहारी** द्वारपालिका, **सहसैव** अकस्मादेव, अतर्कितमेवेत्यर्थः, **प्रविश्य** प्रवेशं कृत्वा, **हरिवाहनं** तदाख्ययुव-
राजं, **व्यजिज्ञपत्** विज्ञापितवती, किमित्याह–कुमार ! **युवराजवार्ताद्भुतश्रवणेन** समरकेतुवृत्तान्ताश्चर्यश्रवणेन, **कर्णा-**
**मृतं** श्रवणेन्द्रियास्वाद्यामृतरसः, **अतिचिरम्** अतिदीर्घकालम्, **पीतम्** आस्वादितम्, **इदानीम्** अधुना, **एकं क्षणम्**,
**ईक्षणामृतं** नेत्रास्वाद्यामृतरसः, **आस्वाद्यताम्**, **इत्युदीर्य** इत्युक्त्वा, **दूरावनतपूर्वकाया** दूरम् अवनतम्–आनतं, पूर्वकायं–
शरीरपूर्वभागो यस्यास्तादृशी, **उपरितनवसनपल्लवप्रान्तसंयतम्** उपरितनेन पल्लवकोमलवस्त्राञ्चलेन बद्धं **दिव्यं**–मनोहरं
**चित्रपटं** चित्राधारवस्त्रं, **दक्षिणेन करेण** हस्तेन, **आदाय** गृहीत्वा, **सादरम्** आदरसहितम् **उपनिन्ये** उपजहार [ ज्ञ ]।